नाट्यं साहित्यमपि शास्त्रसंज्ञामलभत । 'हितेन सह वर्तते इति सहितम्, तस्य भावः साहित्यं नाम।' हितञ्च वस्तु सर्वस्यात्मैव भवति, स हि निरतिशय-प्रेमास्पदः । **आत्मनस्तु कामाय सर्वं प्रियं भवति** इति खलु कण्वाः समामनन्ति । एतादृशं निरतिशयप्रेमास्पदं वस्तु प्रतिपादयितुं यथा शास्त्रान्तराणि प्रवृत्तानि, तथैव साहित्यमपि । इयांस्तु विशेषः—शास्त्रान्तराणि वस्तुनस्तस्य प्राप्तये मार्गमङ्गुल्या निर्दिश्य निवृत्तव्यापाराणि, निर्दिष्टे च पथि गन्तुं यत्नोऽस्माभिरेव विधेयः । साहित्यशास्त्रन्तु तदधिगमाय क्लृप्ते मार्गे सहृदयानां करं परिगृह्य तान् बहुदूरं न केवलं प्रापयति, किन्तु रसाम्भोनिधौ अवमज्जयत्यपि ।

साध्वी काचन प्रेयसी आच प्रातः आच सायं क्लेशसाध्येषूच्चावचं कर्मसु सुभृशं परिश्रम्य गृहान् समागतं क्लान्त्या च समन्वितं प्रेयांसं सरससरसैः सुधाबिन्दुसमन्वितैः वचोनिचयैः परिसान्त्वयति, विविधैरातिथ्यैश्च सन्तर्पयति, कुमार्गगामिनञ्च तं तस्मान्निवर्तयति, सुशीतलैरपाङ्गैः आवर्तनोद्वर्तन-कम्पितगात्रयष्ट्या भुजोत्क्षेपणेन आकुञ्चितेन भ्रूविक्षेपेण अन्यैश्च नैकविधैर्हावैर्भावैश्च वशीकरोति, तथैव कालिदास-कविता-वनितेयम् अनवरतं दुःखबहुलैर्नश्वरैश्च सांसारिकैः क्लेशैः परीतं सहृदयं समाकृष्य तस्य श्रवयोर्नयनयोश्च कान्तासम्मित-शब्दार्थद्वारा सुधाबिन्दूनासिच्य सन्मार्गगामिनं विधाय पराञ्च निर्वृतिं प्रापयति । तदस्य महाफलस्य देशसमाजहितङ्करस्य सम्पिपादयिषया यथा आपस्तम्ब-गौतमादयो महर्षयः प्रवृत्ताः, तथैव कालिदासोऽपि ।

किञ्च—**असंशयं क्षत्रपरिग्रहक्षमा**
**यदार्यमस्यामभिलाषि मे मनः ।**

इतिपद्ये विमृश्यमाने कविकुलललामः कालिदासः दुष्यन्तस्य नायकस्य चारित्रसंरक्षणं यथाशास्त्रमर्यादं करोतीति विज्ञायते । अहं हि नायको 'महासत्त्वोऽतिगम्भीरः कृपावानविकत्थनः' इतिलक्षणलक्षितो धीरोदात्तः। अत्र च पद्ये विकत्थनत्वं प्रतीयत इव प्रतिभाति। किन्तु पूर्वमीमांसायां विधिमन्त्राऽधिकरणे 'यद् यदी'त्यादिशब्दानां विधिप्रतिबन्धकत्वमवस्थापितम् । मन उद्दिश्य आर्यत्वं चेद्विधीयेत तर्हि विकत्थनत्वं नायकस्य स्यात् । आर्यत्वस्य विधाने यच्छब्दः प्रतिबन्धकः । यच्छब्दस्तावत् स्वसमभिव्याहृतार्थस्य आर्यत्वस्य सिद्धान्तमवद्योतयति । दुष्यन्तस्यार्यत्वं प्रथममेव सिद्धम्, अतस्तदत्र न विधेयम् । अस्यां शकुन्तलायां यदार्यं मे मनोऽभिलाषि, तस्मादियं क्षत्रपरिग्रहक्षमा इत्यनुवाद्यकोटौ आर्यत्वस्य निवेशे सति न विकत्थनत्वदोषस्यावसर इति कवेराशयः ।

किञ्च—अयं महाभागो जगन्नियन्तारं परमपुरुषं तत्र तत्र काव्येषु वर्णयन् स्वस्यालौकिकाद्वैतत्वावलम्बित्वं प्रकटयतीति व्यक्तमेव तद्विरचितकाव्यरसास्वादजुषां सहृदयानाम् ।

**रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।**
**देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥**

इति रघुवंशीये पद्ये विमृश्यमाने परस्मिन् ब्रह्मणि प्रयुज्यमानस्य सत्यशब्दस्यार्थं महाकविरनेन निर्वक्तीति विज्ञायते। यथा हि मधुरैकरसमम्भः तत्तद्देशभेदसम्बन्धेषु यथापूर्वमेवाऽवतिष्ठते, तथैव निर्गुणं परं ब्रह्मापि त्रिभिर्गुणैः सत्त्वप्रभृतिभिरुपरञ्जितं सत्सगुणमिव भासते, निर्गच्छत्सु च तेषु तन्निर्गुणमेवाऽवतिष्ठते। अनया चोपमया नैकप्रकारानुपाधीन् अनुप्रविष्ट ईश्वर उपाधिसमवधानेऽपि तदीयैर्धर्मैर्न लिप्यत इति ध्वन्यते। एवम्—

**हृदयस्थमनासन्नमकामं त्वां तपस्विनम् ।**
**दयालुमनघस्पृष्टं पुराणमजरं विदुः ॥**

# कवि-भारती-परिषदः तृतीयमधिवेशनम्

वाराणसी। विगत-मार्चमासीये एकत्रिंशद्-दिनाङ्के श्रीदक्षिणामूर्ति - संस्कृत - महाविद्यालय-भवने कविभारती - परिषदः तृतीयमधिवेशनं महता समारोहेण सम्पन्नम्। अधिवेशनस्य सभा-पतिपदं विहारप्रदेशे सुख्यातविचक्षणैः, पञ्श्री विष्णुकान्त झा महाभागैरलङ्कृतमासीत्। नैकैः कविवरैः स्वीयाः सरसाः भावानुषक्ताः, ललिता अपि गभीरार्थाः कविताः श्राविताः।

परिषदो मन्त्रिवरैः श्री लीलाधर पन्त, एम० ए० साहित्याचार्यैः कादम्बरीकल्पं वार्षिकं विवरणं पठितम्। [ स्थानाभावेन तदक्षरशोऽत्र दातु-मसमर्था वयं स्पष्टमनुभवामो यत्साधारणमपि रसानानुषङ्गि वृत्तं नाम कविलेखनीसङ्गमेन कियत् सहृदयहृदयाह्लादकरं भवतीति। तदर्थं लेखकाः पन्तमहोदया नूनमभिनन्दनीयाः।—सम्पादकः] तैरस्मिन् कार्यविवरणे उक्तं यद् कविभारती-परिषदियं द्वाविंशत्युत्तरद्विसहस्रमिते वैक्रमाब्दे जनिमभजत। तस्मिन् वत्सरे चित्रकवयः श्री राम-रूप पाठक महोदयाः अस्या आध्यक्ष्यमलङ्कुर्वन्। श्रीवाणीपरिवस्याविधौ अग्निवेदाः शिवदत्त

---

इति पद्ये विमृश्यमाने यथा हि वेदान्तानि विरुद्धवदवभासैरपि वचननिचयैः **पश्यत्यचक्षुः स श्रृणोत्यकर्णः** इत्यादिभिः परब्रह्मणः स्वरूपमवबोधयन्ति, तथाऽयमपि अद्वैताभिमत-तत्त्वप्रतिपादने तामेव सरणिं यथायथमनुसरन् स्वस्य निगमान्त-वचस्सु अपरिमितां श्रद्धामाविष्करोतीति विज्ञायते।

एवमयं कविसम्राट् सरससरलैः पद्यैः काव्यानि विरचयन् तत्र च वेदवेदान्तधर्ममीमांसाद्यभ्यासैक-समधिगम्यं गहनतरविचारसम्प्रधारणीयमलौकिक-मौपनिषदं तत्त्वं साध्वीं चिरन्तनीं संस्कृतिम्, अनेका नीतीः, भूयसः श्रौतांश्च पदार्थानुपदिशन् स्वस्य ऋषिकल्पत्वं प्रतिपादयत्यहो कौशलं कालिदासस्य!

अत एव बोधपरेभ्योऽपि ग्रन्थेभ्यः काव्यस्या-धिक्यं **कान्तासम्मिततयोपदेशयुजे** इत्यादिना वर्णयन्ति मम्मटभट्टाः।

कवितल्लजोऽयं स्वतन्त्रोऽपि कदाचिद् रसवशो भूत्वा विचित्रेण प्रकारेण विविच्य विषयान् सुलभ-माकर्षति शासनीयान्। यथा हि मालिको मनोहरै-रेव सुमनोभिर्बन्धानुबन्धसरणिमाहृत्य विचित्रां मालां ग्रथ्नाति, तथैवायं मनोहरैः पदैः गरीयसीं कवितां सम्पादयति, अलङ्करोति च तया रसिकानां कण्ठतलं मनांसि च। किञ्चायं साकल्येन आलङ्का-रिकमर्यादां परिपालयन् सतीश्च कामपि शिक्षापद्धति-मौपनिषदश्च तत्त्वमुपदिशन् दिगन्तविश्रान्तयशा अधुनाप्यस्माकं हृदयसरोजेषु मधुकर इव गुञ्जारवं कुर्वाणो वर्तत इत्यहो धन्या वयम्। तस्येयं कविता शरदिव सरोहृदयं विमलं कुर्वाणा सम्प्रति रसिक-शिरोमणिभिः सानन्दमाद्रियते, एनामेव कविता-कलां चन्द्रकलामिवा आस्वाद्यास्वाद्य रसिकानां चेतःकुवलयमुत्फुल्लं सगन्धञ्च भवति। महाकविरयं स्वैरं कविताविपण्यां व्यवहारमाचरन् ग्राहकाणां शासनीयानाञ्च चञ्चलं मनः स्वकरे कृत्वा क्रय्य-मक्षयं बोधरूपं तेभ्यः प्रदाय इदानीमप्यस्माकं मार्गप्रदर्शको वर्तत इत्यभिधाय विरमामि।

चतुर्वेद महाभागाश्च मन्त्रिणोऽभवन्। द्वितीय-
वत्सरे कविताकान्तान्त:प्रसादने सर्वथाऽसम-
मर्मज्ञाः श्रीवटुकनाथशास्त्रि खिस्ते महाभागा अस्या
सभापत्यमकुर्वन्, कविकुलकुमुदकौमुदीनाथाः
श्री रतिनाथ झा महोदयाश्च मन्त्रिपदमभूषयन्।
तृतीयेऽपि कविताकामिनी कपोल - लोल - कर्णा-
वतंसाः डॉक्टर प्रियव्रत महाभागा वार्षिकं
सदसस्पतित्वमस्याः सभाजितवन्तः। अपरिहार्य-
कार्यवचः सर्वथाऽविचार्य शिरसा स्वीकार्यमिति
मन्त्रिकार्यञ्च एष जनो निर्वहति।

कविभारत्या प्रथमवार्षिकोत्सवस्य आध्यक्ष्यं
स्वर्गीयैः डॉ० उमेश मिश्र महाभागैः कृतम्।
द्वितीयवार्षिकाधिवेशनस्य अध्यक्षतायै डॉ० चन्द्र-
धरशर्माणो मनोनीता आसन्। परमकस्मात् स्वास्थ्य-
वैमुख्येन ते यथासमयमुपस्थातुं नाशक्नुवन्
इति डॉ० प्रियव्रतशर्मभिरेव तत्कार्यं निर्व्यूढम्।

प्रस्तुतमालोच्यरचनाकौशलं तदुज्जृम्भणाय
सञ्चालिता कविभारती कानिचिद् उद्देश्यानि
पुरस्कृतवती। यथा—१. संस्कृते नूतनकाव्यरचना
प्रोत्साहनम्, तदर्थं व्युत्पित्सूनां कवयतां व्युत्पन्न-
कविभिर्मार्ग-निर्देशनम्, समये नवनवानां सम-
स्यानामापूरणम्, स्वतन्त्ररूपेण रचनाविधावपि
समीप्सित - सहयोगप्रदानञ्च। २. नवविरचित-
काव्यानां समास्वादनार्थं प्रतिमासञ्च कवि-
गोष्ठ्या आयोजनम्। तत्रैव चागामिन्यां गोष्ठ्यां
पूर्तिसापेक्ष - समस्यानामुपन्यासः। ३. वर्षान्ते
चैकं विशिष्टं वार्षिकमायोजनम्। सति सम्भवे-
ऽन्यत्रापि कविगोष्ठीनां प्रवर्तनम्। ४. वर्षाभ्यन्तर-
पठितानां काव्यानां वर्षान्ते पुस्तिकाकारेण यथा-
शक्ति प्रकाशनम्। ५. राष्ट्रियेषु विशेषावसरेषु
तथा विशिष्टतिथीनां च शुभागमनेषु कविभारत्या
विशेषोपवेशनस्यायोजनम्।

अस्मिन् वत्सरेऽपि तेषु तेषु स्थानेषु कवि-
भारत्या मासिकान्यायोजनान्यभवन्। मईमासस्य
प्रथमे रविवासरे तथा अगस्त-अक्तूबर-नवम्बर-
मासानां प्रथमेषु रविवासरेषु च कविभारत्याः
स्थायिकार्यालय - स्थाने श्री रणवीर - विद्यालय-
च्छात्रावास-भवने कविगोष्ठ्यः समायोजिताः।
पश्चात् नवम्बरस्यैव सप्तदशतारिकायां 'खोजवाँ'
स्थे आदर्श - पुस्तकालये कविगोष्ठी आयो-
जिताऽऽसीत्। तदनु दिसम्बरस्य प्रथमरविवासरे
तथा च जनवरीमासस्यापि प्रथमादिने
कार्यालयकक्षे, तृतीये रविदिने श्री रणवीर-संस्कृत-
विद्यालयस्य वार्षिक - समारोहावसरे 'कमच्छा'-
स्थाने चायोजनान्यभवन्। मार्चस्य तृतीये सूर्य-
वासरे पुनः श्रीकेदारनाथमिश्राणामावासे कवि-
गोष्ठी जाता। इत्थमैषम संहत्य नववारं कवि-
भारत्या उपवेशनमभवत्। वसुन्धरा, वदन्तु
धीराः, प्रणामाञ्जलिः, कादम्बिनी, कथेयम्,
वसन्तः, एवमादिकाः समस्याः कविभिः समाहिता-
स्तथा स्वतन्त्रतया विविधविषयेषु रचितानां
कवितानां पाठञ्च समये समये तत्तद्गोष्ठीषु
कवयोऽकुर्वन्।

सैषाऽत्यल्पीयसाऽपि कालेन मृद्नन्ती विघ्न-
कण्टकान्, निरस्यन्ती नैराश्यतमोनिवहान्
असंख्यसंख्यावतां सहयोगसौहार्दालवालवल-
यिताऽऽनन्दोपवने समुत्पाद्य समारोपिता जङ्गमा
सेयं कविभारती लता पल्लविता पुष्पिता फलिता
सती लोकवलयं रञ्जयन्ती स्वसौभाग्यचन्द्रोदय-
दर्शनप्रमोदमधिगच्छत्वित्येव दृढमाशास्महे—

अद्य स्वजन्मदिवसावसरे समोदा साऽऽशीर्वचांसि भवतामभिकामयाना।
बाला त्रिहायनमिता विनतेन मूर्ध्ना सर्वान् मुदा प्रणमते कविभारती वः॥

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराणसी।**

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य

मासिकं मुखपत्रम्

वर्षम् ४५

अङ्कः ५

सम्पादकः

गो० न० वैजापुरकरः

मई

१९६९

वार्षिक-मूल्यम्

५) रूप्यकाणि

प्रत्यङ्क-मूल्यम्

अर्धरूप्यकम्

## दिव्यं प्रेम तदीयम्

१. लोके यो व्यथितानां प्रेमी धन्यं प्रेम तदीयम् ।
मानव ! दिव्यं प्रेम तदीयम् ।।

२. संसारः सुखिनं कामयते,
विपद्गतं दूरत उपेक्षते ।
सञ्जातः प्रणयो व्यापारो,
विडम्बना महतीयम् ।।

३. रसना ते वाञ्छति माधुर्यम्,
दृष्टिश्चिनुते तनु-सौन्दर्यम् ।
कथमुपेक्ष्यते दृग्जलधारा,
पुण्यमयी गङ्गेयम् ।।

४. त्वं यदि सद्भावना-विक्रयी,
यदि वेन्द्रिय-सुखकामो विषयी ।
तदा पावनं प्रेमपदं मा,
कलङ्कितं करणीयम् ।।

५. दयितो निखिल-सृष्टिविस्तारः,
साक्षादयं प्रभोराकारः ।
लभतां प्रेम सदा निर्व्याजम्,
जयदेतद् रमणीयम् ।।

—डॉ० शिवशरण शर्मा

## आर्य-महिला ● स्वर्णजयन्ति-विशेषाङ्कः

प्रकाशिका—आर्यमहिला - हितकारिणी - परिषद्, भारतधर्ममहामण्डलम्, जगत् गंज, वाराणसी। प्रधान सम्पादिका—श्रीमती सुन्दरी बाई पाइ एम० ए० बी० टी०। सम्पादकः—श्री परमहंस मिश्रः, एम० ए० साहित्याचार्यः। आकार—डबल क्राउन ८ पेजी। पृष्ठसंख्या—३२०। सचित्रः, सावरणश्चायं विशेषाङ्कः। वार्षिक-मूल्यम्—पञ्च रूप्यकाणि।

अस्यां शताब्दौ सनातन-वैदिकधर्मरक्षणविधौ समग्रं सर्वाङ्गीणं सामूहिकञ्च सततं प्रयत्नं समनुतिष्ठद् यत्किमपि सङ्घटनं वक्तुं शक्येत तदा तन्नूनं श्रीभारतधर्ममहामण्डलं नाम। परमाराध्यानां महर्षि-श्री ज्ञानानन्द स्वामिपादानामशेषया तपश्शक्त्या समुपबृंहितमिदं सङ्घटनमद्यापि यथाशक्ति सर्वेषु धार्मिकक्षेत्रेषु सोत्साहं प्रयतमानं दरीदृश्यते। साम्प्रतिकं युगप्रभावप्रभवं सर्वतोमुखीनं धर्मह्रासमालक्षयमाणैः स्वामिपादैः आदित एवोक्तं यदस्यामपि परिस्थितौ प्रत्यक्षफलानापादकोऽपि धर्मरक्षण-प्रयत्नो नूनं बीज-रक्षणमिव जायेत। रक्षिते बीजे पुनरपि कदाचित् सहस्रशाखस्य सफलस्य संसारप्रचण्डचण्डांशु - तापतप्तानां सच्छायिनो महीरुहस्य आशा कर्तुं शक्या। गुरुदेवानाममुमेव मन्त्रमद्यापि सक्रियं जपन्ति तदीयाः प्रेष्ठाः अनुगृहीता अन्तेवासिन्यः पूज्याः श्री विद्यादेवी महोदयाः। तासामेव तत्त्वावधाने श्री भारतधर्ममहामण्डलम्, तदन्तर्गताश्च-आर्यमहिला - हितकारिणी-परिषद्, आर्यमहिला - उपाधि - महाविद्यालयः, उपदेशकमहाविद्यालयः, भारतस्य प्रमुखतमं संस्कृतमासिकपत्रं 'सूर्योदयः', विश्वेश्वरन्यासः ( ट्रस्ट ), प्रकाशनविभागः, पराम्बायाः श्री गायत्रीदेव्याः मन्दिरम्, गोशाला, यज्ञसंस्था एवमाद्याः नैकाः संस्थाश्च प्रचलन्ति। सर्वाश्चैताः संस्थाः स्व-स्व-

[ शेषांशः ३ आवरणपृष्ठे द्रष्टव्यः ]

## अनुक्रमः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षे ] वाराणसी, वैशाखः २०२६ : मई, १९६९ ई० [ ५ अङ्कः


## गङ्गां श्रयेदात्मविशुद्धिकामः

१. इरावतीं मधुमतीं पयस्विनी - ममृतरूपा - मूर्जस्वतीम् ।
त्रिदिवप्रसूतां गङ्गां श्रितासस्त्रिदिवं व्रजन्ति ॥

२. ऋषिजुष्टां विष्णुपदीं पुराणां सुपुण्यधारां मनसा हि लोके ।
सर्वात्मना जाह्नवीं ये प्रपन्नास्ते ब्रह्मणः सदनं सम्प्रयान्ति ॥

३. लोकानिमान्नयति या जननीव पुत्रान् स्वर्गं सदा सर्वगुणोपपन्ना ।
स्थानमिष्टं ब्राह्ममभीप्समानैर्गङ्गा सदैवाऽऽत्मवशैरुपास्या ॥

४. उस्रैर्जुष्टामिषतीं विश्वरूपामिरावतीं जनयित्रीं गुहस्य शिष्टैः ।
सेव्याममृतां ब्रह्मकान्तां गङ्गां श्रयेदात्मविशुद्धिकामः ॥

५. बहिःस्थितं जलं यद्वन्नारिकेलान्तरे स्थितम् ।
तथा ब्रह्माण्डबाह्यस्थं परब्रह्माम्बु जाह्नवी ॥

६. तूलशैलः स्फुलिङ्गेन यथा नश्यति तत्क्षणात् ।
तथा दोषाः प्रणश्यन्ति गङ्गाम्भःस्पर्शनाद् ध्रुवम् ॥

७. पापपांसु - महावात्या पापद्रुम - कुठारिका ।
पापेन्धन - दवाग्निश्च गङ्गेयं पुण्यवाहिनी ॥

काशीखण्डतः ] —श्री महर्षिः वेदव्यासः

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

—स्वर्गीयाः श्री विन्ध्येश्वरीप्रसाद शास्त्रिणः—

एतदात्म-विधिसाधनादृते नान्यवर्ण इह सत्पथं व्रजेत् ।
मानवा अनुसरन्ति भूतले नायकानिह सतोऽसतोऽपि वा ॥ ३१ ॥

३२. तीर्थधामनि वसेत् पुरोधसः
स्युर्हि सात्त्विकहृदो यदा तदा ।
पुण्यतीर्थमटतां मनस्स्वहो
जागृयात् किमु न धर्मभावना ॥

३३. स्वीयकर्मनिरता तपस्विनी
निम्नजाति - रपमन्यते सदा ।
चेन्मतान्तरसमाश्रिता भवेत्
सा समादर-दृशा विलोक्यते ॥

३४. नैजकर्मणि रतोऽस्ति यो नरः
श्रेष्ठतामधिगतः स एव हि ।
उच्चवर्ण-जननोऽपि पापकृद्
गर्हणीय इति शास्त्रडिण्डिमः ॥

३५. भारतं न निजजन्म-भूस्तथा
हिन्दवोऽन्यत उपस्थितास्त्विह ।
बालसङ्घ इति विब्रुवाणया
शिक्षया दनुजकन्यया - ऽद्यते ॥

३६. सम्भवस्तु नहि राम-कृष्णयोः
केवलं तु कविकल्पितावुभौ ।
नाशितं न इतिवृत्तमद्भुतं
शिक्षयाऽद्य विपथायिता वयम् ॥

३७. ऐतिहासिक - विपश्चिदग्रगा
विश्ववन्द्य - समुपधि-धारकाः ।
शिक्षकास्तु नहि वक्तुमीशते
हन्त भीष्मजनकस्य कः पिता ॥

३८. आङ्ग्लदेश-जनुषां तु ते नृणां
सर्वमादित उदन्त - मादरात् ।
आरटन्ति सततं परिश्रमैः
शिक्षया - ऽलमनया - ऽधुनेदृशा ॥

३९. मानवार्यजन - पुरुषाः पुरा
सद्विवेक - रहिता वनेचराः ।
बिभ्रते स्म पशुतुल्यतामिदं
शिक्षयन्ति गुरवः पुराविदः ॥

त्रिःसहस्रमित-हायनावधिः ख्रिस्त-जन्म-समयात् पुराश्रुतेः ।
संविकास इति घोषयन्ति ते पश्चिमीय-बुध-चोद्यबुद्धयः ॥ ४० ॥

( क्रमशः )

सम्पादकीयम्

दिवङ्गतेभ्यो राष्ट्रपतिभ्यः सप्रश्रयः श्रद्धाञ्जलिः

# 'सर्वं भारतं मे गृहम्, सर्वे भारतीया मे पारिवारिकाः !'

ऐषमस्तृतीयो मई-दिनाङ्को नूनमस्माकं भारत-राष्ट्रस्य कृते अतितरामभिशप्त इवाऽभवत्। दिनेऽस्मिन् अस्मद्राष्ट्रस्य पदासीनास्तृतीया राष्ट्रपतयः डॉक्टर जाकिर हुसेन महाभागाः अकस्मात् करालेन कालेन अस्मत्तोऽपहृत्य कवलीकृताः, यस्य दारुणा कल्पना तेषां मरणदिनेऽपि प्रातर्यावन्नासीत्। अस्माकं कृते अदृष्टपूर्वोऽयमवसरः। यतो हि प्रथमराष्ट्रपतयः डॉ० राजेन्द्रप्रसाद महाभागाः राष्ट्रपतिपदं समुपभुज्यैव स्वर्गताः। द्वितीयराष्ट्रपतयः डॉ० सर्वपल्लि राधाकृष्णन् महोदया अपि सादरं पदमिदं समलङ्कृत्य यावदवधि तदुपभुज्य गृहीतावसरा इदानीं प्रशस्तं जनजीवनं जीवन्ति। परं तृतीयराष्ट्रपतय एते डॉ० हुसेन महाभागाः पुनः पाञ्चवार्षिके कार्यकाले वर्षद्वयादूनमेव तत्पदमुपभुञ्जाना मध्यावधावेव कुटिलेन कृतान्तेन बलान्नीताः। राष्ट्रपतिः किल समग्रस्य राष्ट्रस्य प्रतिनिधिर्भवति, राष्ट्रस्य सर्वप्रथमो नागरिकः, प्रधानसेनापतिश्च। सप्ताङ्गं राज्यं तत्रैवाऽशेषतः प्रतितिष्ठति। अतोऽर्थत एव असामयिकं तदवसानं समग्रस्य राष्ट्रस्य कृते परं दुर्भाग्यपदम्। न जाने किमपराद्धमस्माकं राष्ट्रेन, को वा महापुरुषः अवमानितोऽनेन यद्दुरदृष्टवशात् तदीयो राष्ट्रपतिरित्थम् अपहारितोऽभवत्! इतः कियत्पूर्वमेव राष्ट्रियमहासभायाः कांग्रेससंस्थाया महाधिवेशनस्य महार्घो नूतन-निर्मापितः सभामण्डपोऽकस्मात् प्रचण्डेन दहनेन स्वाहाकृतः, महावात्या तदीया प्रदर्शनी च विशृङ्खलिता, राष्ट्रगुरूणाम्, नहिनहि जगद्गुरूणां प्रतिकृतिः सामान्यजनवत् प्राचीनतमसंस्कृतिनिधिना देशेनानेन सम्प्रदर्शनं दग्धा! सर्वा एता असामान्या घटना एव। किमप्यस्तु, नूनं राष्ट्रस्य महती हानिर्यत् तदीय-सर्वोच्चराष्ट्रपुरुषस्य इत्थमकस्माद् असामयिकश्च विलोपो नाम!

एतेषां राष्ट्रपुरुषाणां महनीय-व्यक्तित्वदृष्ट्या विचार्यमाणे पुनरियं क्षतिः शतशतगुणिता परिदृश्यते। निर्विचिकित्समेतत् यत् डॉ० हुसेन महाभागाः भारतीय-संविधानेन समनुगृहीतस्य 'सेक्युलर'-शासनस्य आदर्शशासका आसन्। 'सेक्युलरिज्मा'ख्य-वादस्य अधार्मिकता धर्मविहीनता वाऽर्थः पाश्चात्य-राजनीत्यैव अनुगृहीतुं शक्यः। भारतीयराजनीतिः पुनरस्य धार्मिक-पक्षपातशून्यतारूपमेव अर्थं समनुगृह्णीयात्। पूर्वे राजनयिकाः, नव्यस्य भारतराष्ट्रस्य राष्ट्रपितृगौरवमाभजन्तो महात्मगान्धिनश्चापि मूलतो धार्मिका एव। सत्येवमत्र 'सेक्युलर'शब्दस्य अधार्मिकतारूपार्थस्य प्रसर एव नास्ति। भारतराष्ट्र दृष्ट्या ये तथाऽभ्युपगच्छन्ति, ते नूनं भ्रान्ताः। अपि च स्वयमधार्मिकः सर्वेषां धर्माणामविशेषेण सुस्थित्याधायकः कथं स्यात्, यदर्थमेवायं वादः समनुगृहीतः संविधानेन ? सर्वधर्म-सुस्थितिकरण-

भावस्य अधार्मिके शासके तमःप्रकाशवत् एकत्र प्रसराभावात्। अस्माकमेते राष्ट्रपतयो व्यक्तिशो यावने धर्मे दृढामाचारनिष्ठां धारयन्तोऽपि सर्वेषां धर्माणां सम्मानने तथैव परामुदारतां भजन्तो नैकेषु प्रसङ्गेषु दृष्टाः भारतीयैः। अद्यापि न विस्मार्यते यत्तैः दिल्लीराजधान्यां समायोजितायां रामलीलायां स्वहस्तेन परया भावनया भगवतो रामभद्रस्य राजतिलकः कृत आसीत्।

भारतराष्ट्रं किल विश्वस्मिन् प्राचीनतमं राष्ट्रम्। अस्य चिरन्तनी सुपरिष्कृता विश्वतोमुखी प्राणिमात्रहितङ्करी काचन संस्कृतिरुल्लसति। तां सर्वतः समादृत्य राष्ट्रं प्रति दृढां निष्ठां दधानः कोऽपि मानवोऽत्र सुखेन निरातङ्कं वसन् स्वस्वधार्मिकविधिपालनाय सर्वथा स्वतन्त्र इति भारतीयानाम् ऋषि-महर्षीणां सुनिर्धारितं निर्विचिकित्सितं मतम्।

डॉ० जाकिर हुसेन महाभागैरस्माकं राष्ट्रपतिभिस्तदिदं पूर्वैः प्रस्तोतितमनुशासनं यथावत्परिपालितं स्वीये राष्ट्रपतित्वकाले इति तादृशस्य राष्ट्रपतेरभावः कथं न भारतीयानां चेतांसि परं खेदयेत्?

डॉ० हुसेन महाभागाः महात्मगान्धिनः सुदृढा अनुयायिन आसन्। मूलत एव ते तथाकथित-साम्प्रदायिकतातो घृणां कुर्वते स्म, या हि भारतराष्ट्रं सर्वदा स्वाधीनं स्थापयितुम् आंग्लशासकैर्नवेन राष्ट्रेऽस्मिन् समुद्भाविता। अलीगढविश्वविद्यालयस्तदा तेषां वैदेशिक - शासकानां कूटनीतेरेकं स्रोतोऽभवत्। साम्प्रदायिकताविस्तारेण सहैव आंग्लभाषा-संस्कृतेः भारते स्थिरीकरणमपि तेषामुद्दिष्टमासीत्। उभयमेतद् विश्वविद्यालयेनानेन तदा परया निष्ठया सम्पाद्यते स्म राष्ट्रियनिष्ठाप्रतीपभूतया। तत्रैव अलीगढनगरे एम. ए. ओ. समधीत्य प्रबुद्धो युवा जाकिर हुसेनः स्वीयमूलस्वभावानुसारं तथाकूटनीत्या सर्वथा विरतः महात्मगान्धिनो देशस्वातन्त्र्य-महाभियानेन परं समाकृष्टोऽभवत्। फलतोऽचिरादेव तेषामन्तेवासित्वं भजन्नयं महाभियानस्य क्षेत्रमेकं राष्ट्रियशिक्षां स्वकार्यक्षेत्रमकल्पयत्। वैदेशिकशासनस्थैर्या - ऽऽपादिकां कर्णिक - निर्मितिमात्रफलां शिक्षां राष्ट्रघातिनीं निश्चित्य महात्मगान्धिना 'बुनियादी शिक्षा'-नाम्ना सोद्योगा शिक्षाप्रणाली परिचालिता स्वातन्त्र्य - महाभियाना - ऽङ्गविशेषरूपेण। तामेव दिशमनुसृत्य डॉ० हुसेन महाभागेन 'जामिया मिलिया'-नाम्नी शिक्षासंस्था संस्थाप्य परिचालिता। अनया शिक्षासंस्थया तैरुद्दिष्टं यद् आंग्लकूटनीति-स्रोतस अलीगढ-विश्वविद्यालयस्य कुफलं यथा निरुद्ध्येत, भारते वसत्सु सर्वेषु सम्प्रदायेषु च राष्ट्रियतायाः यथा प्रसारो भवेत्, तथा प्रयतनीयमिति। आन्तं यावत् तैरियं शिक्षापद्धतिः नैकान् अन्तरायानपि अविगणय्य साटोपं प्रोत्साहिता समुज्जीविता च।

राष्ट्रियभावाधानेन सह स्वावलम्बिताया अपि लाभोऽनया शिक्षा-पद्धत्या जायते। राष्ट्रियभावभरितं स्वावलम्बिनश्च पुमांसं समाजं राष्ट्रं वा को नाम मातुर्ललनः कदापि पारतन्त्र्यशृङ्खलाभिः बद्धुं शक्नुयादिति न वक्तव्यं शिष्यते शिक्षाविशारदानां विदुषाम्। इत्थं डॉ० हुसेन महोदयानां राष्ट्रिय-स्वातन्त्र्य-सङ्ग्रामे भौगोलिकस्वातन्त्र्यलाभोत्तरम् आर्थिकस्वातन्त्र्य-प्रतिष्ठापनेऽपि महान् दायो वक्तुं शक्यते।

राष्ट्रभक्तिरेव एतान् उच्चशिक्षार्थम् आंग्लदेशे प्रस्थितानपि मध्येमार्गं ततो विरज्य जर्मनदेशे गत्वा तत्रैव शोधशिक्षा-ग्रहणाय प्रैरयत्। सपरि-

श्रमं समुल्लेख्यं शोधकार्यं संपाद्य अर्थशास्त्रे 'डाक्टरो'पाधिश्च ततः सम्पादितः। तत्र निवसद्भिरेभिः नैकेषां बहुमूल्यानां ग्रन्थानाम् उर्दू भाषयैव अनुवादः कृतः, बहुप्रचारिता आंग्लभाषा अनुवादकर्मणि नादृता—इदमपि तेषां मातृभाषाप्रेम्णो देशभक्तेश्च एकं प्रमापकम्। देशभक्तिप्रेरिता एव एते एकवारम् अलीगढ-विश्वविद्यालयस्य उपकुलपतिपदं स्वीकृत्य तत् शिक्षासंस्थानं राष्ट्रियभावतीर्थेन शोधयितुमपि प्रायतन्। परमन्ततः श्वपुच्छायितस्य तस्य संशोधने साफल्यमलभमानास्तत्पदं तत्यजुरित्यत्रापि तेषां देशभक्तिरेव परं प्रेरिका।

तथाकथिता साम्प्रदायिकता तेषां चेतसि कीदृशी शल्यवत् पीडाकरी जायते स्म इत्यस्य ज्वलन्निदर्शनम् १९४६ मितेशवीयवत्सरे नवम्बरमासस्य षोडश (१६) दिनाङ्के 'जामिया मिलिया'-संस्थाया रजतजयन्ती-महोत्सवावसरे तैः प्रदत्तमैतिहासिकं भाषणमेव वक्तुं शक्यते। तत्रैकस्मिन् सभामञ्चे स्वीयेन असाधारणेन व्यक्तित्वेन परस्परविरुद्धान् नेतॄन् सर्वश्री जवाहरलाल नेहरू—मौलाना अबुल कलम आजाद—मुहम्मद अली जिन्ना—लियाकत अली - प्रभृतीन् सम्मेल्य तेषां पुरत एतैरुक्तम्—

"इयमेका ज्वाला (साम्प्रदायिकोन्मादप्रभवा तत्कालीना) अद्यास्माकं महति मानवतासमलङ्कृते देशे प्रज्वलति। एवंस्थितौ सज्जनतायाः संवेदनशीलतायाश्च पुष्पाणि कथं विकसेयुः?··· कथं नाम तत्र भवन्तो विज्ञानां जगति मानवताया रक्षां कुर्युः? ममैते शब्दा अतितरां कटुकाः प्रतीयेरन्। किन्तु तीव्रतया दोषाप्लुतत्वं भजन्त्यां साम्प्रतिक्यां परिस्थितौ नूनमेते साधारणतमा एव शब्दाः। अल्पवयसां बालकानां सम्माननस्य कार्यमस्माभिरङ्गीकृतमास्ते। परितः आतङ्कपूर्णायामस्यां स्थितौ यदा वयं पश्यामो यत् तपस्विनां बालानामपि जीवनं सुरक्षितं नास्ति, तदा घोरया व्यथया चेतः खण्डशो विभिद्यते, यद्धि सर्वथा अपरिहार्यमास्ते। केनचन भारतीयकविना उक्तमस्ति यत् जगति जायमानः प्रत्येको बालः सहैव सन्देशममुं वहन्नायाति यद्यापि मानवं प्रति परमेशितुरास्था न विलुप्तेति। किन्तु किमस्मद्देशवासिनां स्वात्मीयो विश्वास एतावान् विलुप्तो यत् निरागसान्येतानि कुड्मलानि विकसनात्पूर्वमेव परिमर्दयितुं न सङ्कुचामः? परमात्मनः कृते भवन्तः सर्वे शान्तेन चेतसा विचारयन्तु, घृणाज्वाला-मालाश्चैताः शमयन्तु। नायमवसरो निर्णयस्यास्य यत् कोऽस्ति अस्य उत्तरदायी, किञ्चास्य कारणमिति। अग्निर्दन्दह्यते; कृपया शमयन्त्वेनम्। नायं विषयो यदस्मिन् कः सम्प्रदायो भस्मसाद् भवेत्, को वा जीवेत्। अद्यास्मभ्यं सभ्यमानवजीवनवर्वरतयोःएकतरत् निर्वाचनीयमास्ते। परमेश्वरस्य कृते एवं मा कुर्वन्तु यदस्माकं देशतः सभ्यजीवनस्य मूलमेव समुन्मूलितं स्यात्" इति।

इत्थं सर्वथा देशभक्ताः तथाकथित-साम्प्रदायिकतातो नितरामसम्पृक्ता राजनयिकाः डॉ० हुसेन महोदयाः साहित्ये सङ्गीते कलायाञ्च सविशेषं सक्रियं वैशारद्यं भजन्ते स्म, यच्च तेषाम् उर्दू-भाषीयैः नैकैः काव्यैः, 'जामिया मिलिया'-भवनगतेन भव्येन पाटलोद्यानेन, पुरातत्त्वसम्बद्ध-कलाकृतीनां सङ्ग्रहादिभिश्च सुस्पष्टम्। आदर्श-राजनयिकत्वं संवेदनशील सहृदयसाहित्यिकत्वञ्च प्राय एकत्र दुर्लभं जायते। डॉ० हुसेन महोदयेषु ते गङ्गा-यमुनयोरिव तीर्थराजे मिथः सङ्गते आस्ताम्।

राष्ट्रभाषा हिन्दीविषये पुनस्तेषां समादरः सर्वथा स्तुत्योऽनुकरणीयश्च। प्रथमराष्ट्रपतिभिः

डॉ० राजेन्द्रप्रसाद महाभागैः भारतीय-संविधान-निर्देशमनुपालयद्भिः संसदुद्घाटनादि-राष्ट्रियावसरेषु दीयमानं स्वीयं भाषणं पूर्वं राष्ट्रभाषायां हिन्द्याम्, ततः परमेव अन्ताराष्ट्रियम्मन्यायाम् आंग्लभाषायां दीयते स्म। स च क्रमो द्वितीयराष्ट्रपतिभिः डॉ० सर्वपल्लि राधाकृष्णन् महाभागैर्न परिरक्षितः। तृतीयराष्ट्रपतिभिः डॉ० हुसेन महाभागैः पुनरपि तं क्रमं परिचाल्य भारतीय-संविधाननिष्ठा राष्ट्रभाषाप्रेम च स्फुटं प्रकटीकृतम्। शुद्धहिन्दीभाषानिबद्धं स्वीयं भाषणम् उर्दू लिप्यां विलिख्य वाचयतामेतेषां कृते कदाचन शब्दविशेषस्य उच्चारणं दुश्शकं जायते स्म। नैकदा संसत्सदस्यश्री प्रकाशवीरशास्त्रि-सदृशैः महानुभावैस्ते समनुरुद्धा यदेतादृशानां शब्दानां स्थाने उर्दू भाषीया शब्दाः किमिति नाद्रीयन्ते तत्र भवद्भिरिति। तदुपरि राष्ट्रपतिभिरुक्तम्—'तदा तद्भाषणं हिन्दीभाषीयं कथं वक्तुं शक्नुयात्? अन्यच्च, उर्दूभाषायां भाषणस्य परम्परां प्रारभ्य नूत्नं विवादं समुत्थापयितुं नाहं मनाक् कामये' इति। एतेनैव तेषां राष्ट्रभाषानिष्ठा स्फुटीभवति।

डॉ० हुसेन महोदया आदर्शवादं सर्वथा मानयन्तोऽपि सर्वतोऽधिकं यथार्थवादं स्वीयेन समग्रेण आचारेण पुपुषुः। ते प्रायो वदन्ति स्म यद् 'गतः कालो महत्तरादर्श-समलङ्कृतस्य भाषणपूरापादनस्य! साम्प्रतं स्वल्पं वदन्तु, बहु च कुर्वन्तु' इति। स्वयमपि यावज्जीवं तैरेतदर्थं प्रयतितम्। स्पष्टवादिता हि यथार्थवादिन आनुषङ्गिको गुणः। डॉ० हुसेन महोदयेषु सोऽपि स्फुटं परिदृश्यते। राजधान्यां समायोजिते प्रथमे राष्ट्रिय-सम्मेलने तदा बिहारप्रदेश-राज्यपालपदेन तैः स्पष्टमुक्तं यद् 'यत्र देशे मौलाना आजाद-सदृशानां मूर्धन्यराष्ट्रिय-व्यक्तीनां कृतेऽपि निर्वाचन-साफल्याय रामपुर-गुडगाँव-सदृशानि यवनबहुल-क्षेत्राणि बलात् समादरणीयानि भवन्ति, कथन्नाम तत्र राष्ट्रियमैक्यं स्थापयितुं शक्यते? स्पष्टमेतत् यत् साम्प्रतिक्या राजनीत्या जाति-धर्माग्रहोऽतितरां प्रोत्साह्यते। अत इदं परमावश्यकं यद् यत्र यस्या जातेः धर्मस्य चानुयायिनां संख्याबाहुल्यं तत्र तद्भिन्नजातीयाः, तद्भिन्नधर्मीयाश्च निर्वाचनाय प्रस्तोतव्याः' इति।

राष्ट्रपति-पदग्रहणानन्तरं तु तेषामेते सर्वथा स्पृहणीया गुणाः अहमहमिकया स्वात्मनः सुषमां प्रकाशयितुं प्रयतमाना दृष्टा अस्माभिः सर्वैः भारतीयैः। एतत्पदग्रहणसमये प्रथमभाषणे एव तैर्यदुक्तं यावज्जीवं तत्प्रामाणिकतया समनुष्ठितमित्येव तेषां महतो व्यक्तित्वस्य समयावधानतायाश्च निदर्शनम्। अत एव भारतराष्ट्रिय-स्वातन्त्र्यसङ्ग्रामादारभ्य अद्यावधि देशभक्त-राष्ट्रियनेतृरूपेण प्रथितान् यवननेतॄन् सर्वानतिक्रम्य सर्वोच्चं राष्ट्रनेतृपदं स्वायत्तीकृत्य डॉ० हुसेन महोदयैः सर्वेषां भारतीयानां चेतस्सु स्थिरं पदं कृतम्। कामं तेऽद्य राजधान्यां जडे राष्ट्रपति-सिंहासने समासीना न दृश्यन्ते, तथापि भारतराष्ट्र-जनानां चेतने चेतः-सिंहासने विद्योतन्त एव, सर्वदा विद्योतयिष्यन्ते च।

राष्ट्रपतिपदे समासीनानां तेषां तात्कालिकः सर्वोऽपि व्यवहारः, तत्पदग्रहणकालिकस्तेषां सन्देशश्च भारतराष्ट्रे वसतां सर्वधर्मीयानां कृते मार्गदर्शको भवेत्। तथैव वास्तवं कर्मापि धर्मं समाश्रयन् कोऽपि भारतीय एवमेव राष्ट्रस्य सर्वोच्चं पदमलङ्कर्तुं प्रभवेदित्यपि सङ्केतयति तेषामयमाचारः सन्देशश्च। अन्ततस्तेषां भारतवसुन्धरा-सुपुत्ररत्नानां चरणयोः सप्रश्रयं श्रद्धाञ्जलिं समर्पयन्तो वयं तेषाममुं राष्ट्रपतिग्रहणकालिकम् ऐतिहासिकं सन्देशं मुहुर्मुहुः स्मरामः—

# मानस-भारती--देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए० साहित्याचार्यः—

इतो रामोऽनुजं दृष्ट्वा चिचिन्त बहुशो बहिः।
ऊचे च सीतां त्यक्त्वैकामुल्लङ्घ्याज्ञां किमागतः॥
तात रक्षःकुलान्यत्र चरन्ति विपिने सदा।
नाश्रमे वर्तते सीता भातीत्थं मम चेतसि॥
पादौ स्पृष्ट्वा लक्ष्मणस्तु बद्धाञ्जलिरभाषत।
नाथ कोऽपि न दोषो मे ततस्तेन सह प्रभुः॥
ययौ निजाश्रमं रामो गोदावर्यास्तटे स्थितम्।
तं दृष्ट्वा जानकीहीनं विकलः प्राकृतो यथा॥
विललाप च हा सीते गुणानां खनि जानकि।
नियम-व्रत-शीलेषु रूपे च परिनिष्ठिते॥
ततः सौमित्रिणाऽऽश्वस्तो ययौ पृच्छन् लतास्तरून्।
खगा मृगा अलिकुला दृष्टा किं मृगलोचनी॥
कपोत-खञ्जन-शुकाः कोकिला हरिणाऽलयः।
विद्युच्चन्द्रः शरत्पद्मं दाडिमं कुन्दकोरकः॥
हंसो व्याली पाशिपाशः कामचापो गजो हरिः।
प्रशंसामद्य शृण्वन्ति सर्व एते स्वसङ्गताम्॥
कदली श्रीफलं स्वर्णमित्येते त्वां विना प्रिये।
हृष्टा ननु प्राप्तराज्याः शङ्का-सङ्कोचवर्जिताः॥
सहसे किमिमां स्पर्धां प्रिये कस्मान्न दृश्यसे।
स्वामीत्थं मार्गमाणस्तां विलापं कुरुते सृतौ॥
नूनं महावियोगी स्यादत्यन्तं कामुको नरः।
सुखराशिः पूर्णकामोऽजो नित्यो राघवः प्रभुः॥
करोत्यद्य वने मर्त्यचरितं विलयंस्तथा।
ततो रामः पुरोऽपश्यद् गृध्रेशं पतितं भुवि।
पादौ स्मरन्तं कुलिशध्वजाङ्कौ तस्य शोभनौ॥

दयाम्बुधिस्तस्य रघुप्रवीरः पस्पर्श शीर्षं स्वकराम्बुजेन।
विलोक्य रामं द्युतिधाम कामं गृध्रस्य पीडा लयमाप तूर्णम्॥ ३०॥ (क्रमशः)

---

"राष्ट्रेणाऽयं सम्मानः एकस्मै साधारणशिक्षकाय प्रदत्तो येन सप्तचत्वारिंशद्-वर्षपूर्वमिदं सङ्कल्पितं यत् स्वीयजीवनस्य सर्वोत्तमानि वर्षाणि राष्ट्रियशिक्षणे नियोजयिष्ये इति। मया सार्वजनिकं जीवनं गान्धिनश्चरणेषु उपविश्य प्रारब्धम्। ते एव मे मार्गदर्शकाः प्रेरणास्रोतश्च। राष्ट्रसेवाया नवेऽस्मिन्नवसरे अशेषशक्त्या एतदर्थं प्रयतिष्ये यदस्माकं जनता तस्मिन् लक्ष्ये प्रगतपदा भूयाद् यदर्थं गान्धिनः अविरतं सङ्घर्षं कुर्वन्त आसन्। व्यक्तिगत-सामाजिक-जीवनयोः पवित्रता, साध्यवत् साधनस्यापि पावित्र्यम्, शोषित-दलितान् प्रति सक्रिया सहानुभूतिः, भारतीयानां विभिन्नवर्गेषु ऐक्याधानस्य तीव्रतरा कामना— सन्त्येतानि महत्तराणि लक्ष्याण्यस्माकं येषां सिद्ध्यै अस्मभ्यं किमपि करणीयमास्ते।··· अद्य सर्वं भारतं मम गृहम्। अत्र वसन्तः सर्वे मे पारिवारिकाः। जनता-जनार्दनेन नियतसमयं यावदहं स्वीयपरिवारस्य प्रमुखत्वेन वृतोऽस्मि। प्रामाणिकतयाऽहं यतिष्ये यदिदं गृहं सुदृढं सुन्दरञ्च भूयात्। तद्धि तादृश्या महत्तमजातेः वसतियोग्यं भवेत् यया किल स्वजीवनं तेजस्विनं प्रभावशालि कर्तुं कार्यविशेषे संयोजितमास्ते' इति। ●

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

चित्तद्रुतीनां कारणभेदात् स्थायिभेदः, तद्भेदाद् रसभेदः । चैद्य-कंसादीनां क्रोधेर्ष्याभयादिभिश्चित्तद्रुतौ सत्यामपि द्रुतचित्तस्य भगवदाकारतायां सत्यामपि न रतिः सञ्जाता । चैद्यादीनां तु—

तस्मात् स्वयम्प्रभानन्दाकाराऽपि मतिसन्ततिः ।
प्रतिबन्धवशान्न स्यात् सुखव्यक्तिपदास्पदम् ॥
रजःप्रबल - सत्त्वांशादीर्ष्याज - द्वेष - मिश्रिता ।
मनोवृत्तिः परानन्दे चैद्यस्य न सुखायते ॥
तमःप्रबल - सत्त्वांशाद् भयज - द्वेषमिश्रिता ।
मनोवृत्तिः परानन्दे कंसस्य न सुखायते ॥
तयोर्भाविशरीरे तु प्रतिबन्धक्षये सति ।
सैव चित्तद्रुतिर्भक्तिरसतां प्रतिपद्यते ॥इति।

साधनाभ्यासे तुल्येऽपि रजस्तमःसमुच्छेद-तारतम्येन रतेरपि तारतम्यम् । विरहे तु दुःखतारतम्येन रतेस्तारतम्यम् । यथा—

रजस्तमःसमुच्छेद - तारतम्येन गम्यते ।
तुल्येऽपि साधनाभ्यासे तारतम्यं रतेरपि ॥
विरहे यादृशं दुःखं तादृशी दृश्यते रतिः ।
मृदुमध्याधिमात्रत्वाद् विशेषोऽत्रापि वीक्ष्यते ॥इति।

शृङ्गाररसस्य रतिः स्थायिभाव उक्तः । सुखमयी द्रुती रतिपदवाच्या । द्रुतस्य सात्त्विकस्य चित्तस्य धारावाहिकतां गता भगवद्विषयिणी मतिः सुखव्यञ्जकत्वाद् रतिशब्दवाच्या भवति । तत्र भगवत एव मनसि प्रतिबिम्बस्थायिभावतामुपगतस्य रसत्वोपपत्तेः ।

रतिशब्दं तु भजतः सुखमय्यौ परे द्रुती ।
रजस्तमोविहीना तु भगवद्विषया मतिः ।
सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते ॥ इति।

अत एव—

अष्टावेव रसा नाट्येष्विति केचिदचूचुदन् ।
तदचारु यतः कञ्चिन्न रसं स्वदते नटः ॥

इति सङ्गीतरत्नाकरे शान्तरसस्य नाट्येऽपि स्वीकृतत्वात् । काव्ये तु महाभारतादिप्रबन्धानां शान्तरसप्रधानतायाः सर्वानुभवसिद्धत्वात् सर्वैरपि शान्तरसोऽभ्युपेयते । अत एव शान्तोऽपि नवमो रसः इति काव्यप्रकाशकृदुक्तिः ।

केचित्तु—

शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात् ।
अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते ॥

इतिरीत्या शान्तस्य रसत्वं नोपगच्छन्ति । तदसङ्गतम्; नटे रसाभिव्यक्तेरनङ्गीकारात् सभ्यानां शमसम्भवेन तत्र रसोद्बोधे बाधाभावात् । शमश्च यथा—

वशीकाराख्यवैराग्यं यत्कामास्पृहतात्मकम् ।
तेन द्रुतस्य चित्तस्य प्रकाशः शम उच्यते ॥ इति।

यदुक्तम्—"नटस्य शमाभावात् तदभिनयप्रकाशकत्वं नोपपद्यते" इति । तदपि न ; भयक्रोधादेरपि तत्राभावेन तदभिनयप्रकाशनस्याप्यसङ्गत्यापत्तेः । यदि तु वस्तुभूतक्रोधादि-तत्कार्यवधबन्धाद्यभावेऽपि शिक्षाभ्यासादिना कृत्रिम-तत्कार्याणामुत्पत्तौ न बाधकमित्युच्येत तदा शमेऽपि तत्तुल्यमेव।

( क्रमशः )

# वैदिकाऽवैदिक-दर्शन-मीमांसा

## —श्री जगन्नाथ श्रीधरशास्त्री पदे—

[ नैकेर्मासैः धारावाहिकरूपेण प्रकाश्यमानेऽस्मिन् धर्ममहाप्रबन्धे विश्रुतवैदुष्यैः श्री पदे शास्त्रिभिः विषयस्य विवेचने यावत् स्वकीयं सर्वतन्त्रपारीणत्वमभिव्यज्यते, तद्दृष्ट्वा नितरां प्रसीदेत् कस्यापि शास्त्रावगाह-व्यसनिनश्चेतः। सौभाग्यमस्माकं वटपत्तन-विश्वविद्यालयीय-स्नातकोत्तर-दर्शनविभागाध्यक्षपद-मलङ्क्रियते एभिः शास्त्रिपादैः। शोधच्छात्राणामेतादृशा एव मार्गदर्शका अपेक्ष्यन्तेऽस्माकं देशे पौरस्त्य-पाश्चात्त्योभयविद्या-विशारदाः। 'सूर्योदय'स्य कृते त्वेषां निरुपाधिकी कृपैव एतादृश-प्रौढलेखादिदानेन प्रतिफलतीति सर्वथाऽधमर्णा वयमिति सप्रश्रयं सूचयामः। —सम्पादकः ]

भोगापवर्गसिद्धान्तानुरूपमेव तैर्भोगापवर्गप्रतिष्ठापकं धर्मलक्षणं सूचितम्। तथा हि तेषां सूत्रम्—

**यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।**
( वैशे० सू० १.१.२ )

**प्रवृत्तिर्वाग् बुद्धि-शरीरारम्भः।**
( न्या० सू० १.१.१७ )

**प्रवर्तनालक्षणा दोषाः।** ( ,, १.१.१८ )

**प्रवृत्तिदोषजनितोऽर्थः फलम्।** ( ,, १.१.२० )

इति न्यायवित्समयानुसारं कायिकं वाचिकं मानसिकं चेति त्रिविधं कर्म राग-द्वेष-मोहपूर्वकमेवेति काम्यं सदोषं च। प्रवृत्तिर्निष्कामा निर्दोषा चेति सर्वथाऽशक्यप्रायमेव। नहि कश्चिद् रागद्वेष-वियुक्तः स्वार्थे परार्थे वा प्रयतमानो दृश्यते। स्वार्थ-प्रयुक्त एव सर्वो जनः परार्थेऽपि प्रवर्तते। तस्माद् धर्मप्रवृत्तिरपि काम्या सदोषा च। प्रवृत्तिसत्त्वे जन्मसत्त्वात् प्रवृत्त्यपाये जन्मापायाद् अपवर्गार्थं सर्वा प्रवृत्तिः परित्यक्तव्येति सिद्धान्तितम्। तथा च आचार्यस्य न्यायोपबृंहितं सूत्रम्—

**दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः।**
( न्या० सू० १.१.२ )

तार्किकाणां सिद्धान्तोऽयं गीताशास्त्रे प्रत्याख्यातः। तथा हि—

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।**
**यज्ञ-दान-तपः-कर्म न त्याज्यं कार्यमेव तत्॥**
( १८.३ )

एके मनीषिणो मनश्चैतन्यवादिनो नैयायिकाः सर्वे चापवर्गवादिनः। कर्म त्याज्यं प्राहुः प्रवृत्त्यपाये जन्मापायात् जन्मापाये च दुःखापायात् दोषवदिति। 'प्रवर्तनालक्षणा दोषाः' ( न्या० सू० १.१.१८ )। दोषापाये च प्रवृत्त्यपायः 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः' ( १.१.१७ ) इति कायिकं वाचिकं मानसिकं च कर्म त्याज्यमिति वदन्ति। अपरे मीमांसकाः यज्ञ-दान-तप-कर्म न त्याज्यमिति वदन्ति। मीमांसकमतमेव तत्र सिद्धान्ततया उपन्यस्तं भगवता। तथा हि—

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम।**
**त्यागो हि पुरुषव्याघ्र त्रिविधः परिकीर्तितः॥**
**यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥**
**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥**
( गी० १८.४-६ )

मिथ्याज्ञानविहीनानाम् आत्मैकत्ववादिनां वैदिकानां कर्मणि प्रवृत्तिर्धर्मतो कर्मगामिफलाय, न दोषतः कर्तृगामिफलेच्छया। जन्म शरीरस्य नात्मन इत्यात्मैकत्ववादिनां जन्म नास्ति, दुःखमपि नास्ति। अतो 'दुःखजन्मे'ति सूत्रं (न्या० १.१.२) देहात्मवादिपरमेव। तार्किकाणां तु इहामुत्र भोगाय धर्मानुष्ठानम्। स भोग एव 'अभ्युदय'-शब्देन व्यपदिश्यते। अभ्युदयो नाम ममत्वेन स्वामित्वेन ऐश्वर्यत्वेन वाऽभिमतानां भोग्यानां विषयाणां प्राप्तिः। तस्या अभिवृद्धिर्यथा यथा भवति, तथा तथा अभ्युदयो वर्धते। इतरापेक्षया अभितः= सर्वतः सर्वप्रकारैः, उद्=उत्कृष्टा, अयो गतिरभ्युदयः। एवंविषया एव अभ्युदयहेतवो भवन्ति। इहाभ्युदय-परिसमाप्तिस्तु त्रैलोक्याधिपत्य-प्राप्त्या भवति। अमुत्र चाभ्युदयपरिसमाप्तिः क्षत्रियाणाम् इन्द्रपदप्राप्त्या ब्राह्मणानां च प्राजापत्यप्राप्त्या भवति, प्रजापतेः इन्द्रस्य च क्रमशो ब्राह्मण-क्षत्रियरूपत्वात्। इन्द्रपदप्राप्त्यर्थम् अश्वमेधशतं बहुभिः क्षत्रियैरनुष्ठितमिति इतिहास-पुराणेषु स्मर्यते।

इत्थं विषया एव अभ्युदयहेतवो भवन्ति। तेषां स्वामित्वेनोपादाने भोगोऽभ्युदयश्च सिद्धयति। भोगोऽभ्युदयो वा दुःखयोनिरिति दुःखायैवेति दुःखपरिहारार्थं दुःखयोनीनां भोग्यानां विषयाणामपवर्जनेन संन्यसनेन वा मोक्षोऽपवर्गो निःश्रेयसं वा सिद्धयति। तस्मादविषया एव निःश्रेयसहेतवो भवन्ति। इत्थमभ्युदय-निःश्रेयससिद्धिः विषयाधीनैव। अत एव विषया एवाभ्युदय-निःश्रेयससिद्धिहेतुत्वाद् धर्मपदेन व्यपदिश्यन्ते।

ननु विषय-विषयिणोः संयोगः सम्बन्धो नाऽभेदः। स चेतरेतराध्यासलक्षणः। तेन तयोर्धर्मधर्मिसम्बन्धो नास्ति, नोपपादयितुं शक्यते चेति।

सत्यम्; तथापि तामसैरवैदिकैः अत्राऽधर्म एव धर्म इत्युपचर्यते। किं चान्यत्; विषया यदा विषयिणो बुद्धयारूढा भवन्ति, विषयी च यदा विषयैरुपरक्तो जायते, तदैव तस्य विषयित्वं सम्पद्यते। अस्यामवस्थायां विषया विषयिणि तादात्म्यसम्बन्धेन अवतिष्ठन्ते इति तत्र धर्मधर्मिसम्बन्धस्तार्किकैः प्रतिष्ठापितः। तस्मादवैदिकैस्तार्किकैः परिदृश्यमानमिदं सर्वं विषयीभूतं दृश्यं जगदेव धर्मशब्देन व्यपदिश्यत इति विद्वद्भिर्वैदिकैः विभावनीयम्। जगतो विनाशित्वाद् अनवतिष्ठमानत्वाद् अध्रियमाणत्वाद्वा जगदधर्म इति सिद्धान्तितं वैदिकैः। वैदिकानां देहोपाधिपरिच्छिन्न आत्मा धर्मो ब्रह्म च धर्मी। अवैदिकानां पुनर्विषया जगद्वा धर्मो विषयी च बुद्धिचैतन्यवादी विज्ञानमयो मनश्चैतन्यवादी मनोमयः इन्द्रियचैतन्यवादी प्राणमयो देहचैतन्यवादो अन्नमयो वा पुरुषो धर्मी। वैदिकानां धर्मः सनातनः, अवैदिकानां पुनर्विनाशी। 'धर्म'शब्देन व्यपदिश्यमानं प्रकृतिपर्यन्तं दृश्यं जगत् त्रिगुणात्मकमिति धर्मोऽपि धर्मार्थकामरूपेण त्रिविधः सम्पद्यते, 'पुरुषार्थ'शब्देन व्यपदिश्यते च। अयं परस्परविरुद्धो वैदिकदर्शनसिद्धान्तोऽवैदिक-दर्शनसिद्धान्तश्च धर्मप्रतिष्ठापकैः निपुणमतिभिरवश्यं चिन्तनीय इत्यस्माकं विनीत आग्रहः।

मोक्षो बद्धस्य काम एव, न धर्मः। नहि बन्धोऽपि धर्मः। बन्धनान् मोक्षो न स्यात्। तस्मात् कामकृतं बन्धनं मोक्षोऽपि काम एव। तस्मात् कामहतानामयं मोक्षवादो नाकामहतानां धर्मवादिनां वैदिकानाम्। भोगापवर्गवादिनां सर्वेषां द्वैतिनां मोक्ष एव परमपुरुषार्थः। तथापि मोक्षस्वरूपे न तेषामैकमत्यमिति निरूपितं प्राक्। इत्थं मोक्षपदार्थस्याऽनवस्थानात् मोक्षस्य याथा-

काम्यम्। नायं शास्त्रीयः पदार्थः। यथा जगत् मिथ्या, तथा मोक्षोऽपि। मोक्षवादेऽभ्युपगम्यमाने—

'ये संसारिणः संसारान् मुच्यन्ते, तेषां संसारोऽन्नवान्। संसारित्वं च तेषामन्नवत्। एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां चान्नवत्त्वं स्यात्।

( शां० भा० २.२.४ )

इत्यादिभाष्येण आचार्यैः मोक्षवादस्य तार्किकपरिगृहीतेश्वर-कारणवादस्य चासङ्गतत्वं प्रतिष्ठापितम्।

मोक्षार्थं द्वैतिभिः अपवर्गः संन्यासो वा विधीयते। स च सर्वेषां मुमुक्षूणां स्त्री-पुरुषाणामनुज्ञायते। यथा भोगवादो जगतो विनाशायैव, एवमेव अपवर्गवादः संन्यासवादो वा प्रकृतिपर्यन्तस्य जगतः शरीरस्यापि च उपेक्षया विनाशायैवेति द्वैतिनां तार्किकाणां भोगापवर्गवादो जगतो विनाशार्थम्, न प्रतिष्ठापनार्थम्।

आत्मैकत्ववादे ब्रह्मवादे वा द्वैताभावाद् भोगो नास्ति। भोगाभावाद् धर्मार्थकामाः पुरुषार्थाः दुःखं च नास्ति। दुःखाभावात् मोक्षो नास्ति। मोक्षाभावात् मोक्षपदार्थमुपदिश्यमानः संन्यासो दर्शनं च नोपपद्यत एव। नहि धर्मः संन्यसितुं शक्यः, भोग-संन्यासयोर्द्वन्द्वाद् भोगस्य भोग्यस्यैव वा संन्यासः। तस्माद् वैदिकानामात्मैकत्ववादे धर्मवादे वा संन्यासो नास्ति। तथा चोक्तं बौधायनेन—

**ऐकाश्रम्यं त्वाचार्या अप्रजननत्वादितरेषाम्।**

( बौ० ध० सू० २.६.२९ )

तत्रोदाहरन्ति—

**प्राह्लादिर्ह वै कपिलो नामासुर आस। स एतान् भेदांश्चकार देवैः सह स्पर्धमानः। तान् मनीषी नाद्रियेत।**

( बौ० ध० सू० २.६.४० )

गौतमोऽप्याह—

**तस्याश्रमविकल्पमेके ब्रुवते।**

**ब्रह्मचारिगृहस्थो भिक्षुर्वैखानसः।**

**तेषां गृहस्थो योनिरप्रजननत्वादितरेषाम्।**

**ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविभागाद् गार्हस्थ्यस्य गार्हस्थ्यस्य।**

( गौ० ध० सू० १.३.१–३; ३५ )

इत्थं देहात्मवादिभिरसुरैरेव पुरस्कृतोऽयमाश्रमविकल्पः स्मृतिषु स्मर्यते। तथापि वेदविरुद्धाः स्मृतयोऽप्रमाणमिति व्यवस्थापितं मीमांसकैः। तथा हि—

**विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्।**

इति सूत्रे ( पू० मी० १.३.३ ) भाष्ये अष्टाचत्वारिंशद्-वर्षाणि वेदब्रह्मचर्यं चरणम् **जातपुत्रः कृष्णकेशोऽग्नीनादधीत** इत्यनेन विरुद्धमिति श्रुति-स्मृत्योर्विरोधं प्रदर्श्य **हेतुदर्शनाच्च** ( पू० मी० १.३.४) इति सूत्रे भाष्ये अपुंस्त्वं प्रच्छादयन्तश्चाष्टचत्वारिंशद् वर्षाणि वेदब्रह्मचर्यं चरितवन्तः, तत एषा स्मृतिरित्यवगम्यते इति।

**ब्रह्मचर्यं वाऽष्टाचत्वारिंशकम्।**

**द्वादशकेऽप्येके।** ( पार० गृ० सू० २.५.२–३)

**प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा।**

**ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे॥**

( याज्ञ० स्मृ० १.३६ )

**षड्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतम्।**

**तदर्धिकं पादिकं वा ग्रहणान्तिकमेव वा॥**

( मनु० ३.१ ) इति।

कल्पसूत्रकारैः स्मृतिकारैश्च प्रोक्तस्य श्रुतिविरुद्धस्य अष्टचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यचरणस्य निन्दैव कृता। का पुनर्वार्ता नैष्ठिकब्रह्मचर्यस्य।

सांख्यसिद्धान्तपरिग्रहो मन्वादिस्मृतिषु स्पष्टमुपलभ्यते। स्मृतिर्हि चित्तस्य वृत्तिः। तथा च

योगसूत्रम्—

**प्रमाणविपर्ययविकल्पनिद्रास्मृतयः।** ( १.६ ) स्मृतीनां देहधर्माणामेव प्रतिपादकत्वात्। स्मृतीनां धर्मी देहपरिच्छिन्न आत्मा। देहोपाधिविशिष्टमात्मानं धर्मिणमाश्रित्यैव वर्णाश्रमधर्माः प्रवर्तन्ते, न निरुपाधिकमात्मानम्। अत एव वर्णाश्रमधर्माः स्मृतिप्रोक्ता देहपरिच्छिन्नस्य आत्मन एव। सांख्यैः देहस्यैव प्रकृतिपर्यन्तं सूक्ष्मो विचारः कृतः। अत एव तस्यैव परिग्रहः स्मृतिकारैः कृतः, न वैदिकानां निरुपाधिकात्मवादः। सांख्ययोगैश्च दुःखत्रयविघाताय संन्यासः प्रतिपादितः। तथा चोक्तमाचार्यैः—

> सांख्ययोग-शास्त्रेषु च संन्यासो ज्ञानं प्रति प्रत्यासन्न उच्यते। कामप्रवृत्त्यभावाच्च। ( बृ० ४.५. शाङ्करभाष्यम् )

इत्थञ्च मोक्षप्रतिपादकानि हि सर्वाणि द्वैतानि सांख्य-योग-न्याय-वैशेषिकादि-दर्शनानि। मोक्षो हि परमपुरुषार्थस्तेषाम्। मोक्षश्च काम एव, न धर्म इति कामप्रतिष्ठापकानि द्वैतानि दर्शनानि। मोक्षश्च दुःखस्यात्यन्तिकी निवृत्तिः। भोगफलं दुःखं च शरीरधर्म इति देहात्मवादिनो दुःखितान् असुरानधिकृत्य इमानि दर्शनानि प्रवृत्तानि। आचार्याश्चैते प्रवृत्ताः।

वैदिकं दर्शनं पुनः धर्म-धर्मिप्रतिपादकम्। धर्मप्रतिष्ठापनार्थमेव आचार्याणां जगद्गुरूणां भगवतश्चावतारः स्मर्यते, न मोक्षप्रतिष्ठापनार्थम्, न वा भोगरूप-धर्मार्थकामप्रतिष्ठापनार्थम्। तथा हि—

> **यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।**
> **अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्॥**
> **परित्राणाय साधूनां विनाशाय च दुष्कृताम्।**
> **धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥**
> ( गीता ४.७-८ )

धर्मस्थापनं प्रकारद्वयेन भवति। प्रथमं को धर्मी, कश्च तस्य धर्मः, कश्च अधर्म इति धर्म-धर्मिनिर्णयः कर्तव्यो भवति। धर्मिणो धर्माधर्मनिर्णयं विधाय शास्त्रप्रणयनं सशास्त्रं च सनातनधर्मानुशासनं रजस्तमोभ्यां निर्मुक्तैः **ज्ञानं विज्ञानम्**... ( गीता १८-४२ ) इति येषां धर्मस्तैः ब्राह्मणैरेव कर्तुं शक्यत इति धर्माधर्मव्यवस्थापनमाचार्यैः क्रियते। अयं प्रथमो धर्मप्रतिष्ठापन-प्रकारः।

धर्मप्रतिष्ठाऽधर्मनाशश्च ईश्वरभावमन्तरा न भवतीति ईश्वरभावो ( गीता १८-४३ ) येषां धर्मस्तैः क्षत्रियैरेव यथाशास्त्रं धर्मप्रतिष्ठा अधर्मनाशश्च कर्तुं शक्यते। अत एव ब्राह्मणानां गेहे चेति भगवतोऽवतारद्वयं गीताशास्त्रे श्लोकद्वये स्मर्यते।

एवमेव योगभ्रष्टस्यापि योगिनां ब्राह्मणानां गेहे श्रीमतां क्षत्रियाणां गेहे चेत्यवतारद्वयं स्मर्यते। तथा हि—

> **शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते।**
> **अथवा योगिनामेव कुले भवति धीमताम्॥**
> ( गीता ६.४१-४२ ) इति।

यदा यदा हीति। धर्मस्य आत्मैकत्ववादस्य एकत्वस्य अद्वितीयत्वस्य च ग्लानिर्भवति। अधर्मस्य द्वैतस्य देहवादस्य च अभ्युत्थानं भवति। धर्मवादः क्षीणो भवति, भोगापवर्गवादस्य च सर्वतोऽभ्युत्थानं भवतीति यावत्। दैवीसम्पत्तेस्तिरोधानम्, आसुरीसम्पत्तेश्च अभ्युत्थानं भवति। शास्त्रीयस्य धर्माधर्मव्यवस्थापनस्य लोपो भवति। सर्वत्र चाशास्त्रीयः कामचारः प्रवर्तते। कर्मगामिक्रियाफलवादः क्षीयते, कर्तृगामिक्रियाफलवादश्च समुज्जृम्भते।

> **द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम्।**
> **ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम्॥**
> ( महा० भा० १४.१३.३ )

इति महाभारतोक्तस्य सनातनस्य सिद्धान्तस्य

## श्री राम-महिमा

– १ –

द्राक्षादीनि फलानि सन्ति मधुराण्येवेति नैवान्यथा
किन्त्वेको भृशमाम्र एव भवति प्रेयान्नृणां सर्वतः।
ग्रात्तस्य त्वमुना कथञ्चिदपि यद्रामेति सर्वात्मनो
नाम्नो वर्णचतुष्टयस्य महिमा सोऽयं समुज्जृम्भते ॥

– २ –

चापः पुष्पमयो मधुव्रतमयी मौर्वी मिता मार्गणाः
हीनाङ्गः स्वयमप्यसौ जयति यन्मारो जगत् सर्वशः।
ग्रात्तस्य त्वमुना कथञ्चिदपि यद्रामेति सर्वात्मनो
नाम्नो वर्णचतुष्टयस्य महिमा सोऽयं समुज्जृम्भते ॥

—स्वर्गीयाः श्री विट्ठलपन्त दफ्तरदाराः—

ग्लानिर्भवति। तदा तस्मिन् काले। अहं पितृत्वेनावास्थितो देहोपाधिकः 'अहं ब्रह्मास्मि' इति प्रबुद्धः, अत एव परेण ब्रह्मणा साकं सत्तांशेन चिदंशेन आनन्दांशेन चैक्यं गतो देहोपाधिनैव केवलेन द्वैतभावेनावस्थितः। आत्मानम् जन्मत एव अविद्यारहितं देहोपाधावपि अशरीरं नित्यशुद्धबुद्धमुक्तस्वभावं धर्माधर्मव्यवस्थापनार्थम्। सृजामि उत्पादयामि। अवतारेऽस्मिन् धर्माधर्मव्यवस्थार्थं सत्त्वगुणाध्यासो वृत्तिसारूप्यं च कर्तव्यं भवति। तथापि कार्ये निवृत्ते पुनः स्वाभाविकी स्वरूपावस्थितिर्ब्रह्मभावापत्तिश्च भवतीति क्लेशाभावादयमवतारो यदा यदा धर्मग्लानिः, अधर्मस्य चाभ्युत्थानं भवति। तदा तदा भवति, वारं वारं भवतीत्यर्थः। अनेकवारमाचार्यरूपेण ईश्वरोऽवतरति, धर्मस्थापनं च करोति।

परित्राणायेति। परित्राणाय रक्षणाय। साधूनाम् आत्मैकत्ववादिनां धार्मिकाणाम् अकामहतानाम्, अत एव क्रियाफलस्य कर्मगामित्वमातिष्ठमानानाम्। विनाशाय संहाराय च। दुष्कृतां द्वैतिनां देहात्मवादिनाम्, अत एव अधार्मिकाणां कामुकानां रागद्वेषमोहात्मकानां भोगापवर्गवादिनामसुराणाम् प्रवृत्तिदोषजनितार्थं फलं कर्तृगामीति सिद्धान्तयताम्। रागद्वेषमोहैः सर्वा कृतिः क्रिया दुष्टैवेतेषाम्, अत एव ते दुष्कृत इति व्यपदिश्यन्ते। दुष्कृतां कामचाराणामिति यावत्। साधूनां रक्षणं दुष्कृतां विनाशश्च ईश्वरभावमन्तरा न भवतीत्ययवतारः क्षत्रियस्य च रक्षणम् ( मनु० १०.८ ), ईश्वरभावश्च क्षमा कर्म स्वभावजम् (गी० १८.४३) इति क्षत्रियगेहे भवति। क्षत्रियेणैव आचार्याणामनुशासनानुसारं धर्मव्यवस्था कर्तुं शक्यत इति धर्मसंस्थापनार्थम्। सम्भवामि नित्यशुद्धबुद्धमुक्तस्वभावः अजोऽपि देहवानिव भवामि। युगे युगे प्रतियुगं, न पूर्ववद् वारं वारम्। संभवः प्रकृतिमधिष्ठाय भवति। त्रैगुण्याधिष्ठानमन्तरा साधूनां रक्षणं दुष्कृतां विनाशश्च न सम्भवति इति त्रैगुण्याधिष्ठानं सततम्। निस्त्रैगुण्यावस्था कार्याभाव एव। नित्यं त्रैगुण्याध्यासः प्रवृत्तिर्वा नित्यशुद्धबुद्धमुक्तस्वभावाय परमात्मने न रोचते इति न वारं वारं क्षत्रियकुलेऽवतारः। क्षत्रियस्येश्वरभावेन नित्यमवस्थानाद् द्वैतेऽवस्थानं नाद्वैते इत्यत्र क्षत्रियस्य पितुरुल्लेखो नास्ति, प्रत्युताऽऽह्लव एव। अत एव 'सम्भवामी'-त्युक्तम्। सम्यक् स्वयमेव भवामीति यावत्। एवं ब्राह्मणानां क्षत्रियाणां चैकत्व एव धर्मप्रतिष्ठापनं शक्यं न द्वैते। अत एवोक्तम्—

**यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरतः सह।**
**तं लोकं पुण्यवज्ज्ञेयं यत्र देवाः सहाऽग्निना ॥**

( माध्य० सं० २०.२५ )

**नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते।**
**ब्रह्मक्षत्रं च संपृक्तमिह चामुत्र वर्धते ॥**

( मनु० ९.३२२ ) इति।

( क्रमशः )

पूर्वताऽनुवृत्तम्—५१

# क्षत्रपति-महाकाव्यम्

— श्री उमाशङ्करशर्मा त्रिपाठी —

[ आंग्लभाषा-प्राध्यापकः—काशी-विद्यापीठम्, वाराणसी ]

स्वकल्पनां वीक्षितुमात्तरूपां
श्रद्धाश्रमो भारतशिल्पिसङ्घः ।
विस्मापयामास सभागृहेण
पश्यत्सुधर्मान् त्रिदिवौकसोऽपि ॥ ९८ ॥

अमर्त्यकार्तस्वर - भूरिचाऽन्या
प्रकृष्ट-माणिक्य - कृतालवाला ।
लक्ष्मीर्विनोदाय सुरत्नपर्णं
मुक्ताफलं संसुषुवेऽमरद्रुम् ॥ ९९ ॥

मनोरथस्निग्धमधस्तलेऽस्य
प्रतिक्षणाविष्कृत - दृष्टिमोहम् ।
नृपासनं निर्भयलोकवृत्ति
कीर्णांशुपीतान्धतमो रराज ॥ १०० ॥

एकत्र दृष्टोत्तम - रत्नमुक्ताः
साक्ष्यं गताः प्राकृतबुद्धयोऽपि ।
उर्वी यदेषा किल रत्नगर्भा
रत्नाकरो - ऽसंशयमम्बुधिश्च ॥ १०१ ॥

नृपासनं मण्डयति प्रजेन्द्रे
मघाविवोर्वीतल - मेकतानम् ।
समीहितोल्लासविजृम्भिताशाः
विष्वक् प्रमोदध्वनयो ननन्दुः ॥ १०२ ॥

ब्राह्मीपदालङ्कृत - नव्यसंज्ञा[1]
अष्टप्रधानाः सह सर्वसभ्यैः ।
लोकस्तुतां तस्य महेन्द्रधाम्नो
दृष्टिं नता मूर्ध्नि ननन्दुरिष्टाम् ॥ १०३ ॥

वक्षोऽसृगुज्जीवितजीविताशां
स्वातन्त्र्यदेवं पुरतोऽवलोक्य ।
घोराहवाम्भोधि - दुरन्तकूलं
दृष्टा भटा लब्धमिवान्वभूवन् ॥ १०४ ॥

सभास्वरं प्राभृतकश्रिया तद्
हिमांशुभासेव मनोऽभिरामम् ।
नृपार्पित - प्रत्युपहार - धाम्ना
प्रकृष्टसूर्यप्रभ - माचकासे ॥ १०५ ॥

मनस्विलोक - व्यवहारविद्भिः
पाथोधिपाराङ्गल नैगमैश्च ।
उद्यत्प्रतापाविरताऽनुकूलै-
रुपायनैरार्यनृपोऽनुजुष्टः ॥ १०६ ॥

आत्मन्यथो प्रत्युपहारभारा-
ज्जनाः विशान्तोऽपि हठात् तदैव ।
लोकान्नृपौदार्यपयोदसिक्तान्
वीक्ष्याऽखिलानेव जहुर्ह्रियं स्वाम् ॥ १०७ ॥

अथाभिषेकोत्तरराजशोभा-
यात्राविधौ रायगृहप्रतोली ।
असङ्ख्यनेत्रैरिव पद्मपुष्पै-
र्न्यवेदयत् पाद्यमिवाध्ववर्षैः ॥ १०८ ॥

पदातिरप्युत्तमपुष्पकीर्णान्
महार्हशय्यासुषमान् पथोऽसौ ।
सायाससुत्तीर्य परीक्षितास्थः
श्रद्धाभरो देवनृहान् ददर्श ॥ १०९ ॥

---

१. शिवराज्यारोहणपर्वणि राज्यपदानां पदाधिकारिणांश्च संज्ञानिर्देशो देवगिरि समुपनिबद्धः । पूर्वं तु पारसीकपदाभिहिता हि संज्ञा तेषामितीतिहासः ।

वातायने सौधशिरोगृहाणा-
मट्टालिकानामुपरि स्थिरा वा।
पतत्प्रसूनाञ्जलि - रार्यशीला
सौन्दर्यसृष्टिः परितो बभासे ॥ ११० ॥

अट्टस्थिता नन्दितगीतकण्ठयो
वध्वः किरन्मङ्गलगन्धलाजाः।
लता यथा कान्तशकुन्तरावाः
वर्षत्प्रसूनावचयाः विरेजुः ॥ १११ ॥

जयन्तु शम्भुप्रतिमाः पृथिव्या-
मकिञ्चनाश्चापि समर्थपादाः।
अवाप्य यद्गैरिकजीर्णखण्डं
श्रीरात्मसौभाग्यमिवाऽभ्युपैति ॥ ११२ ॥

जयत्वशेषाभ्युदयाय लोको
वसुन्धरैषा च निरस्तबाधा।
धर्मो जयत्वात्मविवेकवर्त्मा
लक्ष्मीधुरं क्षत्रपतिर्बिभर्ति ॥ ११३ ॥

राजा जयत्वेष शिवो पृथिव्या-
मनन्ततेजाः शिवराजराजः।
इत्युच्चकै - रुद्भवसम्मदानां
व्याप्नोद्दिवं गाश्च जयाभिशंसा ॥ ११२ ॥

वाद्यध्वनि-र्नन्दितकण्ठरागः
प्रसूनवृष्टि - र्जयघोषसूक्तिः।
मन्दं चलद्धर्षरमश्च लोको
नात्मोपमामाप कुतोऽपि सर्गे ॥ ११५ ॥

अम्भोरुहाऽङ्घ्रौ नमतो नृपस्य
निधाय मूर्तिं हृदयेषु देवाः।
स्वकान्तिसङ्क्रान्ततनुं तमेवं
समन्वगृह्णन्निव भावभाजः ॥ ११६ ॥

दिल्लीश्रिये दुर्वहगर्वपात[1]-
मीर्ष्यां नृपेभ्यो हठविस्मिताक्षीम्।
धर्माय भूयोऽभिमतप्रतिष्ठा-
महार्यविश्वासधुरं प्रजाभ्यः ॥ ११७ ॥

बाल्यन्तु विद्याभ्यसनाय यत्ना-
दुत्साहधाम्ने नवयौवनञ्च।
तद्वार्धकञ्चामृत-तोषसिद्ध्यै
विवेकमार्गाय वयो हि सर्वम् ॥ ११८ ॥

सुवर्म सौन्दर्यधनाय शीलं
तत्त्वार्थदोहं जगतीसुरेभ्यः।
धृतायुधेभ्योऽखिललोकरक्षां[2]
परोपकाराय यशो वरेण्यम् ॥ ११९ ॥

सङ्कल्पशक्तिं तु मनोरथाय
स्वतन्त्रतां जन्मभुवे चिरेष्टाम्[3]।
सर्वस्वमिष्टाय ददौ तदैव
राज्याभिषेको जगते शिवस्य ॥ १२० ॥

इत्थं सङ्कल्पमार्गः सततममनुसरन् धैर्यगर्भां धियं स
आत्मोत्साहद्वितीयो दधदनुगबलं हृद्यपाथेयमेवं[4]।
उत्तीर्याऽऽपद्वनान्तं घनतिमिरमुखान् दैवगर्तांश्च घोरान्
शत्रूच्छ्रायं पदाङ्कैः सहठमपहरन्नारुरोहा-ऽद्रिमौलिम्[5] ॥ १२१ ॥

॥ इति क्षत्रपति-महाकाव्ये अष्टादशः सर्गः ॥

---

१. दुस्सहशल्यघातम्। २. लोकगुप्तिम्। ३. प्रतीक्ष्याम्। ४. पाथेयकल्पम्। ५. 'कीर्तिशैलं जिगाय' इति पाठभेदः।

# मदीया द्वितीया अध्ययन-यात्रा

—श्री व्रजवल्लभ द्विवेदो दर्शनाचार्यः—

[ व्याख्याता—योग-तन्त्रविभागस्य वा० सं० वि० वि० ]

४.

[ विद्वद्वरैः श्री द्विवेदमहाभागैः अस्मदाग्रहेण संग्रथितमिदं स्वकीयं द्वितीयाध्ययन-यात्रावृत्तं-विगतैस्त्रिभिरङ्कैरत्र क्रमशः प्रकाश्यते। अग्रिमेऽङ्के तत्पूर्णं भवेत्। वृत्तमिदं तैरकृत्रिमेण प्रवाहेण प्रवाहितं दक्षिण-भारतीयानां नैकेषां स्थानानां प्राकृतिकीं सुषमामपि भूयशोऽभिव्यनक्तीति सुस्पष्टमेव पाठकानाम्। स्वीयाध्ययनविषयस्य चर्चा तु अखण्डितैवात्र प्रतिभाति। मध्ये-मध्ये तत्र-तत्र वर्तमानाः सर्वथा पूरणीया न्यूनता अपि तैः सहजप्रवाहेण संसूच्यन्ते। आशास्महे यत् त्रिविधेनानेन प्राकृतिकप्रवाहेण प्रवहमाना वृत्त-त्रिवेणीयं देवगिरि अवगाहमानेभ्यः त्रिविधां शान्तिं सौमनस्यञ्च नूनं जनयेदिति।—सम्पादकः ]

द्वितीये दिने प्रातः सप्तवादनवेलायामधिगतं त्रिवेन्द्रंनगरम्। जूनमासस्य षोडशे दिनाङ्के तस्मिन् केरल-विश्वविद्यालयान्तर्गते हस्तलेख-पुस्तकालये रविवासरप्रयुक्तोऽवकाश आसीदिति कन्याकुमारी-मन्दिरदर्शनाय तत्रत्योदधिस्नानाय च मनीषा समजायत। अत्र वर्तते रत्नाकरमहोदध्योः 'बङ्गाल की खाड़ी और अरब-सागर' इत्याख्ययोः भारतमहासागरस्य चेत्येवं सागरत्रयस्य सङ्गमः। प्रथमायां दक्षिणभारत-यात्रायां धनुष्कोटितीर्थ-स्नानवेलायां समुत्पन्नः कन्याकुमारी-तीर्थस्नान-सङ्कल्पोऽद्य सौभाग्यात् फलितः। त्रिवेन्द्रंपर्यन्तमेव लौहयानं प्रचलति। इतः परं कन्याकुमारी-तीर्थगमनाय मृत्तैलयानमेव उपलभ्यते। कन्याकुमारी-मन्दिरे भगवत्याः पार्वत्याः दर्शनं प्रातः सार्धैकादशवादनं यावत् सायं च पञ्चवादनतः परं भवति। तस्यां वेलायां त्रिवेन्द्रं-नगरतः कन्याकुमारीपर्यन्तं यानानि प्रचलन्ति। शिष्टे समये त्रिवेन्द्रंनगरतो 'नगर-कोइल' इत्याख्ये मध्येमार्गमवस्थिते स्थाने गच्छन्ति। ततश्च नातिदूरमवस्थितं कन्याकुमारी-तीर्थमधिगम्यते।

सार्धैकादशवादनात् परं भगवत्या दर्शनं न भवतीति त्रिवेन्द्रंनगरे नास्माभिः परिज्ञातमासीत्। अतो 'नगर-कोइल'-मार्गेण द्वादशवादनवेलायां कन्याकुमारीमागतैरस्माभिः पञ्चवादनं यावद् दर्शनाभिलाषेण तत्रैव स्थितम्। उदधिस्नानं विधाय समुद्रतटे नवनिर्मिते गांधिस्मारक-भवने विश्रान्तम्। अस्य भवनस्य मध्ये महात्मनो गांधिनः प्रतिमा राजते।

मन्दिरस्य शिखरसमीपे छिद्रमेकं दृश्यते अनेन पथा महात्मनो जन्मदिवसे अक्तूबर-मासस्य द्वितीये दिनाङ्के सूर्यरश्मयो नूनं विदधते दर्शनं तस्या प्रतिमाया इति वर्तते तस्य निर्माणे किमपि शिल्पवैशिष्ट्यम्।

सागरतटान्नातिदूरं मध्येसमुद्र-स्थितायां विवेकानन्द-शिलायां निर्मीयतेऽभिनवं मन्दिरम्। अत्रत्यायां शिल्पशालायां प्रस्तखण्डेषु कर्मव्यापृताः टङ्कहस्ताः परः शतं शिल्पिनो दृष्टाः कृच्छ्रेण संरक्षन्तः कथंकथमपि निःश्वसन्तीं भारतीयां शिल्पकलाम्। सायं भगवत्या दर्शनं विधाय पुनरप्यायातं त्रिवेन्द्रं नगर एव।

तत्र स्थानकसमीप एव समवस्थिते 'मनजी जेठा'-नामकेन गुर्जरश्रेष्ठिना निर्मापितायां धर्मशालायामवस्थितम्। दक्षिणभारते धर्मशाला: 'सत्र'-नाम्ना परिचीयन्ते। नात्र न्यवसत् कश्चन गुर्जरभाषीय:। तत्रत्यो व्यवस्थापक: केरलदेशीयोऽपि हिन्दीभाषां सम्यग् जानाति स्म। दक्षिणभारते उत्तरभारतीया जना: 'सेठजी'-नाम्ना संबोध्यन्ते, हिन्दीभाषयैव च भाषन्ते, ते गुर्जरदेशीया: स्यु:, राजस्थानीया:, उत्तरप्रदेशीया:, वङ्गीया:, नेपालाभिजना वा। अत्रायमेव हेतु: प्रतीयते यद् दक्षिणभारतयात्रासु बाहुल्येन व्यापारिण एव गच्छन्ति। तीर्थयात्रिषु बाहुल्यं भवति राजस्थानीयानां गुर्जरदेशीयानां च। तेऽपि विशेषतो व्यापारिण एव भवन्ति। 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेन उत्तरभारतीया: सर्वे 'सेठजी'-पदाभिधेया एव भवन्त्यत्र। शब्दोऽयमरुचिकर इवासीद् अस्माकम्। महाराष्ट्रराज्ये पण्ढरपुरेऽप्यस्मदर्थं प्रयुक्तोऽयं शब्द:। प्रायो दाक्षिणात्या: पण्डिता: स्यूतानि वस्त्राणि नैव धारयन्तीति स्यूतवस्त्रधारिणो जना: श्रेष्ठिन एव तत्र परिगण्यन्ते। अस्तु किमपि!

तस्यामेव धर्मशालायां वाराणसी-रामपुरवास्तव्यौ व्यापारिणौ सङ्गतौ। वाराणसीतोऽतिदूरं तिष्ठतापि मया ताभ्यां वार्तालापे कोऽपि स्नेहातिशयो ममत्वं चानुभूतम्। केरलराज्ये न वर्तते विरोधस्तादृशो हिन्दीभाषाया:, यादृशो दृश्यते तमिलनाडुप्रदेशे। केचन तत्रत्या: केन्द्रीयप्रशासनस्य राष्ट्रभाषाविषयिणीं दुर्बलां नीतिं समालोचयन्तो दृष्टा:। अत्रत्येषु राजकर्मचारिषु राष्ट्रभाषाभिज्ञा न प्रोत्साह्यन्ते केन्द्रीयप्रशासनेन, अत: शनै: शनै राष्ट्रभाषानुरागस्तत्र शिथिलीभवतीति च शोचितं तै:।

दिनद्वयं यावदत्र स्थितवद्भिरस्माभि: सर्वप्रथमं नातिदूरमवस्थितं पद्मनाभमन्दिरमधिगतम्, तत्र च भगवतो विष्णो: शेषशय्यायां शयानस्य विशालां प्रतिमामवलोक्य पावितानि चक्षूंषि। एतदपि मन्दिरं दक्षिणभारतीयेषु भव्यतमेषु मन्दिरेष्वन्यतमम्। मन्दिरस्य पृष्ठतो वर्तते सहस्रस्तम्भखचितं मण्डपम्। शिल्पकलयाऽलङ्कृता इमे स्तम्भा: कमप्यनिर्वचनीयं शिल्पनैपुण्यं पुर: स्थापयन्ति।

महेश्वरानन्दकृति: सपरिमला 'महार्थमञ्जरी' त्रिवेन्द्र-ग्रन्थमालायामेव प्राकाश्यत। अन्येऽपि शाक्तागम-दर्शनप्रतिपादिका नैका मातृका अत्रत्ये पुस्तकालये सुरक्षितास्तिष्ठन्ति। अत्रत्यै: अधिकारिभि: नि:सङ्कोचमसमभ्यमप्रकाशिता अपि सूच्यो दर्शिता:। नैके विशिष्टा ग्रन्था अवलोकितास्तत्र। विस्तरभयान्न गृह्यन्तेऽत्र नामानि तेषाम्। विद्यानन्दकृते: 'ज्ञानदीपविमर्शिन्या' मातृकाद्वयम्, शिवानन्दकृते: 'सुभगोदय'स्य 'सुभगोदय-वासना'याश्च मातृकात्रयं तत्र समदृश्यत। 'सौभाग्यहृदय'स्याप्यासीदेका मातृका। त्रिपुरा-तन्त्रेषु प्राचीनतमं रुद्रयामलान्तर्गतम् 'उत्तरषट्कमा'सीदस्माकं सविधे मद्रपुरीराजकीय-पुस्तकालयमातृकाप्रतिलिपिभूतम्। तस्य पाठसङ्कलनमपि अत्रास्माभिरक्रियत। धर्मशालात: केरलविश्वविद्यालयमार्गं गमनागमनिकासु मध्येमार्गं समदृश्यत आयुर्वेदमहाविद्यालयभवनं साम्प्रतिकचिकित्सामहाविद्यालय (मेडिकल-कालेज)-भवनान्यतिशाययत्। यद्यपि तत्र गत्वा किमप्यस्माभिर्नावलोकितम्, तथापि तंजापुर्यामत्र च प्रदीयमानं राजकीयं साहाय्यं व्यनक्ति स्म उत्तरभारतापेक्षया आयुर्वेदस्य चिकित्सायां विशिष्टं समादरम्।

त्रिवेन्द्रंनगरतो वयम् 'एर्नाकुलम्'-स्थानकमागता:। कोचीनपत्तनमितो नातिदूरं वर्तते। तत्र तु न गता वयम्, यतो हि समीप एव स्थितस्य

कोचीनराज्यकीर्तिपताकायितस्य 'त्रिपुरन्तुरा'-स्थाने स्थितस्य संस्कृतमहाविद्यालयस्य तत्पुस्तकालयस्य चावलोकन एव बद्धमासीन्मनोऽस्मदीयम्। प्रातरेव वयं तत्रागच्छाम। सङ्गीत-साहित्य-कलासु कोचीन-नृपतयो बहुमानं भेजिरे। अत्रत्यैरेव श्रीशास्तृ-शर्मभी रचितो नव्यन्यायग्रन्थो 'नव-रत्नमाला' तच्छिष्यै रचितया टीकया टिप्पण्या भूमिकया च सनाथीकृतो वर्षत्रयात् पूर्वमेव सरस्वतीभवन-ग्रन्थमालायां प्रकाशितः। अस्मिन् विद्यालये व्याकरणे, साहित्ये, नव्यन्याये, दर्शनेषु च परः शतं छात्रा अधीयाना आसन्। तत्र बालिकाना-मुपस्थितिः पर्याप्ता आसीत्। दक्षिणभारते संस्कृत-शिक्षा बालिकासु प्रसरति साम्प्रतमित्यनुभूत-मस्माभिः। पुस्तकालये आगमग्रन्था विशेषतो नासन्निति ततः पुनरेत्य 'एर्णाकुलं'-स्थानकं महीशूरनगरं प्रस्थितम्।

द्वितीये दिने प्रातरधिगतमासीद् बङ्गलोर-नगरम्। तत्र नैव स्थितमस्माभिः। एवं च जून-मासस्य विंशे दिनाङ्के मध्याह्ने त्रिवादनं याव-दस्माभिरधिगता महीशूरनगरी। आगमनानुकाल-मेव वयं मैसूर-विश्वविद्यालयभवनेषु स्थिते हस्त-लेख-सङ्ग्रहालयेऽगच्छाम। सञ्चालकमहोदयास्तदा तत्र नासन्। तत्सहायकाः श्रीमन्तो वि० मरिवसवाराध्य-महोदया ग्रन्थसूची-दर्शनादीनां शोभनां व्यवस्थां कृतवन्तः। द्वितीये दिने चाभी-प्सितानां ग्रन्थानामवलोकनाय पुनरपि तत्र गत-मस्माभिः। इतः प्रस्थायासादितोऽस्माभिस्तत्रत्यो महाराजसंस्कृतमहाविद्यालयः, यतः पूर्वं त्रैमासिकी संस्कृतपत्रिका प्रकाश्यते स्म। हन्तः साम्प्रतमेषा राजकीयार्थिकसाहाय्यमन्तरा रुद्धप्रकाशना वर्तते।

दक्षिणभारतीयेषु संस्कृतमहाविद्यालयेषु छात्र-संपत्तिदृष्ट्याऽयं सर्वानतिशेते। अत्रत्यानां प्रधाना-चार्यमहोदयानां विशेषतो वाराणस्यादिषु वाद-विवादप्रतियोगिता-ऽन्त्याक्षरी-प्रतियोगिताप्रभृतिषु गृहीतपुरस्कारस्य अत्रत्यच्छात्रस्य श्रीमतो नागराज-रावस्याग्रहेण रात्रौ तत्रैव न्यवसम्। प्रातःकाले छ विद्वद्भिश्छात्रैश्च परिषदेकाऽऽयोजयिष्यते, तत्रा-वश्यमेव स्थातव्यं भवद्भिरिति तेषामादेशो नैव मयाऽन्यथाकर्तुमपार्यत। अस्मिन् महाविद्यालये शैवागमानां वैष्णवागमानां चाध्ययनस्य शोभना व्यवस्था दृष्टा। वीरशैवागमानां सिद्धान्तशैवा-मानां पाञ्चरात्रागमानां वैखानसागमानां चात्र पृथक् पृथगध्यापकाः सन्ति। सन्ति च तन्त्रनाम्ना सामान्यतन्त्राणां माध्वसम्प्रदायस्य चाध्यापकाः। पाञ्चरात्रागम-प्राध्यापकैः श्रीवासुदेवभट्टाचार्य-महोदयैः, शैवागम-प्राध्यापकैः श्री के० सीताराम सोमयाजिभिश्च साकं कियत्कालं यावच्छास्त्र-चर्चापि समजायत। प्रातर्नववादनवेलायां परिषदा-योजिता। कतिचित्क्षणानन्तरमेव अनुभूतं मया यदेशा परिषदतिथेरस्य सम्मानाय सञ्जायत इति। नैव मया कदाचिदपि सभासु भाषितम्। तथापि समापतितस्यास्य भारस्य निर्वाहाय मया संस्कृत-गिरा यथाकथञ्चित् स्वाभिप्रायः प्रकाशितः।

दक्षिण-भारतीयया अनया यात्रया समनुभूतमासीद् यद् दक्षिणभारतापेक्षया उत्तरभारत एव संस्कृतभाषायै प्रोत्साहना-तिशय उपलभ्यते। दक्षिणभारतीय-राज-पुरुषाणामनवधानेन अर्थसाहाय्यमन्तरा तत्रत्यानि बहूनि प्रकाशनानि साम्प्रतम-वरुद्धव्यापाराणीति महतः खेदस्यायं विषय इति निगदितं मया तत्र।

अपराह्णे महीशूरनगरी-मुकुटायमानस्य वृन्दा-वनोद्यानस्यावलोकनाय अगमम्। अत्रोद्याने स्थाने स्थाने प्रचलन्त्यः कृत्रिमा जलधारा विद्युत्प्रकाशेन

प्रतिफलिता सत्यः कामप्यनिर्वचनीयां शोभां बिभर्ति। अस्योद्यानस्य उपरितने भागे वर्तते कृष्णराजसागरं नाम विस्तृतं सरस्तदुपरि बन्धश्च। वृन्दावनोद्यानमेतद् दक्षिणोत्तराख्यं भागद्वयं बिभर्ति। अनयोर्भागयोर्मध्ये प्रवहति कृष्णराजसागरादागतं जलम्। तन्मध्ये च प्रवर्ततेऽनारतं बृहदाकारं जलधारायन्त्रम्।

महीशूरनगरे कर्णाटकराज्ये च सन्ति भूयांसि स्थलानि दर्शनार्हाणि। तेषां च यात्रा समयव्ययसाध्या। तच्च नासीदस्माकं सविधे। अतो विहायानेकानि स्थलानि पश्चिमसमुद्रतटे गोकर्णक्षेत्रे कृतनिवासं स्वयंभूलिङ्गं भगवन्तं महाबलेश्वरं द्रष्टुकामोऽहं महीशूरनगरत एकविंश्यां तारिकायां पर्यगाम्। मध्येमार्गमासीद् महनीया प्रपातस्थली 'जोग-फाल' इत्याख्या। अत्र मैसूर-तालकुप्पा-लोहपथे समागतात् 'सागरा'ख्यात् स्थानकादुपलब्धेन मृत्तैलयानेन गम्यते। स्थलेष्वेषु जूनमासस्य प्रारम्भ एव वर्षा प्रवर्तते। यथा यथाऽहं गोकर्णतीर्थमलभे, तथा तथा वर्षाधिक्यमवालोक्यत। यदाऽहं सागरस्थानकं प्रपातस्थलीं चाध्यगमम्, तदा पर्जन्यो वर्षति स्म। वर्तन्ते तत्र चत्वारः प्रपाताः 'राजा-रानी-रोर-राकेट' इत्याख्याः स्वनामानुगुणाः। अत्र शरावती नाम नदी चतुर्धा विभज्य स्वात्मानं ९६० 'फुट'-परिमिते नीचैस्तने प्रदेशे पातयति। अतिरमणीयमिदं दृश्यम्!

द्विवादनवेलाऽऽसीत्। त्रिवादनवेलायां सिरसीस्थानतः गोकर्णं प्रति मृत्तैलयानं प्रचलति। सिरसी चेतो दूरा, न च किमपि यानमधुनोपलप्स्यत इत्यतो रात्रावत्रैव स्थातव्यं सिरसीग्रामे वेति कर्णकटुकमिदं श्रुत्वा यावद्वयं सीदामस्तावदेव कुतश्चित् सिरसीगमनाय सज्जं लघुमृत्तैलयानं (कार) एकं प्रपातस्थल एव सहसाऽऽगतम्। यदि कश्चन सिरसीगमनाय प्रस्तुतः स्यात् सोऽनेन यानेन गन्तुं शक्नोतीति श्रुत्वा वार्तां यानवाहकस्य मुदितमानसोऽहं भाटकादिकं निश्चित्य तत्र न्यसीदम्। अवसरोऽयमासीद् यात्रायां **पातकं किमतः परम्** इत्यस्य। पार्वत्यमार्गेषु सकुशलमिदं यानं प्रवहदासीत्। समीप एवासीत् सिरसीस्थानम्। त्रिवादनात् पूर्वमेव तत् प्राप्स्याम इति चिन्तयतामेवास्माकमकस्माद् यानमनियन्त्रितमजायत। चतुरेण वाहकेन यानस्य गतेस्तीव्रता कुशलं नियन्त्रिता, तथापि विपथगामि तद्यानं मार्गमपहाय मृत्तिकानिचयेनैकेन निरुद्धवनान्तःप्रवेशं तत्रैव पार्श्वपरावृत्तिमलभत। परावृत्तिसमये गोकर्णस्थानवसतेः महाबलेश्वरस्य करुणावरुणालयस्य कृपादृष्टिर्मन्दामन्दतरां तस्य गतिमकरोत्। अस्मिन् याने आरूढाश्चत्वारोऽपि जनाः स्वस्वस्थानेष्वेव यथासुखं स्थिता न कामपि व्यथामापन्नाः। बहिः पर्जन्यो वर्षति स्म। यथाकथञ्चित् तस्माद्यानाद् बहिरागताः सर्वे। प्रायो होराद्वयानन्तरं च सिरसीं प्रति प्रति प्रस्थिता अन्येन यानेन।

सिरसीस्थे मृत्तैलयान-स्थानके (बस-स्टैंड) परिज्ञातमेतद् यत् षड्वादनसमये कारवार-स्थाने मृत्तैलयानं गच्छति। तेनापि गोकर्णतीर्थं यानपरावर्तनमुखेन रात्रौ दशवादनं यावल्लब्धुं शक्यते। आरूढमस्माभिर्मृत्तैलयानं तत्रत्यम्। तत्र च **पृच्छको नावसीदति** इति स्वकल्पितं नूतनमिमं यात्रानियममनुपालयन्नहं यावत् पृच्छामि गोकर्णमार्गं तत्रारूढान् सहयात्रिणस्तावन्महाबलेश्वरप्रेषिता इव तत्रत्याः प्रधानार्चकाः श्री वे० दत्तात्रेयपरमेश्वरशर्माणः प्रत्यवदन् क्वत्यो भवानिति। वाराणसेयोऽहमित्युत्तरिते मुदितमानसास्ते स्वपार्श्वं एव मदीयं स्थानमरक्षन्। मदनगिरिस्थाने गोकर्णसमीपस्थेऽपरं यानमधिरोढव्यमासीत्। सिरसीतस्त्रिवादनवेलायां

# प्राचीन-भारते नियुद्धकलायाः स्वरूपम्

—डा० श्री नीलकण्ठ पुरुषोत्तम जोशी—

*भारतवर्षस्य व्यायामेतिहासे नियुद्धकलायाः स्थानं महत्त्वपूर्णमस्ति। नियुद्धस्यानुष्ठाने धनोपार्जनं स्वसंरक्षणञ्च लक्ष्यद्वयमासीत्। संरक्षणक्षमेयं विद्या आदिकालतो युद्धविद्याया अङ्गभूता संवृत्ता। अतो राजपुत्रादयोऽप्यस्या अध्ययनं कुर्वन्ति स्म, चतुष्षष्टिकलासु चास्याः सन्निवेशः समभूत्।

* अत्र व्यवहृतानां हरिवंश-महाभारत-रामायण-विष्णुपुराणग्रन्थानां संस्करणानि गोरक्षपुरीय-गीतायन्त्रालये मुद्रितानि परिगृहीतानि सन्ति।

---

यत्प्रचलति यानं तत् यन्त्रवैगुण्यान्मध्येमार्गमवरुद्धगतिकमासीत्। तत्रत्या गोकर्णधामयात्रिणोऽप्यत्रैवारूढाः। दैवविलसितमेतत्।

महाबलेश्वरस्य यात्रा जूनमासतः पूर्वमेव कर्तव्या। ततः परं चतुर्षु मासेषु प्रायः प्रत्यहं महावृष्टिः पतति। कथं कथमपि श्रीमतां दत्तात्रेयमहोदयानां साहाय्येन रात्रौ द्वादशवादनवेलायामस्माभिस्तद्धाम आसादितम्। अत्रत्या अर्चका यात्रिणः स्वगृहेषु गृहनिर्विशेषं सत्कुर्वन्तीति महीशूरनगर्यामेव श्रुतमासीत्। तदेषां गृहे रात्रौ निवसता मया सत्यमेतदित्यनुभूतम्। जूनमासस्य त्रयोविंशे दिनाङ्के आसीत् प्रदोषदिनम्। पावनेऽस्मिन् दिवसे मया पश्चिमोदधिस्नानं महाबलेश्वरार्चनं च कुर्वता जन्मजन्मान्तरेष्वर्जितानां श्रेयसां परिणतिरिवानुभूता। प्रदोषव्रत-पालनाय अर्चकमहोदयानां गृहे फलाहारं गृहीत्वा बेलगामगामि मृत्तैलयानमधिरूढम्।

गोकर्णतो येलापुरं यावद् वर्तते पार्वत्यः प्रदेशः प्राकृतेन सौन्दर्येण वृक्षराजिभिश्च आपूर्णः। गमनवेलायां निशान्धकारेण पराहतानि चक्षूंषि नैनां प्राकृतिकीं शोभां साक्षादकुर्वन्। पर्वतसानुषु कटिप्रदेशेषु वृक्षाग्रेषु च खेलतां मेघानां सौन्दर्यमवर्णनीयमासीत्। हरितशाद्वलेभ्यः पर्वतेभ्यः प्रपतन्तः प्रपाता अम्बरतलादवतरन्तीमाकाशगङ्गां समनुकुर्वन्ति स्म। सहृदयः कविरेव तत् प्राकृतसौन्दर्यं प्रसादमधुरं भावगभीरं च वर्णयेत्। नात्र वयं प्रभवामः।

सायं पञ्चवादनवेलायामधिगतं बेलगांवनगरम्, यदर्थं साम्प्रतं कर्णाटक-महाराष्ट्रराज्ययोर्विवादः प्रचलति। ततश्च अन्ययानमारुह्य रात्रौ अष्टवादनवेलायां निपाणीनगरकम् आसादितमस्मन्मित्रवर्याणां स्वामिश्री चन्द्रशेखर पट्टददेवरु महोदयानां वसतिस्थलम्। तत्रत्यस्य हिरेमठस्याधिपतय इमे गुर्वाज्ञामनुपालयन्तो वाराणस्यां योगतन्त्रविभागे कार्यव्यापृताः सन्ति। यात्रायाः प्रारम्भ एव मयैतत्प्रतिश्रुतमासीद् यद् यात्रान्ते तत्रागन्तव्यमिति। एभिश्च भवदागमनानन्तरं करवीरपीठस्य कोल्हापुराख्यस्य, पण्ढरपुरस्य च पाण्डुरङ्गभगवद्वसतेर्यात्रा करिष्यत इति समायोजितमासीत्। अस्यां रात्रौ अपरस्मिन् दिने चास्माभिः यात्रावक्लान्तिरपनीता।

( सावशेषम् )

जीविकोपार्जनार्थं नियुद्धस्याङ्गीकारं कुर्वाणा मल्ल-नटनामधारिणो जना नृपाश्रयभागिनोऽभूवन्। परं यथाग्रे निवेदयिष्यामः, समाजव्यवस्थायां तेषां स्थानं नोच्चतरमासीत्।

शासकवर्गस्यापि नियुद्धे भूरितरा रुचिरासीत्। न केवलं राजानो मल्लानामाश्रयस्थानमभूवन्, अनल्पेनोपहारेण तेषां युद्धवैदग्ध्यस्य समादरमप्यकुर्वन्। किन्त्वनेके नृपतयो राजपुरुषाश्च—यथा वानराधिपः सुग्रीवः, मगधो जरासन्धः, तीर्थङ्कर-महावीरजनकः सिद्धार्थः, सौराष्ट्राधिपतिः कुमारपालश्चेत्यादयो नृपतयः, कृष्ण-बलभद्र-भीमसेनादयो राजपुरुषाश्च मल्लविद्याविशारदा आसन्। अस्या विद्यायाः संस्कृत-प्राकृत-पालि-साहित्येषु दृश्यमाना उल्लेखाः, भारतीयकलाकृतिषु युद्ध्यमानानां मल्लानामङ्कनं लोककाव्येषु मल्लकथानां सन्निवेशश्च प्राचीनकालादागतं मल्लशास्त्रस्य महत्त्वं लोकमनोहारित्वञ्च सूचयन्ति।

वैदिकसाहित्ये नियुद्धस्योल्लेखः प्रायेण नोपलभ्यते। जना मुष्टियुद्धं कुर्वन्ति स्म, परं तस्य विस्तृतवर्णनं न परिलक्ष्यते। तदनु दीघनिकायनामके बौद्धग्रन्थे[1] जातककथायाञ्च नियुद्धस्य वर्णनानि सन्ति। जैनानां समवायाङ्गसूत्रे[2] पुरुषाणां चतुष्षष्टिकलानां द्विसप्ततिकलानाञ्च उल्लेखा विद्यन्ते। तत्र अष्टषष्टितमायाः कलाया वर्णने दण्डयुद्धम्, मुष्टियुद्धम्, सूत्रखेलादिना सह युद्धनियुद्धं बाहुयुद्धञ्च समुल्लिखितं वर्तते।

१. दीघनिकायः ( पाली टेक्स्ट सोसाइटी, लन्दन १८९० ), १.१.१३, पृ० ६।

२. कस्तूरमलभाटियामहोदयेन नागरीप्रचारिणीपत्रिकायां ( वर्ष ६४, सं० १, पृ० ४६ ) प्रकाशिते स्वलेखे समुद्धृतम्—समवायाङ्गसूत्रम्, समवायः ७२।

रामायण-महाभारतयोर्यत्र-तत्र नियुद्धस्य प्रचुरतराणि वर्णनानि विद्यन्ते। रामायणे राम-सुग्रीवयोर्युद्धम्[1], महाभारते भीम-जीमूतयोः[2] भीम-जरासन्धयोश्च[3], हरिवंशे श्रीकृष्ण-बलभद्रयोः चाणूर-मुष्टिकाभ्यां वर्णितं नियुद्धम्[4], तत्रैव चान्यानि बाहुयुद्धानि वर्णितानि सन्ति। तान्याश्रित्यैवेदं प्रस्तूयते विवेचनम्।

पूर्वोक्तसन्दर्भेषु कुत्रापि मल्लानां छात्रावस्थायाः शिक्षणक्रमस्य च वर्णनं नोपलभ्यते। कृतविद्यानां मल्लानां कलायाः प्रदर्शनानि बहुजनसङ्कुले 'समाज' इति प्रसिद्धे उत्सवे राजाज्ञयाऽभूवन्। एतादृशानां समाजानां वर्णनानि महाभारते[5] हरिवंशे[6] विष्णुपुराणे[7], जैनानाम् उत्तराध्ययनसूत्रस्य टीकायाम्[8], अन्यत्रापि च दृष्टिपथमुपयान्ति।

सर्वप्रथमं तावद् भूमेरन्वेषणं संस्करणञ्च। कुरुराजस्य धृतराष्ट्रस्याज्ञया प्रवृत्तेन विदुरसाहाय्येन आचार्येण द्रोणेन समाजार्थे नगराद् बहिः समा, अवृक्षा, निर्गुल्मा, उदक्प्रस्रवणान्विता च भूमिर्मापिता। तदनु सुमुहूर्ते कृतमङ्गले तत्र प्रेक्षागारस्य

१. वाल्मीकीय-रामायणम्, युद्ध०, ४०.१३–२८।

२. महाभारतम्, विराट्०, १३. १४–३६।

३. महाभारतम्, सभा०, २३. ४–२६।

४. हरिवंशः, विष्णु०, ३०. ३१–३६।

५. महाभारतम्, आदि०, अध्यायौ १३३–३४; सभा०, अ० २१, २३, २४।

६. हरिवंशः, विष्णु०, अध्यायः २८. २९, ३०।

७. विष्णुपुराणम्, पञ्चमोंऽशः, अध्यायः २०।

८. उत्तराध्ययनसूत्रम्, अध्ययनम् ४, सूत्रम् १, पृ० २५० ( टीकाभागः )।

रङ्गभूमेश्च निर्माणायाऽऽज्ञप्तम्[1]। हरिवंशे[2] वर्णितमस्ति यत् कंसनिर्मितं प्रेक्षागारं किल 'पूर्वाभिमुखं स्वायतं सुप्रतिष्ठितम् उत्तमागारयुक्ताभिः वलभीभिर्विभूषितं सञ्चारपथसङ्कुलं सार्गलद्वार-वेदिकायुक्तं सुतलोत्तमशोभितं नयनानन्ददायकञ्चासीत्। रत्नज्वालाकुलकाञ्चनचित्राणि, जवनिकाः, विचित्रकुथावृता भूमिः, अन्यानि पटास्तरणानि च महारङ्गस्यास्य शोभामवर्धयन्। स्त्रीणां गणिकानां च कृते जवनिकावृताः प्रेक्षागारा विनिर्मिता आसन्। श्रेणीनां गणानाञ्च अचलोपमा मञ्चाः स्व-कर्मद्रव्ययुक्ताभिः पताकाभिः समलङ्कृता आसन्। अत्र 'काष्ठसञ्चयबन्धनाः' इति पदेन[3] तादृशानामासनानां बोधो जायते, यथा साम्प्रतिके 'सरकस'नाम्ना प्रसिद्धे उत्सवे 'गेलेरी'पदवाच्यानि काष्ठनिर्मितान्यासनानि दृश्यन्ते। सपरिवारस्य नृपस्य कृते मेरुशृङ्गसमप्रभं पूर्वाभिमुखं रुक्मपत्रनिभस्तम्भयुक्तं माल्यदाम्ना सुशोभितं सुविहितमासीदुत्तुङ्गतरं स्थानम्।

तस्मिन्नेव रङ्गवाटे कंसाज्ञया गोमयचूर्ण-(करीष)-राशयः, सुनिखाताः पानकुम्भाः, उदभारसहाः काञ्चनघटाः, फलावदंशपूर्णश्चाङ्गेर्यः, बलयः, कषायकुम्भाश्च उपकल्पिता आसन्[4]। नातिदूरे रङ्गस्य मल्लानां मध्यस्थानाञ्च कृते स्थानानि निर्मितान्यासन्। राजगृहे जरासन्धपुरोहितो युद्धारम्भकाले स्वनृपं रोचनामाल्यमङ्गलादिभिः सह काश्चिदोषधीरदात्[5]। एतादृशीनामोषधीनामुपयोगः प्रदर्शनकालेऽपि सम्भाव्यते।

१. महाभारतम्, आदि०, १३३. ९–११।
२. हरिवंशः, विष्णु०, २८. ६–१५; २९. १–२०।
३. हरिवंशः, विष्णु०, २९. १२।
४. हरिवंशः, विष्णु०, २८. १३–१४।
५. महाभारतम्, सभा०. २३, ४।

## नियुद्धनियमाः प्राश्निकानां कर्तव्यानि च

नियुद्धे मध्यस्था नियुद्धप्राश्निकमर्यादापालकादिशब्देन सम्बोध्यन्ते स्म। मल्लशास्त्रविदो निष्पक्षपातिन एते जना युयुत्सूनां मल्लानां चयने दक्षा आसन्। मल्लयुग्मविनिश्चये निम्नाङ्कितानां गुणानां विचारोऽप्यावश्यक आसीत्—

(१) मल्लानां क्रियाबल-तुल्यत्वम्। संयमस्थैर्यशौर्यव्यायामसत्कार्यबलादिष्वपि तेषां तुल्यत्वमपेक्षितमासीत्[1]।

(२) वयोमर्यादायाः शरीरयष्टयाश्च समानत्वम्[2]।

प्राश्निकानामाध्यक्ष्ये निम्नलिखितानां नियमानां पालनमावश्यकमासीत्—

(१) मल्लयुद्धे कस्यापि शस्त्रस्योपयोगो न कार्यः[3]।

(२) निपातानन्तरं बाहुयुद्धविशारदेन मल्लेन किञ्चिदपि न प्रतिविधेयम्[4]। रङ्गसिद्धिर्निपातादेव सुप्रतिष्ठिता मन्यते स्म।

(३) अवैरोऽयं प्रसङ्गः। नियुद्धे निहते सति स्वर्गप्राप्तिर्न भवति, अतस्तत्र शत्रोः प्राणहरणमवैधं परिगणितम्। श्रीकृष्णेन कंससभायां स्पष्टीकृतोऽयं विषयः[5]।

(४) नियुद्धे श्रमे सति मल्लाः तोयेन करीषेण वा स्वश्रमपरिहारं कर्तुं शक्नुवन्ति स्म। सोऽयं

१. हरिवंशः, विष्णु०, ३०. १२।
२. हरिवंशः, विष्णु०, ३०. १५।
३. हरिवंशः, विष्णु०, ३०. १२।
४. हरिवंशः, विष्णु०, ३०. १६; ३०. २६।
५. हरिवंशः, विष्णु०, ३०. १९–३०।

व्यापारः, 'तोर्यधर्म'-'करीषधर्मा'-दिनाम्ना प्रथित आसीत्[1]।

( ५ ) मध्यस्थानां निर्णयोऽनुल्लङ्घ्य आसीत्।

## नियुद्धप्रदर्शनस्य प्रारम्भः

राज्ञा समुद्घोषिते पूर्वनियोजिते वासरे नानाजनाकीर्णे जनौघप्रतिनादिते समाजवाट इमानि प्रदर्शनान्यभूवन्। तूर्यनिनादिते तस्मिन् रङ्गणे राज्ञः प्रवेशानन्तरं मल्लाः प्रविशन्ति स्म। आदौ तत्र बलिकर्मविधिः। कुरुराजधान्यां सोऽयं विधिः शुक्लाम्बरधरेण शुक्लमाल्यानुलेपनेन वृद्धेनाचार्येण द्रोणेन सम्पादितः। मन्त्रज्ञैर्ब्राह्मणैर्मङ्गलं कारितम्[2]। भीम-जरासन्ध-युद्ध-समये भीमस्य कृते श्रीकृष्णेन जरासन्धस्य च कृते तत्पुरोहितेन मङ्गलं विहितम्[3]।

युद्धारम्भे मल्लाः करग्रहणपूर्वकं परस्पराभिवन्दनं कुर्वन्ति स्म। अधुना एतत्कर्म 'सलामी' पदेनावगम्यते। कार्यस्यास्योल्लेखो महर्षिणा पाणिनिना 'मल्लो मल्लमाह्वयते' इति सूत्रे कृतोऽस्ति[4]। वाराणस्यां राजघट्टनामकात् स्थानाल्लब्धे मृत्क्रीडनके मल्लानां करग्रहणमङ्कितम्[5]। क्रीडनकमिदमनुमानतो द्विसहस्रसंवत्सरेभ्यः प्राचीनं विद्यते।

## मल्लयुद्ध-प्रदर्शनम्

अस्मिन्नवसरे मल्ला विविधैः प्रकारैरात्मनः कौशलं प्रकाशयन्ति स्म। विविधानां नियुद्धकार्यव्यापाराणां नामसूची सङ्कलिता वर्तते, परमेतेषां पदानामर्थविनिश्चये क्वचित्क्वचित् टीकानां साहाय्ये सत्यपि सन्देहबाहुल्यं विद्यते। इतोऽपि कठिनतर एतेषां शब्दानामाधुनिकमल्लशास्त्रदृष्ट्या पर्यायविनिश्चयः। तथापि सम्भाव्यते यत् कर्तुमिदं प्रभविष्यति कोऽपि मल्लशास्त्रविद् बुधवर्यः।

सामान्यत एतादृशाः समाजा राजाज्ञया भवन्ति स्म। तत्र पूर्वनियोजिता योद्धारोऽनाहूता नवागताश्च स्वकौशलं प्रदर्शयितुं पारयन्ते स्म। महाभारते द्रोणसञ्चालिते समाजे स्वपाटवप्रदर्शकामः सूतपुत्रः कर्णोऽर्जुनेन पृष्टे सति 'रङ्गोऽयं सर्वसामान्यः' इत्युत्तरेण स्वकीयं रङ्गप्रवेशौचित्यं प्रदर्शयामास[1]।

समाजस्यास्य प्रारम्भः सूर्योदयाद् भवति स्म[2]।

## मल्लानां वेषः

विष्णुधर्मोत्तर-पुराणे मल्लपरिच्छदस्य वर्णनं विद्यते। एते पीनगात्राः पीनग्रीवशिरोरुहा आसन्[3]। जैनमहापुराणे कंसरङ्गं प्रविशतोः कृष्णबलरामयोः वेषवर्णनं सप्तभिः श्लोकैः कृतमस्ति। सहजमसृणगात्रस्य, घनधृतपरिधानस्य, वज्रसारास्थिबन्धस्य, कठिनपृथुलवक्षसो नन्दसूनोः परिघविधायिनौ भुजौ सिन्दूररञ्जितावास्ताम्[4]। प्राचीननासु कलाकृतिषु कक्ष्याधारकाः चल्लणधारकाश्च मल्लाः दृश्यन्ते। लक्ष्मणपुर-सङ्ग्रहालये एकस्मिन् शिलापट्टे भीम-जरासन्धयोः युद्धदृश्यमुत्कीर्णमस्ति। तत्र चल्लणधारकयोस्तयोः शिथिलौ सुकल्पितौ केशसम्भारौ अवलोक्येते[5]।

१. हरिवंशः, विष्णु०, ३०. १३; ३०.२१।
२. महाभारतम्, आदि०, १३३.२१।
३. महाभारतम्, सभा०, २३. ५; २३. ६।
४. वासुदेवशरण अग्रवालः—पाणिनिकालीन भारतवर्ष, पृ० १६२।
५. काशीस्थहिन्दूविश्वविद्यालयीय-भारतकलाभवनस्थं मृत्क्रीडनकम्, संख्या ४८०७।

१. महाभारतम्, आदि०, १३५. १६।
२. विष्णुपुराणम् ५.२०; ५. २४।
३. विष्णुधर्मोत्तरपुराणम्, ३. ४२; ३. ४५-४६।
४. जैनमहापुराणम्, २. ७०; २. ८८-६४।
५. लक्ष्मणपुरसङ्ग्रहालयीया मूर्तिः, संख्या-एच०,८८।

## मल्लानां राजाश्रयः

हरिवंशे कृष्णबलभद्रयोर्वधं काङ्क्षमाणेन कंसेन चाणूर-मुष्टिकप्रमुखान् स्वमल्लानुपकृतिस्मरणपूर्वकं यदुक्तं तेन राजाश्रयप्रकारस्य बोधो भवति[1]।

मल्ला राजप्रवेशानन्तरं सभाप्रवेशाधिकार-भागिनो भवन्ति स्मेति संभाव्यते। यतो हि कंसे सिंहासनमधिरूढे सति न केवलं श्रीकृष्णादिना, अपि त्वन्यैः राजमल्लैश्चापि रङ्गप्रवेशः कृत आसीत्[2]।

मत्स्याधिपस्य विराटस्य सभायामपि बहवो मल्ला आसन्। बहिर्देशादागतेन जीमूतेन सर्वेषां तेषां पराभवे कृते सति सूदवेषधारिणा भीमसेनेन राजाज्ञया नियुद्धे जीमूतो निहतः[3]।

'उत्तराध्ययनसूत्र'टीकायामुपलभ्यमानायामट्टन-मल्लकथायां शूर्पारकाधिपेन सिंहगिरिणा संपादितम् अट्टन-पराभवक्षमस्य मात्स्यिकमल्लस्याऽन्वेषणस्य आश्रयदानस्यापि च वर्णनमवलोकयितुं शक्यते[4]।

## मल्लानां सामाजिकी स्थितिः

मनुना स्वस्मृतौ मल्लानां झल्लानाञ्च हीन-वर्णत्वं सूचितमस्ति[5]। अधुनापि वङ्गदेशे 'मलो-झलो' इति पदवाच्या जनाः शूद्रा ज्ञायन्ते। जैन-कल्पसूत्रे मल्लानां गणना नट-नर्तक-मौष्टिकादिभिः सह निम्नवर्ग एव कृता[1]। महाभारते मोक्षधर्मे मद्य-मांस-लोहचर्म-विक्रयोपजीविभिः सह रङ्गावत-रणमपि विगर्हितं कर्मेति ख्यापितम्[2]। विष्णुपुराणे कैवर्त-कुण्डाशी-गरदादिभिः सह रङ्गोपजीविनोऽपि निरयगतिभाजो भवन्तीति सूचितम्[3]।

## मल्लविद्यायाः प्रसिद्धस्थानानि

प्राचीने साहित्ये मल्लप्रसिद्धानां देशानां विषये केचिदुल्लेखा उपलभ्यन्ते। कृष्णरिपुश्चाणूर आन्ध्र-देशीयो मल्ल आसीत्[4]। अन्यश्च मुष्टिकः कारुष-देशाद् ( बिहारप्रान्तस्य शाहबाद-विषयः ) आगत आसीत्[5]। महाभारते इदमपि वर्णितमस्ति यद् यवनदेशीयाः ( भारतवर्षस्य उत्तरपश्चिमसीमान्ते स्थिताः 'ग्रीस'-निवासिनः ), काम्बोजदेशीयाः ( सिन्धुनदस्य पश्चिमोत्तरवर्ति-भूभागनिवासिनः ), मथुरादेशीयाश्च जना नियुद्धकुशला इति[6]। उपरि-निर्दिष्टाऽट्टनमल्लकथानुरोधेन उज्जयिनी, शूर्पारकः ( सोपारा ), भरुकच्छ ( भडौंच ) इति स्थाना-न्यपि मल्लविद्यायाः कृते सुप्रसिद्धानि आसन्निति सूचयितुं शक्यते।

एतत्स्वरूपमासीत् संक्षेपतो नियुद्धविद्यायाः प्रारम्भिके काले। विक्रमसंवत्सरस्य एकादशे शतके निर्मिते 'मानसोल्लास'-नामके ग्रन्थे, अप्रकाशिते 'मल्लपुराणे' अन्यत्रापि च शास्त्रस्यास्य विस्तारो वर्तते। तस्य विचारं यथावसरं प्रसाधयिष्यामः।•

---

१. हरिवंशः, विष्णु०, २८. २०-२१।

२. हरिवंशः, विष्णु०, २६. २०।

३. महाभारतम्, विराट्०, १३. १४-३६।

४. उत्तराध्ययनसूत्रम्, अध्ययनम् ४, सूत्रम् १, ( टीकाभागः ), पृ० २५०।

५. मनुस्मृतिः, १०.२२। काणे-पाण्डुरङ्ग वामनः, हिस्ट्री ऑफ धर्मशास्त्र, खण्डम् २, भागः १, पृ० ८२, ९०।

१. श्रमण भगवान् महावीर, पृ० २००।

२. महाभारतम्, शान्तिपर्वणि, मोक्षधर्म०, २८४. ४-६।

३. विष्णुपुराणम्, २. ६. २१।

४. हरिवंशः, विष्णु०, ३१. ८।

५. हरिवंशः, विष्णु०, ३१. २४।

६. महाभारतम्, शान्ति०, राजधर्म०, १०१. ५।

क्षेत्रे समुल्लेख्येन सेवाकार्येण जनताजनार्दनं प्रीणयन्त्यो विजृम्भन्ते ।

आर्यमहिला-हितकारिणी-परिषदो मुखपत्रिकेयम् 'आर्यमहिला' परिषदः स्थापनायाः पूर्वमेव १९१८ मितेशवीयवत्सरस्य अप्रैल ( वैशाख )-मासि प्रकाशपदवीमुपगता, परिषदः सविधि स्थापना च १९.१२.१९ दिनाङ्के समभूत् । प्रारंभे त्रैमासिकीयं पत्रिका १९२६ मितेशवीयवत्सरतो मासिक-पत्रिकारूपं धृत्वा अद्ययावत् तदेव रूपं धारयन्ती विद्योतते ।

सर्वथा पाश्चात्त्य-सभ्यताभिभूते भारतीय-नारी-समाजेऽपि सेयं पत्रिका निर्भीकं निःसङ्कोचं प्राचीन-भारतीय-नारीस्वरूपं तत्कर्तव्यञ्च स्पष्टमुद्घोषयन्ती एकमात्र-नारीप्रतिनिधि-पत्रिकेति कथने नातिशयोक्तिलेशोऽपि । अस्मिन्नेव विशेषाङ्के सम्पादकीयलेखेऽपि पत्रिकायाः सुनिर्धारितोऽयं सिद्धान्तः परया स्पष्टया भाषया समुट्टङ्कितोऽस्ति । तमेव सिद्धान्तमुपबृंहयन्तो वयमपि स्पष्टं सूचयामो यद् देशस्य समुत्कर्षो नारीजातिष्वेव प्रतिष्ठितः । भारतेन चारित्रिकदृष्ट्या यज्जगद्गुरुत्वपदं अतीते निर्विरोधमधिगतं तत्रापि अस्या एव जातेर्महान् दायः । शक्त्यैव ब्रह्म शिवो जायते, अन्यथा शव इव संसृतौ सर्वथा बहिष्क्रियते इति विदुषां न तिरोहितम् । सेयं भारतीया नारी सम्प्रति स्वपदात् च्युता समग्रं राष्ट्रमपि समुन्नतिशिखरात् च्यावयन्ती परां शोचनीयतामुपगता वर्तते । 'आर्यमहिला' तासां योगिनी, ब्रह्मवादिनी, भक्ता, राष्ट्ररक्षिका एवमादीनि रूपाणि द्रष्टुं समुत्सुका । तत्रापि पतिप्राणा साध्वी सच्चरित्रा सावित्रीति रूपमतितरां स्पृहयति, तदेव प्राथम्येन समुपदिशति च । सर्वाऽपि सस्यसम्पत्तिः क्षेत्रशुद्धिमपेक्षते । अतस्तदर्थमेव सर्वैर्भारतीयैः प्रयतनीयम् । मातृत्वपुष्पोद्भवात्पूर्वं नूनं ताः पति-हृदयदुर्गे संरक्षणीयाः । यावज्जीवं च तासां पावित्र्यं रक्षणीयम् । 'त्रीण्येतानि सकृत् सकृत्' इति धर्मवचनानुसारं दौर्भाग्याद् वैधव्यमापन्नाश्च संन्यासिनीनामादर्शं विजृम्भयन्त्यो गृहकुटुम्बं विश्वकुटुम्बतां परिणमय्य विश्वहितं तदनुरोधेन स्वात्मोद्धारञ्च समाचरन्तु । पुनस्ता न जातु नारकीयायां संसृतौ प्रत्यावर्तयन्त्विति सर्वधर्मसारः । पारिवारिकैरपि तास्तपस्विन्यो यथा विश्वमङ्गलसाधकं वैराग्योपबृंहितं तपो निरापदं समाचरितुं प्रभवेयुस्तथा परमया उदाराशयतया प्रयतनीयमिति पृथक् वक्तव्यं नावशिष्यते ।

विशेषाङ्कस्य सर्वे लेखा अस्यैव भावस्य आदर्शस्य चोपबृंहणं कुर्वन्ति । विशेषाङ्कः सर्वथा सङ्ग्राह्यः । एतादृशविशेषाङ्क-प्रस्तुतीकरणाय सर्वे सम्बद्धाः सहयोगिनः सम्पादकाश्च अस्माकं धन्यवादार्हाः ।

**—गो० न० वैजापुरकरः, सम्पादकः 'सूर्योदय'स्य ।**

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६० ) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराणसी।**

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य

मासिकं मुखपत्रम्



वर्षम् ४५



अङ्कः ६



सम्पादकः

गो० न० वैजापुरकरः



जून
१९६९



वार्षिक-मूल्यम्
५) रूप्यकाणि



प्रत्यङ्क-मूल्यम्
अर्धरूप्यकम्



## गैर्वाणी मञ्जुभाषिणी • श्री बटुकनाथशास्त्री खिस्ते

पवनावकीर्ण - नवमेघकुन्तला
जनजीवनाऽवनविधौ पटीयसी।
गगनस्थली हृदयसम्भृतं रसं
जगतां हिताय परितो निषिञ्चति ॥ १ ॥

निखिलाः प्रसीदत वसुन्धरासुताः
भवत प्रमोदमिलिताः परस्परम्।
इति जल्पतीव शुककोकिलावली
कलकण्ठकूजितमिषेण सर्वतः ॥ २ ॥

गिरिवृन्दनिर्झर-शतोल्लसन्नदी-
नदसिक्त - सस्य - परिमेदुरच्छविः।
सकलस्य मानवकुलस्य पालने
वसुधा सुधार्द्रहृदया प्रसीदति ॥ ३ ॥

रजनी निजाङ्कमधिरोप्य कोमलं जननीव शाययति मञ्जुगीतिभिः।
दिवसोऽपि कर्मसु नियोजयन्नयं दिशतीव बान्धवहितानुचिन्तनम् ॥ ४ ॥

सरसाशयस्य मुखमारुताहतः कलमेव वेणुरनुगुञ्जति क्षणात्।
मधुरेण वाङ्विनिमयेन विश्वतः शिशिरीकुरुध्वमहितान् हितानपि ॥ ५ ॥

अनुवासरं विकसदम्बुजोपमं हृदयं निवेदयत विश्वबन्धवे।
शतधा तदङ्घ्रिकिरणैर्विकस्वरं सुरभीकरिष्यति दिगन्तमण्डलम् ॥ ६ ॥

चिरबन्धुभावमय - सूत्रगुम्फिताः कुसुमोपमा - स्त्रिभुवनीविमोहनाः।
धरणीसुताः प्रविरचय्य मालिकां जननीं प्रमोदयत केलिविभ्रमैः ॥ ७ ॥

इयं रचना नातिचिरात्संपन्ने मैक्सिकोनगरस्थ-विश्वक्रीडा-महोत्सवे भारतीय-भाषाणां प्रतिनिधि-रचनारूपेण स्वीकृता, तदीय मुखपत्रिकायां स्पेनिश-आंग्ल-भाषानुवादेन सह प्रकाश्यमाना वर्तते।

## मयूरः--

श्रीध्यानसिंह मखीज

अद्भुतां कमनीयतां बिभ्राणः पक्षी मयूरो नूनं राष्ट्रियैक्यस्य सबलं सूत्रम् । उत्तरे कार्तिकेयवाहन-रूपेण समादरणीयोऽयं दक्षिणेऽपि भगवतः सुब्रह्मण्यस्य वाहनरूपेण समं समादरणीयः । भगवतो द्वयस्य एकं वाहनम्, देवद्वयस्य अनुयायिनाम् एक-मात्र आराधनीयोऽयं पक्षी एकताद्योतकः, अत एव नूनं राष्ट्रियपक्षि-पदं भजते ।

मयूरस्य इतिहासेन संस्कृत्या च चिरन्तनः सम्बन्धः । अस्माकं देशस्य साहित्ये लोककथा-धार्मिककथासु बहुत्र चान्यत्र स्थलेषु मयूरः चर्चितो दृश्यते । श्रीमद्भागवते भगवान् श्रीकृष्णचन्द्रः पिच्छबर्हो गीयते । महाकविना कालिदासेन 'मेघदूते'ऽपि मयूरो वर्णितः । भारतीय-शिल्पकला-चित्रकलयोः चिरात् मयूरः सविशेष पदं बिभर्ति नैकेषु मन्दिरेषु मयूरस्य सुन्दराः प्रतिमाः विल[illegible]क्यन्ते । 'एलोरा'-एलिफेण्टा-गुहासु अपि मयूर[illegible]कृतयः उत्कीर्णाः । विश्वप्रसिद्धासु अजन्तागुह[illegible]स्वपि मयूरचित्राणि उपलभ्यन्ते ।

सौन्दर्योपासको यवनसम्राट् शाहजहाँ-रा[illegible] मयूर-सौन्दर्येण एतावान् मुग्धोऽभवत् यत् [illegible] मयूराकृति स्वीयं राजसिंहासनं निर्मापितम् सिंहासनमिदं यावनभाषायाम् 'तख्त ताऊ[illegible]' इत्युच्यते । सिंहासनेऽस्मिन् बहुमूल्याः वज्रमण[illegible] जटिला आसन् । 'ताऊस' शब्दो हि यावनभाषा[illegible] 'मयूरे' एव सङ्केतितोऽस्ति । कालान्तरे भारत[illegible]

( शेषांशः ३ आवरणपृष्ठे )

## अनुक्रमः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

४५ वर्षे ] वाराणसी, ज्येष्ठाषाढौ: २०२६ : जून, १९६९ ई० [ ६ अङ्कः

## तद् विष्णोः परमं पदम्

•

यन्नित्यं श्रुतिभिर्मुहुर्मुहुरहो संस्तूयमानं स्थितं
यद् ब्रह्मेन्द्रसुरादिकैरहरहर्ध्यातं च गीतं पुनः।
यत्सर्वेषु विराजितं मुनिनुतं दिव्यं परं पावनं
तद्विष्णोः परमं पदं श्रय इह स्वाराज्यसौख्याम्बुधिम्॥ १॥

यत्सौख्याम्बुधिलेशतः सुरुचिरा ब्रह्माण्डभूकोटयो
यत्प्राप्य स्थिरमोक्षदं पुनरसौ नावर्तते भूतले।
'एषोऽस्य' श्रुतयो वदन्ति परमानन्दश्च यो ज्ञानिन-
स्तद्विष्णोः परमं पदं श्रय इह स्वाराज्यसौख्याम्बुधिम्॥ २॥

सूर्याचन्द्रमसौ न यत्र हुतभुङ् नेमास्तथा विद्युतो
नैते यत्र वसन्ति तारकगणा यद् भासितुं विश्रुतम्।
यद्भासैव विभाति सर्वमिह यद्भान्तं स्वतः शाश्वतं
तद्विष्णोः परमं पदं श्रय इह स्वाराज्यसौख्याम्बुधिम्॥ ३॥

तुच्छा दुःखमयी ह्यसत्यपि च सा दुर्लङ्घनीया यदि
मामेवेह भवेत्प्रपन्न इति चेन्मायां तरेद् योऽवदत्।
यं लब्ध्वा परमं स्वकं पुनरहो मायां न पश्येत् क्वचित्
तद्विष्णोः परमं पदं श्रय इह स्वाराज्यसौख्याम्बुधिम्॥ ४॥

—समर्थानुगृहीत-महात्मा श्री श्रीधरस्वामी—

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

**—स्वर्गीयाः श्री विन्ध्येश्वरीप्रसाद शास्त्रिणः—**

आर्यकालगणनामृतान्वितां संविभाव्य विदुषा तु तद्विदा ।
प्राप्नुवन्ति गजसन्निमीलिकां घूर्णितस्वशिरसो भवन्ति च ॥ ४१ ॥

४२. आर्यशास्त्र-कथितं धरातला-
ऽऽकर्षणं ध्रुवमतद्विदो जनाः ।
न्यूटनेन परिलक्षितं पुरा
शिक्षयन्ति निजबालकानिति ॥

४३. भूभ्रमला च दिननायकोऽचल
आर्यभट्ट-गदितं मतं त्विदम् ।
हन्त बोधविधुरा वदन्ति ते
पश्चिमीय-विदुषा प्रवर्तितम् ॥

४४. विद्वदार्य - परिचिन्तिताऽद्भुतं
दैविकं ग्रहणकारणं च ते ।
नाऽवधार्य बत विभ्रमान्विताः
खण्डयन्ति परिगर्हयन्ति च ॥

४५. भूस्थितिश्च किल शेषमस्तके
नैव चास्य वचसः सदाशयम् ।
संविचिन्त्य बुधमानिनो जनाः
कुञ्चयन्ति निजनासिकाः सदा ॥

४६. मानचित्र-शिरसः सदा स्थिति-
श्चोत्तरे कथमिवाऽऽदृता बुधैः ।
वासर - क्रम - विकास-कारणं
हिन्दु-शास्त्रत इहाऽवबुद्ध्यते ॥

४७. एतदादिक - समस्त - संशय-
च्छेदकानि विविधानि साम्प्रतम् ।
पुस्तकानि विरचय्य भूतले
यान्तु तूर्णमिह संप्रकाशताम् ॥

४८. अन्य-धार्मिक-वरेण्य-पुस्तका-
न्यारचय्य हृदय-स्थितासताम् ।
अन्धकार-तति-राशु हन्यतां
येन भारतयशः समृध्नुयात् ॥

४९. सम्प्रति प्रतिपलं प्रयत्यतां
लोक - सङ्ग्रह-परै - र्भवादृशैः ।
आर्य-सांस्कृतिक - बीज-रक्षणं
संभवेदिह युगे कलावपि ॥

किं वदामि निजदेशदुर्दशां शिक्षिता अपि सुमेधसो नराः ।
स्वीय-धार्मिक-समाज-सभ्यतां सर्वदा विगुणयन्ति सर्वदा ॥ ५० ॥

(क्रमशः)

सम्पादकीयम्

# अस्पृश्यता-काण्डं गोवधनिरोध-प्रश्नोपेक्षणस्य दुरभिसन्धिः

पटना-नगरस्य 'सबडिवीजनला-'ऽधिकारिणा श्री गणेशप्रसादेन पुरी-पीठाधीश्वराणां जगद्गुरु-शङ्कराचार्याणां श्री निरञ्जनदेव तीर्थपादानां विरोधे 'विहार-युवसभा'या प्रधानमन्त्रिणा श्री शिवानन्द त्रिपाठिना प्रस्तुतोऽभियोगो विषयस्यास्य परीक्षण-कारिणः मजिस्ट्रेट श्री एस० एन० सहायस्य प्रति-वेदनाधारेण निरस्ततां नीतः। जगद्गुरूणामुपरि अभियोगोऽयं गतमार्चमासि पटनानगरे समा-योजितस्य विश्वहिन्दू-सम्मेलनस्यावसरे व्यक्ती-कृतानाम् अस्पृश्यताविषयक-विचाराणां विरोधे प्रस्तुत आसीत्, यमधिकृत्य विगतदिवसेषु देशे सभ्यम्मन्यै उत्तरदायिभिः कतिपयैः नागरिकैः शासनारूढनेतृभिश्च एक एव समाक्रोशो विहितः।

सब-डिवीजनलाऽधिकारिणाम् आदेशेन परी-क्षणकर्तृभिः पूर्वोक्तैः मजिस्ट्रेट श्री सहायमहोदयैः स्वीये प्रतिवेदने लिखितं यत् अभियुक्तम् अधिकरणे समुपस्थापयितुम् अभियोगश्च अग्रे विचारयितुं पर्याप्त आधारो न वर्तते। श्री सहायेन स्वीये परी-क्षण-प्रतिवेदने 'प्रेस ट्रस्ट ऑफ इण्डिया'-संस्थाया पटनाशाखाया व्यवस्थापकानां श्री एस० के० घोष महोदयानां देनन्दिनी समुद्धृता ये किल जगद्-गुरूणां तस्मिन् वक्तव्यावसरे समुपस्थिता आसन्। दैनन्दिन्यां जगद्गुरूणामेते शब्दाः समुद्धृताः— 'अहं राजनियमानामनुमन्ता नागरिकोऽस्मि। अस्पृ-श्यता-विषयकं नियममपि नोल्लङ्घयिष्यामि। किन्त्वहं नियमस्य धर्मस्य च सम्माननाय पूर्णमधि-कृतः।' श्री सहायानामयमन्तिमो निष्कर्षो यद् 'अस्पृश्यता-प्रचारो हि नियमतोऽपराधः। परं यदि कश्चित् स्वीये व्यक्तिगतजीवने अस्पृश्यतामिमां व्यवहरेत्तर्हि स राजनियमतो दण्डार्हो न भवेदि'ति।

अवसरेऽस्मिन् विवेकशील-नागरिकान्यतमपदेन 'जगद्गुरवो विजयन्तेतराम्' इत्युक्त्वा तेषां चरणयो राष्ट्रप्रातिनिध्येन प्रार्थयामहे यत् तत्रभवन्तो भवतां सर्वोच्चपदस्य विप्रतीपं विहितम् अकाण्डताण्डवं विस्मरन्तु, देशेऽस्मिंश्च पूर्ववत् सहजसुलभां कृपादृष्टिं विदधत्विति।

नाभवदयं इंग्लैण्डदेशः अरबदेशो वा, यदीयाः शासकाः सर्वोच्च-'विशप'ख्य-धर्मगुरुभिः सर्वोच्च-यवनधर्मगुरुभिः सह इत्थमभद्रव्यवहारं कृत्वाऽपि शासनपदे प्रतिष्ठिता भवेयुः। विश्वस्मिन्नद्य भारतस्य किमपि स्वतन्त्रं मूल्यं नास्ति; स्वकीया सभ्यता, संस्कृतिः श्रद्धायाः केन्द्रबिन्दुर्वा न वर्तते यमधिकृत्य राष्ट्रमिदमात्मोत्सर्गाय प्रसरेत्! भौगोलिकी सीमा नहि कश्चित् चेतनः श्रद्धाबिन्दुः, साऽपि चास्मद्राष्ट्र-नायकैः स्वीयेन अविवेकेन छिन्ना भिन्ना, अहरहश्च तच्छेदन-भेदनयत्नानि अप्रतिषिद्ध्य तस्याः श्रद्धा-बिन्दुता स्वेनैव अपहार्यते!

भारतमिदं नूनं हिन्दू-राष्ट्रम्। हिन्दू-संस्कृतिरेव तस्य स्वकीया संस्कृतिः। काममत्र शतशोऽन्य-

संस्कृत्युपासका वर्तेरन्, प्रेम्णा वर्तेरंश्च । किन्तु तेषां कृते भारतीयहिन्दूसंस्कृतिविषये निष्ठाभावोऽनिवार्यतः समाश्रयणीयो भवेत् । साम्प्रदायिकताधारेण भारतराष्ट्रस्य विभाजनकारिणः केन मुखेन वक्तुं प्रभवेयुर्यद् भारतं न हिन्दूराष्ट्रमिति । आंग्लैः स्वार्थवशात् हिन्दुर्दूषितः । अस्माकमेव एते तेषामन्धानुकारिणस्तच्छद्मवञ्चिताः स्वराष्ट्रस्य हितं घ्नन्ति । वस्तुतो विश्वस्मिन् सनातन-वैदिक-हिन्दूसंस्कृतिरेव एतादृशी वर्तते, यत्र न केवलं विभिन्नधर्मीया मानवा एव, पशु-पक्षिणः, किं बहुना महाकालो व्यालोऽपि पूज्यते । प्राणिमात्रम् अमृतस्य सन्ततिं मत्वा भ्रातृत्वस्य दिव्य आदर्शः समुपस्थाप्यते । दृढमाशास्महे यद् भारतमिदं स्वीयेऽस्मिन् स्वत्वे स्थिरं स्यात्तदा विश्वस्य महतोऽपि महद् राष्ट्रमस्य केशमपि वक्रीकर्तुं न पारयेत् । प्रत्युत सर्वाणि राष्ट्राणि अस्य पुरतो नतमस्तकान्येव भवेयुः । प्राकृतिकदृष्ट्या सर्वतः सम्पन्नेन प्राचीनतमेन स्वनिष्ठायामक्षुण्णेन राष्ट्रेण सह विषयविशेषे सम्पन्नं प्रत्नानुभवविधुरं नवं राष्ट्रं स्पर्धितुं कथं पारयेत् ? आवश्यकता वर्तते, वयं स्वस्वरूपं जानन्तु, तत्र च परिनिष्ठिता भवन्त्विति ।

श्री जगद्गुरुपादानां दृष्ट्या विचार्यमाणे यदा तेषां वक्तव्यमाश्रित्य एताः समालोचनाः प्रारब्धास्तदैव अप्रैलमासस्य प्रथमसप्ताहे राजधान्याः वृत्तपत्रेभ्यो वक्तव्यमेकं सम्प्रेष्य तैः स्वीयभाषणस्य स्पष्टीकरणं कृतम् । तस्मिन् वक्तव्ये तैः स्पष्टमुक्तं यद् "गोवधविरोधि-महायानविषयिण्याः पुनरावर्तयिष्यमाणाया मदीययोजनायाः पूर्वमेव निहितस्वार्थिभिः जनतामनांसि अस्पृश्यता, राष्ट्रगानस्य च प्रश्नयोः केन्द्रितं कर्तमेव अकाण्डताण्डवमिदं प्रारब्धमास्ते । अत आवश्यकं संवृत्तं यत्पाटलिपुत्रनगरे मया यदुक्तं तत्त्वतस्तत् प्रकाशपदवीमुपेयात् ।

"यावदस्पृश्यतायाः प्रश्नः, विषयोऽयं पूर्णतो वैयक्तिकः । हिन्दू-कुटुम्बे कतिपये अवसरा एतादृशा आयान्ति यदा स्वकीया एव सम्बन्धिन आप्ताः 'अस्पृश्याः' परिगण्यन्ते । अस्पृश्यता नाम सहजं व्यावहारिकं विधानम्, यद्धि पिता-पुत्रयोः, मातृतदपत्येषु अन्येषु चाप्तेषु अवसरविशेषे सम्मतम् । परमस्य समाजस्य सामूहिकव्यवहारेण सह न कोऽपि सम्बन्धः । जातिप्रथा अस्पृश्यतातः सर्वथा भिन्नं वस्तु । एकस्यामेव जातौ सम्प्रदाये च अस्पृश्यता जागर्ति, तस्याः पालनस्य अधिकारेण च स्वात्मानं न वयं निषेद्धुं शक्नुमः ।

"यद्यप्यहमस्मि एकस्तुर्याश्रमी, ( सर्वसङ्गत्यागी ); तथापि विवशस्य रुग्णस्य च 'हरिजना'ह्वस्य कीदृशीमपि सेवां कर्तुं प्रस्तुतः । पाटलिपुत्रीयतत्सभामञ्चतो मया घोषितमासीत् यदहं समाजस्य निम्नतमश्रेणीयव्यक्तेरपि सेवां कर्तुं सन्नद्धः । विषयमिमञ्चानुमन्ये यत् हरिजने शेषहिन्दूसमाजे च भेदभावो न भाव्य इति । हरिजनैः सह भेदभावभावना वस्तुतो मनसाऽपि परित्याज्यैव, हिन्दूसमाजे च तेषु ऐकात्म्यभावो विधेयः" इति ।

अपरमपि एकं वस्तु अत्र वर्तते, यद्धि अस्मन्मित्रेण एकेन सम्मेलनप्रत्यक्षदर्शिना संसूचितम् । विवादविषयस्य वक्तव्यस्यास्य पूर्वं तत्र एकेन केन्द्रीयमन्त्रिमहोदयेन सम्मेलनाध्यक्षाः काशिराजा उपालब्धा यद् भवतां काशिकायां मन्दिरपूजकाः 'पण्डे'नामधारिणोऽतितराम् अनपेक्षिता व्यक्तिनो भवन्ति, मूढाश्च वर्तन्ते । अतस्तेषां प्रशिक्षणस्य व्यवस्था भाव्या । प्रशिक्षिताः पण्डे-नामधारिण एव व्यवसायममुं कर्तुं प्रभवेरन् । जगद्गुरवस्तत्र समुपस्थिता आसन् । तैर्मन्त्रिमहोदयानामस्य वक्तव्यस्य दृढं समर्थनं कुर्वद्भिरुक्तं यत् "नूनं मन्दिरपूजकानामेतेषां शिक्षणस्य सुव्यवस्था भाव्या । अत्र मे हार्दिकं

समर्थनम्। किन्तु माननीय-मन्त्रिमहोदयेभ्य इदमपि साग्रहं समनुरुन्धे यत्ते मन्त्रिणामपि प्रशिक्षणस्य अनिवार्यतां कारयन्तु। मन्त्रिकार्य-प्रशिक्षित एव मन्त्रिपदे आरोढुं शक्नुयात्। अद्य अप्रशिक्षिताः मन्त्रिपदमारुह्य राष्ट्रस्य यावतीं हानिं समाचरन्तो दृश्यन्ते, तदपेक्षया एते 'पण्डे'-नामधारिण-स्तपस्विनोऽतितरां तां न्यूनां कुर्वन्तीति सुस्पष्टमेव।" वक्तव्यमत्र नावशिष्यते यन्मन्त्रिमहोदयेभ्य एतन्-मधुरं व्यङ्ग्यं कियन्मर्मस्पर्शि स्यात्। न जाने अस्पृ-श्यताविषयकस्य तेषां वक्तव्यस्य तूलस्य तालकरण-रूपे प्रयासे इदमपि कियतांऽशेन प्रभावकारि स्यात्। किन्त्वेतत्सर्वं यवनिका-पृष्ठे नेपथ्यवर्तिनो विषयाः। समलङ्कृत्य रङ्गमञ्चे समुपस्थितानां मुखानां पुरतस्तेषां किन्नाम मूल्यम् ?

जगद्गुरूणामस्य वक्तव्यस्य विरोधे शासना-न्तर्गतैः नैकैः आपातदर्शिभिः ये ये उत्पाताः, प्रदर्शनम्, प्रतिकृति-दाहादिरूपाः सामान्याभियान-प्रकाराः कृतास्तेषां विषये किं वक्तव्यम् ? सोऽयं जनानां गड्डलिका-प्रवाहः सुपरिचित एव। दौर्भा-ग्यात् द्वाविंशत्यधिकवत्सरेभ्यः स्वतन्त्रानपि जना-नभिभूय नृत्यतो व्यापकस्य अशिक्षाभूतस्यैवेदं दुर्विलसितं यदद्यापि सोऽयं गड्डलिकाप्रवाहो भूयसा भारतीयजनतासु दृश्यते। तद्विषये नाधिकं वक्तव्यमास्ते।

किन्तु भारतस्य विधाननिर्मातृसभाया अध्यक्षा अपि विषयेऽत्र यथाऽऽत्मसंयमं परित्यक्तवन्तः, नूनं स राष्ट्रस्य कृते महान् शोकावसरः! कोऽपि विवेकी देश एतादृशान् अजितेन्द्रियान् क्षणमपि राष्ट्रविधान-निर्मातृपरिषदः पवित्रे अध्यक्षासने आसीनं द्रष्टुं न शक्नुयात्। किन्तु साम्प्रतं भारतस्य केन्द्रीयं शासनं विनोदकल्पमिव संवृत्तम्। यद्यद्य समुपस्थिताः स्युः, सर्वश्री लालबहादुरशास्त्रिणः पण्डित नेहरू-महाभागाः, देशरत्न-राजेन्द्रप्रसादाः, किं बहुना, राष्ट्रपितरो महात्मगान्धिनस्तदा ते नूनमेतेषां स्वीयानां राष्ट्रकर्णधाराणामस्मिन् कृत्ये अश्रवः पातयेरन्।

एतादृशेऽवसरे वृद्धपितामहा अभिनवचाणक्याः चक्रवर्ति राजगोपालाचार्याः समाकर्षयन्ति नश्चे-तांसि यैरत्र विषये महता संयमेन समालोचनं कुर्वद्भि-रुक्तम् यत् 'मुधैवायं प्रश्नस्तूलतस्तालतां नीतः, यद्धि सर्वथाऽनपेक्षितमासीत्' इति। ते 'बापू'-महा-भागानां 'समधी'-महाभागाः, तेषां राजनीतौ क्रीडिताः कुशला राजनीतिविशारदाश्च जानन्ति यद् बापू-युगेऽपि प्रश्नोऽयं बलात् समाहितो नाभ-वत्। तेषां तादृशे एकस्मिन्नभिक्रमे स्वविचाराणां भावुकतया बलिं दत्त्वा पश्चात् मनस्तापमनुभवन्तो विश्वकवयो रवीन्द्रनाथा अपि तैः निकटतो दृष्टाः। इदमेव कारणं यत्तैरत्र सूत्ररूपेण स्वीय-मतप्रका-शनस्य चातुर्यं प्रादर्शीति।

राष्ट्रगान-विषयकं प्रस्तुतं विवादं मीमांस्य-मानैर्जगद्गुरुभिस्तत्र वक्तव्येऽग्रे उक्तं यत् "वृत्त-पत्रेषु प्रकाशितं सर्वमपि वृत्तं आमकमनृतञ्चास्ते। वस्तुतस्तत्र सम्मेलन-समाप्तौ मया 'वन्दे मातरम्' राष्ट्रगीतं गातुं समनुरुद्धम्। किन्तु स्वागत-समितेरध्यक्षेण संसूचितं यत्सम्बद्धं दलं 'जनगण-मन' इति राष्ट्रगीतमेव गातुं सन्नद्धमास्ते। तदुपरि मया सूचितं यद्येवं तदा किमपि न गेयम्। ततो-ऽध्यक्षेण अधिवेशनसमाप्तिरुद्घुष्टा, अहञ्च सभा-स्थलतः प्राचलम्। अतो मे सभास्थलतो बहि-र्गमनस्य प्रश्न एव न प्रादुर्भवति। कतिपयैः क्षणैः 'कांग्रेसजनैः' सदस्यभूतैः 'जन-गण'-मन-गीत-गानस्य आग्रहो विहितः। ततस्तद्गानञ्च समभूत्" इति।

जगद्गुरूणामेतादृशेन स्पष्टतरेण वक्तव्येन

विवादोऽयं तदैव शमनीय आसीत् । किन्तु तैर्वक्त-व्यस्य प्रारम्भे सङ्केतितेन, प्रारप्स्यमाण-गोरक्षा-महाभियानं तदीयसर्वोच्चनेतुः जनसाधारणे इत्थं हीनतापादनेन, विफलीकर्तुं सुनियोजितेन, दुरभिसन्धिपटलेनैव तेषां निहितस्वार्थानां चक्षुंषि समावृतानि । अत एव तैरेवं जनसाधारणं पथभ्रष्टं कर्तुमभिक्रमो विहितः ।

वयं तु अन्यदपि एकं वस्तु अत्र सन्दिहानाः स्मः । तथाकथित-राजनैतिक-'परिगणित'स्मन्येभ्यः 'सर्व-समान'-शासनद्वारा प्रदत्तस्य विशेषसौविध्यस्य अवधिः समाप्तप्राय आसीत् । पुनरसमये तदवधे-र्वर्धापनं किल विवेकिनां समाधानमन्तरा शासनस्य कृते दुष्करमासीत् । अत एव तेनेत्थं स पन्था निरापदः कृतः । तत्रापि शासकानां मतप्राप्तिरूप-क्षुद्रतमस्वार्थमन्तरा न कोऽपि हेतुर्दृश्यते । किमित्थं हरिजनेषु आत्मीयताप्रदर्शनकारिणां शासने सर्वे हरिजनाः सर्वतः किमु वक्तव्यम्, दैनिकजीवनस्य आवश्यकतादृष्ट्याऽपि सम्पन्नाः निश्चिन्ताश्च वक्तुं शक्यन्ते ? प्रश्नस्यास्य सर्वेक्षणकर्तुः कस्यापि तटस्थस्य प्रतिवेदनं विषयेऽत्र अतितरां निराशा-जनकमेव प्रस्तुतं भवेन्नूनम् । इदं पुनः सत्यं यत्कति पयानां तद्वर्गीयनेतृणां स्वार्थसिद्धिर्नाम । मता-दानसमये त एव सुरासुन्दर्याः विस्तृतं जालमास्तीर्य शासनस्य हिताय निरागसान् हरिजन-विहगान् आबद्धुं शक्नुयुः, शक्नुवन्ति च । अत एवेयं विशेष-सुविधा परिगणितेभ्यस्तेभ्यो दीयते । अन्यथा अद्य किल केन्द्रे उच्चश्रेणीयमन्त्रिषु हरिजनोऽप्येको वर्तत एव, राष्ट्रञ्च तं राष्ट्रपतिमपि कर्तुं समर्थयद् दृश्यते, कामं स स्वयमेव तथा न वाञ्छेत् । सत्येव-मियं विशेषसुविधा नूनं राष्ट्रविघटनस्य बीजम्, यस्य देशविभाजनरूपेण विषफलमतीते फलितम् । किन्तु पदलोलुपानामेतेन किं प्रयोजनम् ? फलतो जगद्गुरून् बलिपशुं विधाय तैरत्र विषये आत्म-नीनोऽभिसन्धिः साफल्येन संसाधितः, पुनश्च १०-१५ वर्षेभ्यः कृते विशेषसुविधेयमक्षुण्णतां नीता । देशे एतादृशे आतङ्के प्रसृते सति को नाम तां प्रतिषिद्ध्य व्यापकजनक्षोभस्य भाजनो भवेत् ? अत एव मूकी-भूय विवेकिभिर्देशभक्तैरपि तद्विधानं पारितम् ।

वस्तुतः 'अस्पृश्यता' अस्माकं देशे न काऽपि समस्या । शास्त्रीया अस्पृश्यता न जातु जात्याश्रिता । नूनं परिस्थितिविशेषाश्रितैव सा । सेयं परिस्थितिः कदाचन जन्म यावद् व्याप्नोति । तत्र घृणायाः प्रश्न एव न प्रसरति । 'जन्मना वर्णव्यवस्था'या अनिवार्यमेकमङ्गं सा । 'वर्णो जन्मना कर्मणा वा' इत्यत्र निकटभूतकाले बहुशास्त्रार्थः समभवत् । सर्वस्य तस्य इदमेव सारतत्त्वं यत्सर्वदेशापेक्षया भारते जीवमात्रस्य कृते अनिवार्यतत्त्वरूपायाः वर्ण-व्यवस्थायाः सुदृढता जन्मनैव सम्भविनी । तया समाजसङ्घटने परस्परस्य वृत्तिपरिहरणस्य अव्य-वस्था न जायते, आनुवंशिक-सद्गुणानाम् उत्तरोत्तरं संक्रमश्च सहजः साध्यते । अवश्यमेव अस्य सञ्चालन-कालीनाः-कतिपयसञ्चालकानां स्वीयसङ्कुचितता-कृताः केऽपि अत्याचारा अतीते सम्भूताः, ये कदापि न समर्थनीयाः । सर्वथा निन्दनीयास्ते । यावती तेषां निन्दा क्रियेत, तावती अन्यूनैव भवेत् । किन्त्वद्य भारतीयजनता एतावती समुद्बुद्धा वर्तते यत्सा तथाव्यवहर्तॄणां सर्वोऽप्यभिक्रमो नामशेषतां नयेत् । सा कथमपि तेषां तादृशमत्याचारं न स्वीकरि-ष्यति ।

किन्तु आंग्लशासकैरेव अतीते स्वार्थवशात् 'विभज्य शासनम्' इति नीतेरन्तर्गतो यवनानामिव अन्त्यजानामपि अपरः प्रश्नो बुद्ध्या समुपस्था-पितः । देशस्य स्वातन्त्र्याय परं समुत्सुकानां बापू-महाभागानां भावुके हृदये स शल्य इवाभवत् । तैः

# मानस-भारती--देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए० साहित्याचार्यः—

धृत्वा धैर्यं प्राह गृध्रो भवभीर्हर राघव।
शृणु नाथ दशग्रीवोऽकरोन्मे दुर्दशामिमाम् ॥
स एवाऽपाहरद् देव खलो जनकनन्दिनीम्।
अत्यन्तं विलपन्तीं तां गृहीत्वा कुररीमिव ॥
दक्षिणाशां प्रयातः स त्वामहं द्रष्टुमास्थितः।
यातुमेवाभिवाञ्छन्ति प्राणा मम कृपानिधे ॥
देहं धारयितुं रामस्तमूचे सोऽपि सम्मितः।
राममूचे नाथ यस्य नामतो मरणोन्मुखः ॥
अधमोऽपि भवेन्मुक्त इत्थं कथयति श्रुतिः।
सोऽयं दृग्-गोचरो मेऽद्य तत्किमर्थमसून् ध्रियै ॥
ऊचे रामः साश्रु तात गतिमाप्तोऽसि कर्मतः।
येषां परहितं चित्ते तेभ्यः किञ्चिदपि क्षितौ ॥
दुर्लभं नास्ति याहि त्वं हित्वा देहं पदं मम।
आप्तकामोऽसि तस्मात् किं तात तुभ्यं ददान्यहम् ॥

**मा तात सीताहरणं कदाचित्**
**पित्रेऽवदीर्मं क्व च धाम यात्वा।**
**रामोऽस्मि तर्हि स्वयमेव गत्वा**
**वक्ष्यत्यसौ रावण आकुटुम्बी ॥ ३१ ॥**

ततस्त्यक्त्वा गृध्रदेहं विष्णुरूपं दधार सः।
भूषितः श्यामलः पीतपटश्चारुचतुर्भुजः।
स्तुतिं चकार रामस्य साश्रुनेत्रः कृताञ्जलिः ॥

× × ×

**जय प्रभो रघूत्तम सुरूपता तवासमा।**
**त्वमेव निर्गुणः स्थितो गुणैश्च संयुतो विभो।**
**गुणेरकश्च वास्तवमिलाविलासमण्डनः।**
**दशाननप्रचण्डदोर्विखण्डनेषु धारकम्।**
**पयोदमूर्तिमम्बुजाननं विशाललोचनम्।**
**सुदीर्घबाहुमाभवप्रभूत - भीतिहारकम्।**
**दयाम्बुधिं त्वनारतं नमामि राममद्भुतम् ॥ १ ॥**
**त्वमस्यनन्तशक्तिमाननाद्यजो न गोचरः।**
**श्रुतिप्रमेय इन्द्रियात्परो जगत्समाश्रयः।**
**सुखादियुग्महारको विबोधमूर्तिरेककः।**
**अनन्तसौख्यदायकः सदैव तस्य चेतसि।**
**जपेत्तु यः सतां गणो मनुं सुरामनामकम्।**
**जमाम्यकामसुप्रियं प्रभुं कुवृत्तिनाशनम् ॥ २ ॥**

[ क्रमशः ]

---

स्वबुद्ध्यनुसारं तत्समाधानाय प्रयतितमपि। परमद्य वयं स्वतन्त्राः। सर्वोऽपि प्रश्नोऽद्यतनीयसन्दर्भेणैव विचारणीयः समाधेयश्च। केवलं कामपि हरिजन-बालां निर्धनेन विप्रेण परिणयसूत्रेण आबद्ध्य गान्धिशताब्द्याः कृतकृत्यता न मन्तव्या। वस्तुतस्ताः साम्प्रतिक-केन्द्रीयमन्त्रिणामेव पाणिषु पुनर्विवाहेनाबद्ध्याः। तदैव तासां वास्तव उद्धारो भवेत्। किन्त्वद्य तु सर्व एव मुग्धो जनस्तदा कस्मै किं कथनीयम् ?

यत्किमप्यस्तु, शास्त्रेषु मता अस्पृश्यता कथमपि न घृणामूलिका। कोऽपि शास्त्रप्रामाण्यवादी व्यक्तिगतजीवने तत्परिपालनाय प्रभवतीति माननीय-मजिस्ट्रेट सहायानामपि स्तुत्यं मतम्। हरिजनेष्वेव परस्परं नैके जातिगता भेदा जाग्रति, येन तेषु परस्परं भोजनव्यवहारः कन्याप्रदान-व्यवहारश्च न जायते। गान्धि-जन्मशताब्दिसमायोजकैः सर्वप्रथममत्रैव स्वीयः पुरुषार्थो नियोज्य इत्यस्माकमस्ति तेभ्यः साग्रहं निवेदनम्।

जगद्गुरवः पुनः पूर्वत एव विजयिन आसन्, अद्यापि च विजयन्तेतराम्। तैः 'गोरक्षामहाभियान'-समये (७२) द्वासप्ततिदिनानि यावद् अनशनव्रतमनुष्ठाय देशस्य सर्वोच्च-श्रद्धाकेन्द्र-बिन्दोरस्य कृते बलिदानस्यापि आदर्शः प्रस्तुतोऽस्ति। पुनरपि अचिरात्ते तदेव महाभियानं प्रारप्स्यन्ति। शासकांश्च समनुरुन्धन्ति यदभियाने जायमानं व्यर्थं महद्व्ययं गोसंवर्धनक्षेत्रे नियोजयितुं समपेक्षितां स्थितिमानयन्त्विति। तदर्थञ्च शीघ्रातिशीघ्रं भारते राजनियमतः गोवधनिरोधं कृत्वा पुण्यमर्जयन्त्विति। पश्यामस्तावद् भगवान् कदा शासकानेतया सुबुद्ध्या संयुनक्तीति।

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

यदप्युक्तम्—"नाट्ये शमविरोधिनां गीतवाद्यादीनां सत्त्वेन सभ्येष्वपि विषयवैमुख्यात्मनः शान्तस्य कथमभिव्यक्तिः ?" तदपि तुच्छम्; नाट्ये वाद्यादीनां फलबलेन तदविरोधित्वकल्पनात्। विषयचिन्तासामान्यस्य तत्र विरोधित्वाभ्युपगमे शान्तरसालम्बनस्य संसारानित्यत्वस्य तदुद्दीपन-पुराणादिश्रवण-सत्सङ्ग-पुण्यवन-तीर्थावलोकनादेरपि विषयत्वेन विरोधित्वापत्तेः।

'देवादिविषया रतिर्भावो न रसः' इति यदुक्तम्, तद्भगवदतिरिक्त-देवान्तरविषयत्वेन ज्ञातव्यम्। तदुक्तं भक्तिरसायने—

**रतिर्देवादिविषया व्यभिचारीति व्यञ्जितः।**
**भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः॥**
**देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात्।**
**तद्योज्यं परमानन्दरूपे न परमात्मनि॥**

देवान्तराणां जीवत्वेन मलिनसत्त्वप्रधानाविद्योपाधिकत्वेन तत्र परानन्दाप्रकाशनाद्रसत्वाभावोक्तिः सङ्गच्छते। परमानन्दस्वरूपे भगवति तु परमसुखस्फुरणात्तत्र रसत्वमस्त्येवेति तत्र रसत्वाभावोक्तिर्न सङ्गच्छते। न च तर्हि देवतातिरिक्तनायकेष्वपि जीवत्वात् तद्रतीनामपि परानन्दास्फुरणाद् रसत्वाभावापत्तिः स्यादिति वाच्यम्; परमानन्दरूप-भगवत्सम्बन्धापेक्षया जाड्यमिश्रणेन तत्र न्यूनरसत्वाभ्युपगमेन तदिष्टापत्तेः। तदप्युक्तम्—

**कान्तादिविषया वा ये रत्याद्यास्तत्र नेदृशम्।**
**रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात्॥**

ननु तर्हि तद्वदेव देवान्तरविषया रतिरपि रस एवेत्यायातम्। तत्र परिपूर्णसुखाभावेऽपि नायकान्तरादिसाधारण्येन न्यूनरसाभिव्यक्तेः। तथा च देवान्तरविषयत्वेऽपि तदुक्तेः कुतो विरोधपरिहार इति चेन्न। देवेषु पूज्यत्वातिशयबुद्ध्या सभ्याभिनेययोः भेदतिरोधानाभावेन रसत्वाभावोक्तेः समञ्जसत्वात्।

न च तर्हि भगवद्रतावपि तदापत्तिः समानैवेति वाच्यम्; तस्याः परमानन्दविषयकत्वेनैव तत्र परमानन्दस्फुरणसंभवात्, नरलीलानुकारिणि भगवति भेदतिरोधानस्यापि संभवाच्च। अत एव पूर्वोक्त-साधारणीकरणव्यापारेण राधादिविषयक-रतिमत्कृष्णाभेदभावनया तद्विषयिणी रतिर्माभूदित्येतदर्थं साधारणानां तच्छ्रवणनिषेधः। उपासनया गोपसीमन्तिनीभावापन्नानां तु कृष्णविषयक-रतिमद्राधाद्यभेदेन तद्विषयरतिमत्त्वं तु न दोषाय। अतः प्राकृतरसवैलक्षण्यबोधनायैव अप्राकृते दिव्यरसे 'भाव'पदप्रयोगः। रसत्वनिषेधकस्य वाक्यस्य प्राकृतरसत्वनिषेध एव तात्पर्यम्।

कान्तासम्मित-रसवद्वाक्यस्य धर्मार्थादिपरत्वेन अन्यशेषत्वात् तद्विशेषणीभूतरसस्याप्यन्यशेषत्वमेव। भगवद्विषयक-वाक्यस्य तु भगवत्प्रीतिमात्रपरत्वेन तद्वैलक्षण्यद्योतनाय तत्र भावशब्दप्रयोगः। तदुक्तम्—

**कथा इमास्ते कथिता महीयसां**
**विताय लोकेषु यशः परेयुषाम्।**
**वैराग्य-विज्ञान-विवक्षया विभो**
**वचोविभूतिर्न तु पारमार्थ्यम्॥**
**यस्तूत्तमश्लोक - गुणानुवादः**
**सङ्गीयतेऽभीक्ष्ण - ममङ्गलघ्नः।**
**तमेव नित्यं शृणुयादभीक्ष्णं**
**कृष्णेऽमलां भक्तिमभीप्समानः॥**

(क्रमशः)

## तावत् स्वराज्यं नहि लोकराज्यम् !

यावत्स्वकीया निजदेशभाषाः
प्रतिष्ठिता नैव भवन्ति लोके ।
विद्यालये न्यायगृहे तथैव
तावत्स्वराज्यं नहि लोकराज्यम् ॥ १ ॥

राष्ट्रस्य भव्योन्नत-भालपट्टे
कलङ्करेखेव विराजमाना ।
आङ्ग्ली न यावन्निलयं प्रयाति
तावत्स्वराज्यं नहि लोकराज्यम् ॥ २ ॥

अस्मद्वरिष्ठार्य - सुसंस्कृतेर्या
संवाहिका संस्कृत - देववाणी ।
यावन्न मानार्हपदं प्रयाति
तावत्स्वराज्यं नहि लोकराज्यम् ॥ ३ ॥

रुद्रप्रसूर्या दुहिता वसूना-
मादित्यजानिर्ह्यमृतस्य नाभिः ।
अध्येति वेदैरभिगीयमाना
सर्वत्र देशे परिपूज्यमाना ॥ ४ ॥

मातेव दुग्धामृत-पोषयित्री
दध्याज्य - तक्रार्पण - तोषयित्री
राष्ट्रीयमानोन्नत - चिह्नभूता
दृढाऽर्थतन्त्रस्य कशेरुभूता ॥ ५ ॥

प्राचीन - भव्योज्ज्वल-सभ्यताया
विवर्तनेषु भ्रमि - कीलभूता ।
यावच्च गौर्हन्यत आर्यदेशे
तावत्स्वराज्यं नहि लोकराज्यम् ॥ ६ ॥

यावज्जना नैव भवन्ति सुस्थाः
प्रसन्नचित्ताः सुखशान्तियुक्ताः ।
अन्नेन पानेन च पूर्णतृप्ता-
स्तावत् स्वराज्यं नहि लोकराज्यम् ॥ ७ ॥

यावत्समस्ता न जनाः सुविद्याः
सुधार्मिका धैर्यधनाः सुवृत्ताः ।
विवेकवन्तोऽपि च राष्ट्रभक्ता-
स्तावत् स्वराज्यं नहि लोकराज्यम् ॥ ८ ॥

स्वदेशधीदास्य - निदानभूता
प्रतीच्यवर्त्माऽनुविधायिशिक्षा ।
यावद्यथार्थं न भवेत् स्वतन्त्रा
तावत्स्वराज्यं नहि लोकराज्यम् ॥ ९ ॥

लोकाय लोकस्य च लोकचाल्यं
लोकैक - कल्याणधिया प्रवृत्तम् ।
आसेतु - यावन्न भवेत्सुराज्यं
तावत्स्वराज्यं नहि लोकराज्यम् ॥ १० ॥

खाद्यान्ननिर्माणविधौ स्वकीये
रक्षाविधावायुधनिर्मितौ वा ।
यावत्स्वदेशोऽस्ति परावलम्बी
तावत्स्वराज्यं नहि लोकराज्यम् ॥ ११ ॥

यावन्न राष्ट्रं निजवीर्यगुप्तं
बाह्यान्तर-द्वेष्टृ - समूहरिक्तम् ।
चीनैश्च पाकैश्च भवत्यजिग्यं
तावत्स्वराज्यं नहि लोकराज्यम् ॥ १२ ॥

—प्रा० श्री हरिश्चन्द्र रेणापुरकरः, एम० ए०—

# वैदिकाऽवैदिक-दर्शन-मीमांसा

—श्री जगन्नाथ श्रीधरशास्त्री पदे—

( ६ )

स्वयंज्योतिः स्वरूपं ब्रह्मेति ब्रह्मवादिनः सूर्यमण्डलस्थस्याऽग्नेः सायं-प्रातरुपासनाम् अग्निहोत्रस्य च परिचरणं सायं प्रातः कुर्वन्ति, महायज्ञैश्च यज्ञैश्च अग्निमेव सन्तर्पयन्ति ।

देहात्मवादिभिस्तु मूर्तिपूजा क्रियते । प्रकृतिवादाद् देहात्मवादाच्च मूर्तिपूजाया उद्गमः । प्रकृतिवादे देवताया मूर्तिरुपासनार्थं क्रियते । तत्र चाऽऽत्मप्रतिष्ठा क्रियते । एवं सांख्यसिद्धान्तानुसारेण प्रतिमूर्तिम् आत्मभेदो भवति । केवलं शिवलिङ्गे सर्वस्त्री-पुरुषात्मके सकलस्य आत्मैकत्वस्य स्थापना भवति । तस्मात् महादेवमूर्तिरेव वैदिकी । ब्रह्मणो विराट्शरीरस्य स्त्री-पुरुषात्मकस्य एकत्वं गतस्य प्रतीकरूपत्वात्, तत्र च आत्मैकत्वस्य प्रतिष्ठापनाच्च । ब्रह्मस्वरूपमेव शिवलिङ्गम् । तत्र धर्मस्वरूपो वृषभः । **वृषो हि भगवान् धर्मः** ( ८.१६ ) इति मनूक्तेः । तत्र वैदिकस्य धर्मस्य धर्मिणश्च प्रतीकमेव शिवालये परिदृश्यते । प्रकृतीनामानन्त्यात् मूर्तीनामानन्त्यं भवति । तथा चोक्तं चरके—

'भूतानां चतुर्विधा योनिर्भवति जराय्वण्डस्वेदोद्भिदः । तासां खलु चतसृणामपि योनीनामेकैका योनिरपरिसंख्येयभेदा भवति । भूतानामाकृतिविशेषापरिसंख्येयत्वात् । ( चरक० शारीर० ३.२६ )

'तत्र शरीरं योनिविशेषाच्चतुर्विधमुक्तमग्रे । त्रिविधं खलु सत्त्वं शुद्धं राजसं तामसमिति । तत्र शुद्धमदोषमाख्यातं कल्याणांशत्वात् । राजसं सदोषमाख्यातं रोषांशत्वात् । तामसमपि सदोषमाख्यातम्, मोहांशत्वात् । तेषां तु त्रयाणामपि सत्त्वानामेकैकस्य भेदाग्रमपरिसङ्ख्येयं तरतमयोगाच्छरीरयोनिविशेषेभ्यश्च अन्योन्यानुविधानत्वाच्च ।' ( ४.४३-४४ )

'इत्येवं शुद्धस्य सत्त्वस्य सप्तविधं भेदांशं विद्यात् कल्याणांशत्वात् ।' ( ४.५२ )

'इत्येवं खलु राजसस्य सत्त्वस्य षड्विधं भेदांशं विद्यात् रोषांशत्वात् ।' ( ४.५९ )

'इत्येवं तामसस्य सत्त्वस्य त्रिविधं भेदांशं विद्यात्, मोहांशत्वात् ।' ( ४.६३ )

'इत्यपरिसंख्येयभेदानां त्रयाणामपि सत्त्वानां भेदैकदेशो व्याख्यातः । शुद्धस्य सत्त्वस्य सप्तविधो ब्रह्मर्षि-शक्र-यम-वरुण-कुबेर-गन्धर्व-सत्त्वानुकारेण । राजसस्य षड्विधो दैत्य-राक्षस-पिशाच-सर्प-प्रेत-शकुनि-सत्त्वानुकारेण । तामसस्य त्रिविधः पशु-मत्स्य-वनस्पतिसत्त्वानुकारेण । कथं च यथासत्त्वमुपचारः स्यादिति ।' ( ४.६४-६५ )

योनयः—४ । सत्त्वस्य शुद्धस्य—७ । राजसस्य सत्त्वस्य—६ । तामसस्य सत्त्वस्य—३ भेदांशम् । ७ + ६ + ३ = १६ भेदाः । ४ × १६ = ६४ भेदाः । अत एव चतुष्षष्टियोगिन्य आभ्युदयिके पूज्यन्ते ।

तासामपरिमितभेदात् चतुष्षष्टिकोटियोगिन्यः। प्रकृतिश्च चतुष्षष्टिकोटियोगिनी-नामिका। तथा चोक्तं 'ललितासहस्रनाम'-स्तोत्रे—

**महाचतुष्षष्टिकोटि-योगिनी गणसेविता। (१०९)**

एवं सत्त्व-रज-स्तमसामनन्तभेदान् मूर्तीनामपि अनन्तभेदा भवन्ति। तत्र **यथाभिमतध्यानाद्वा** (यो० सू० १.३९) इति सूत्रानुसारम् अभिमताया एव मूर्तेर्ग्रहणमुपासनार्थं भवति। देहात्मवादे चाचार्याणां महात्मनां च मूर्तिरुपासनार्थं प्राणप्रतिष्ठा-विधिमन्तरेण प्रतिष्ठाप्यते। अस्मिन् पक्षे देहव्यतिरिक्तस्य आत्मनोऽभावात्। एवं मूर्तिपूजा असुराणामेव। अनार्याणां सकाशान् मूर्तिपूजायाः प्रचार इति केषाञ्चिदुद्‌घोषः सम्प्रदायविरुद्ध एव। असुराणामेवाऽयं पक्षः। मूर्तिपूजाया अवैदिकत्वाद् वैदिकैः कल्पसूत्रकारैर्देवपूजाप्रयोगो न सूचितः। यः किल दृश्यते बोधायनसूत्रादिषु, सोऽपि प्रकृतिवादमाश्रित्यैव। प्रकृतिवादमाश्रित्यैव प्रवृत्तानि धर्मसूक्तानि स्मृतयश्च देहधर्मान् विषयधर्मांश्च व्यवस्थापयन्ति। अत एव तैः सांख्यसिद्धान्त एव स्वीकृत इत्यवगन्तव्यम्। स्मृतिर्हि चित्तस्य वृत्तिः, न चितः। चिदेवाऽऽत्मधर्मो न चित्तम्। वृत्तिसरूपं हि चित्तमुच्यते। अवृत्तिका चिदुच्यते।

(७)

आत्मैकत्ववादिनां धर्मः सत्ये प्रतिष्ठितः। सत्तास्वभावं हि ब्रह्म। सत्यं ब्रह्मधर्मः। तस्मात् सत्यमेव धर्मः। तथा चोक्तं बृहदारण्यके (१.२.२६)—**यो वै स धर्मः। सत्यं वै तत्। तस्मात् सत्यं वदन्तमाहुर्धर्मं वदतीति। धर्मं वा वदन्तं सत्यं वदतीति।** मुण्डकेऽपि (३.६)—

**सत्यमेव जयते नानृतम्,**
**सत्येन पन्था विततो देवयानः।**
**येनाऽऽक्रमन्त्यृषयो ह्याप्तकामाः,**
**यत्र तत् सत्यस्य परमं निधानम्॥**

देहात्मवादिनां धर्मोऽसत्ये प्रतिष्ठितः। इदं सर्वं परिदृश्यमानं विश्वं शरीरं च विनाशि। विनाशित्वात् तस्य सत्ता नास्ति। मिथ्या हि सर्वम्। विषया मिथ्याः, त एव धर्म इति धर्मोऽपि मिथ्यात्वे प्रतिष्ठितः। शरीरं धर्मीति हिंसया तस्य नाशः, अहिंसया प्रतिष्ठेति देहात्मवादिनां धर्मोऽहिंसायां प्रतिष्ठितः। अहिंसा च हिंसाया अभाव एवेति अभावे प्रतिष्ठितो भावरूपो धर्मपदार्थ इति विपर्ययस्य पराकाष्ठा देहात्मवादिनाम्। इत्थमहिंसया सुप्रतिष्ठितमपि देहं जगद्वा कालो हिनस्त्येवेति महदाश्चर्यम्! तथा चोक्तं महाभारते—

**अस्मिन् महामोहमये कटाहे**
**सूर्याग्निना रात्रिदिवेन्धनेन।**
**मासर्तु - दर्वी - परिघट्टनेन**
**भूतानि कालः पचतीति वार्ता॥**
(वनपर्वणि, ३१३. ११८)

इत्थमहिंसया सुप्रतिष्ठितस्य जगतः शरीरस्यापि कालेनाभावः सम्पाद्यते। भावरूपो धर्मी देहो जगच्च कालेनाभावे पर्यवस्यति। परिदृश्यमानस्य जगतोऽहिंसायां प्रतिष्ठितत्वात् योगशास्त्रे अविद्यावतां व्युत्थितचित्तानां देहात्मवादिनां भोगिनां कृते समारब्धे साधनपादे अहिंसयैव यमानामारम्भः। अहिंसाधिष्ठितत्वं च तेषाम्। तथा हि—

**अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः।**
—(यो० सू० २.३०)

उत्तरे च यम-नियमास्तन्मूलाः तत्सिद्धिपरतया तत्प्रतिपादनाय प्रतिपाद्यन्ते। तदवदानरूपकरणायैव उपादीयन्ते। तथा चोक्तम्—

'स खल्वयं ब्राह्मणो यथा यथा व्रतानि

बहूनि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो विवर्तमानस्तामेव अवदानरूपामहिंसां करोति ।' (यो० भा०, २. ३०)

यद्यपि इत्थमहिंसया शरीरं विषयाश्च प्रतिष्ठिता भासन्ते; तथापि धर्मेण सुप्रतिष्ठितानामपि तेषां विनाशित्वात् सहजेन अधर्मेण कालप्रभावेण च हिंसिता भवन्ति, क्रमेण विनाश्यन्ते च । तस्मादहिंसया सुप्रतिष्ठितमपि इदं सर्वं कालेन कवलीक्रियत एव । अहिंसावाद इत्थं विशीर्यत एव । हिंसा तु भवत्येव । तस्मात् हिंसैव शरीरधर्मो सर्वस्य इदमश्च धर्मो नाऽहिंसा । सर्वथाऽहिंसया यथाकथञ्चिद् रक्ष्यमाणमपि हिंस्यत एव । हिंसायाः शरीरधर्मत्वात् वैदिकैः धर्मार्थं शरीरमपि हिंस्यत एव । अत एवोक्तं महाभारते—

धर्मं त्यजेज्जीवितस्यापि हेतोः ।

—( १८. ५. ६३ )

किञ्चान्यत्—अहिंसा नाम हिंसाया अभावः । न ह्यभावात्मकः पदार्थो धर्मो भवितुमर्हति, धर्मस्य भावरूपत्वादिति पूर्वमुक्तम् । तस्मात् हिंसैव धर्मः । तथा च श्रुतयः—

भीषाऽस्माद्वातः पवते, भीषोदेति सूर्यः ।
भीषाऽस्मादग्निश्चेन्द्रश्च, मृत्युर्धावति पञ्चमः ॥

—( तै० उ० २. ८ )

महद्भयं वज्रमुद्यतम् । —(कठ० ६. २ )

भयादस्याग्निस्तपति, भयात् तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च, मृत्युर्धावति पञ्चमः ॥

—( कठ० ६. ३ )

स्मृतिश्च—

तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च ॥

—( मनु० ७. १५ )

सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ।
दण्डस्य हि भयात्सर्वं जगद् भोगाय कल्पते ॥

( मनु० २०.२२ )

हिंसैव हिंस्राणां पशूनां धर्मो भवति । दुष्कृतां विनाशश्च धर्मो भवति राज्ञाम् ।

गीताशास्त्रेऽपि देहात्मवादमाश्रित्य अर्जुनेन पृच्छामि त्वां धर्मसंमूढचेताः ( गीता २.७ ) इति धर्मः पृष्टः । स च युद्धं धर्म उत युद्धविरामो धर्म इत्येव । अथवा दार्शनिकपरिभाषया हिंसा धर्म उत अहिंसा धर्मः ? इति । भगवता च प्रश्नस्यास्य आत्मवादमाश्रित्यैव उत्तरं दत्तम् । हिंसाऽहिंसाकल्पना आत्मवादे नास्तीति । तथा हि—

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥

( गीता २.२३—२४ )

अत एव—असतो मा सद् गमय । तमसो मा ज्योतिर्गमय । मृत्योर्मा अमृतं गमय ।

( बृ० १.१.३० )

इत्यत्र देहात्मवादाद् आत्मैकत्ववादं गमयेति प्रार्थ्यते । विनाशी देह इदं सर्वं दृश्यं जगत् च । सत्तास्वभावोऽविनाशो आत्मा । ज्योतिःस्वरूप आत्मा, तमःस्वभावो देहो विषयी भूतं जगच्च । अन्नवान् देहः । तथा च श्रुतिः—

मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्याऽऽत्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाऽप्रियाभ्याम् । न वै सशरीरस्य सतः प्रियाऽप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाऽप्रिये स्पृशतः ।

( छान्दोग्य० ८.१२.१ )

देशतः कालतः स्वभावतश्च अनन्तं ब्रह्मेति तत्राऽमृतत्वम्। अत्र स्वयंज्योतिःस्वरूपं ब्रह्मणः स्पष्टमुक्तम्। तस्मात् **सत्यं ज्ञानमनन्तं ब्रह्म** ( तै० उ० २.१.१ ) इत्यत्र सत्यमेव ब्रह्मधर्मः। ज्ञानं स्वयंज्योतिर्वा ब्रह्म-पदार्थः। अनन्तत्वं सत्ताया एव व्याख्यानम्, सत्तायाः सनातनत्वात्। अत एव **सत्यमेव जयते नानृतम्** ( मुण्डक० ३.१.६ ) इति सिद्धान्तितम्।

( ८ )

देहात्मवादे भोगापवर्गवादे वा अस्मिन् जगति स्त्रीसदृशो भोग्यः पदार्थ एव नास्ति। षडिन्द्रियाणां भोग्यो विषयः स्त्री। स्त्रीसदृशम् एकसमयावच्छेदेन षडिन्द्रियाणामाकर्षकं भोग्यं च वस्त्वन्तरं नास्ति। गन्ध-रस-रूप-स्पर्श-शब्दाः क्रमेण पञ्चेन्द्रियाणि आकर्षयन्ति। स्त्रिय आनन्दप्रदत्वं मन आकर्षयति। एवं सर्वेन्द्रियाणामाकर्षणं सन्तर्पणं चैकेनैव पदार्थेन भवतीति षडिन्द्रियाणां विषयो योषिद् भवति। अत एव भोगिनां स्त्रीसदृशो भोग्यः पदार्थ एव नास्ति। स्त्रियं दृष्ट्वा भोगिनः कामुकाः कामान्धाश्च भवन्तीति प्रसिद्धमेव। अपवर्गवादिनां योगिनां चित्तनिरोधोऽपि स्त्रीदर्शनपर्यन्तमेव। स्त्रियं दृष्ट्वा तेऽपि वृत्तिसरूपा भवन्तीति महदाश्चर्यम्। इत्थं स्त्री भोग्यः पदार्थ इति भोगवादिनां सिद्धान्तः। अत एव तैः सा यथेष्टं भोगायैव उपयुक्ता। तस्याः स्वातन्त्र्यं नास्ति।

कामान्धानां कामुकत्वात् तेषां कामपूर्तेश्च स्त्र्यधीनत्वात् ते स्त्रीजिता भवन्तीति भोगवादे स्त्रियाः पुंवद्भावो भवति। सैव च कर्त्री भवति। यथा—रामायणे कैकेयी। भोगवादे कामाचार इति पातिव्रत्यं नास्ति। इत्थं स्त्रियं भोग्यां विधाय सा कदर्थीकृता भोगवादिभिः। प्रत्यक्षप्रमाणवादिभिः लौकायतिकैस्तु मातृत्वस्य अप्रत्यक्षत्वात्, अत एवाऽप्रमाणत्वाच्च मातृगमनमपि न प्रतिषिद्धं प्रत्युत प्रमाणितम्। तथा च श्रूयते—**अपि वा मातरमियात्, अपि वा स्वसारम्** ( ? )।

अपवर्गवादिनो द्विविधाः—एके भोगानन्तरं संसारस्य दुःखमयत्वात् संसारमपवर्जयन्ति। वार्धक्य एतेषां संन्यासः। इतरे पुनः संसारस्य दुःखमयत्वाद् ब्रह्मचर्यादेव संन्यस्यन्ति। इन्द्रियाणाम् अतियोगाऽयोग-मिथ्यायोगा अधर्मः। योग एव धर्मः। अत एव गीताशास्त्रे ( ६.१७ )—

**युक्ताहार-विहारस्य युक्तचेष्टस्य कर्मसु।**
**युक्तस्वप्ना-ऽवबोधस्य योगो भवति दुःखहा॥**

योग एव धर्मत्वेनोक्तः। एवं विवाह एव इन्द्रियधर्मः। ब्रह्मचर्यात् संन्यास इन्द्रियनिरोध इन्द्रियायोग इन्द्रियाधर्मः काम एव वा। अत एव संन्यासोऽयमधर्मः कामो वा। नहि धर्मः संन्यस्यते। ममत्वाभिमानेन स्वामित्वसम्बन्धेन भोग्यत्वेन वा विद्यमाना भोग्या विषया एव प्रकृतिपर्यन्ताः संन्यस्यन्ते। संन्यासेऽस्मिन् कामतो निरोधाद् इन्द्रियाणां स्त्रीणां च एकसमयावच्छेदेन षडिन्द्रियाणामाकर्षकत्वात् स्त्रियं दृष्ट्वैव एते योगभ्रष्टा भवन्ति। अत एव एभिश्चित्रस्थमपि स्त्रीदर्शनं निषिद्धं वर्जितं च। स्त्रीणां च मोहापादकत्वात् निन्दैव कृता। वस्तुतस्तु एत एवाऽधर्मचारिणो निन्द्या भवन्ति।

धर्मवादे स्त्री धर्मः, पुरुषश्च धर्मी। दम्पत्योरभेदः सम्बन्धः। तेनात्र विच्छेदो नास्ति। पदार्थ एक एव। यथा ब्रह्मणि आनन्दांशः परमशिवो धर्मी, चिदंशो भगवती चितिशक्तिर्धर्मः। धर्मधर्मिणोश्च अभेदः सम्बन्धः। तथापि धर्म-धर्मिणोः धर्मप्राधान्यात् चिच्छक्तिरेव मुख्या, गौण आनन्दांशः। जगदिदं चिद्विलास एव। तथा दम्पत्योरपि स्त्री मुख्या, पुरुषो गौणः। तेन दम्पती-पूजने स्त्रियः सम्पूर्णा पूज्याः, पुरुषस्तु यथा कथञ्चित्

फलादिदानेन । गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः इति न्यायात् ( परिभाषेन्दुशेखरे, परि० १४ ) । न्यायोऽयं ब्रह्मण्यपि समानः । ब्रह्मणश्चिदंश एव ज्योतिःस्वरूपः । स एव विराडग्निः । स एव महायज्ञैश्च यज्ञैश्च सन्तर्प्यते वैदिकैः ।

अत एव पत्न्यः सद्भाव एव अग्निहोत्रादिधर्मः । तत्र पत्न्य एव प्राधान्यम् । यजमानप्रवासे यजमान-पत्न्या अग्निहोत्रपरिचर्या विधीयते । पत्नीप्रवासे तु सहैवाऽग्नयो नीयन्त इति धर्मे धर्मस्वरूपायाः पत्न्याः प्राधान्यम् । पूज्यस्य दक्षिणतः स्थानमिति धर्मकार्येषु पत्युर्दक्षिणतः पत्न्याः स्थानम् । माङ्गलिकेषु स्त्रीरग्रतः कृत्वा गच्छन्ति । तथा च महाभारते—

**अग्नीन् प्रदक्षिणीकृत्य ब्राह्मणांश्च तपोधनान् ।**
**याज्ञसेनीं पुरस्कृत्य षडेवाऽथ प्रवव्रजुः ॥**
—( विराट्० ४.४.५६ )

व्याकरणशास्त्रेऽपि 'मातापितरौ, पार्वतीपरमेश्वरौ, सीतारामचन्द्रौ' इत्यादिषु स्त्रियाः पूर्वनिपात इष्यते । 'अभ्यर्हितं च' ( पा० २.२.३४ ) इति वार्तिकेण स्त्रीणामभ्यर्हितत्वात् । एते सिद्धाः प्रयोगाः स्त्रीणामभ्यर्हितत्वं साधयन्ति । श्रुतावपि—

**मातृदेवो भव । पितृदेवो भव ।**
( तै० उ० १.११.२ )

इत्यत्र मातुरेव अभ्यर्हितत्वात् प्रथममुपन्यासः । भगवता मनुनाऽपि स्त्रीणां प्रशंसैव कृता । तथा हि—

**पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।**
**पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥**
**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।**
**यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥**
**शोचन्ति जामयो यत्र विनश्यत्याशु तत्कुलम् ।**
**न शोचन्ति तु यत्रैता वर्धते तद्धि सर्वदा ॥**
**जामयो यानि गेहानि शपन्त्यप्रतिपूजिताः ।**
**तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥**
**तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः ।**
**भूतिकामैर्नरैर्नित्यं संस्कारेषूत्सवेषु च ॥**
—( मनु० ३.५५-५९ )

महाभारते मातृसमो गुरुर्नास्तीत्युक्तम् । तथा हि—

**पितॄन् दश तु मातैका सर्वां वा पृथिवीमपि ।**
**गुरुत्वेनाऽभिभवति नास्ति मातृसमो गुरुः ॥**
( महाभा०, शान्ति०, १०८.१६ )

वैदिकस्य अग्निहोत्रादि-धर्मजातस्य स्त्रियमन्तरेणाऽप्रवृत्तेः स्त्रीणां धर्मरूपत्वम् । तासां च प्राधान्यं वैदिके धर्मे ।

( क्रमशः )

• • •

## काव्य-शास्त्र-विनोदेन......

**स्वार्थपरता**

रोदित्येकं श्मश्रुदाहाद्विपन्नो याचत्यग्निं धूपवर्त्यै तदन्यः ।
एवं लोकः स्वार्थसिद्ध्येकतानो नान्यस्यार्तिं जातु किञ्चिद्विनक्ति ॥

**कण्टकः**

क्षुद्रशत्रुरिति मा कृथा मनाक् जातुचिद्विगणनां विमूढधीः ।
ईश्वरोऽपि ननु कण्टकास्पदं केतकीदलमहो जहाति यत् ॥

**अनुकम्प्यो दुर्बलः**

माऽवज्ञयाऽऽचर कृशेष्वपि मांसलत्वात्त्वं हन्त तेन हि भवेर्न किमात्तगन्धः ।
ईशोऽपि कैतकदलं परिभूय चन्द्ररेखात्मना शिरसि तेन विलङ्घितोऽभूत् ॥

**—श्री न० चि० वे० नरसिंहाचार्यः—**

# मदीया द्वितीया अध्ययन-यात्रा

**—श्री व्रजवल्लभ द्विवेदो दर्शनाचार्यः—**

५.

प्रवर्तमानमासीदत्र विशुद्धेश्वरस्य भगवतो लिङ्गस्य स्थापनावार्षिकोत्सवः। अत्र भक्तानामत्रत्यानां ग्रामान्तरेभ्य आगतानां शिष्याणां चासीन् महान् संमर्दः। दिनद्वयं यावदत्र परस्सहस्रं भक्तैः शिष्यैश्च प्रसादमगृह्यत। प्रत्यहं पञ्चवादनवेलायां सिद्धान्तशिखामणिमधिकृत्य प्रवचनं कुर्वन्ति स्म स्वामिपादाः। अनिच्छताऽपि मयाऽसमायोज्यमानः स्वकीयः स्वागतसमारोहो दृष्ट एव, अङ्गीकृतं च प्रदीयमानं कौशेयवस्त्रम्। भाषणापटुनाऽपि मयाऽत्र दिनत्रयं यावत् कानिचन वाक्यानि भाषितानि। तत्र प्रथम आसीदयमेवावसरः।

प्रत्यहं प्रातः सायं च नगरकाद् बहिः दैनिककार्यनिर्वर्तनाय वयमगच्छाम। नगरकमेतद् वर्तते तमालपत्र-व्यापारस्य मुख्यं केन्द्रम्। अत्रत्यानां प्रधानश्रेष्ठिनां नागरिकेषु प्रथमानां च श्रीमताम् आर० एस० कोठीवाले महोदयानां लघुमृत्तैलयानं (कार) स्वामिनां सेवायां संलग्नमासीत्। सन्त्येते स्वामिपादानां साम्प्रदायिकाः शिष्या लिङ्गायत (वीरशैव)-मतानुयायिनः। कर्णाटकप्रदेशे मध्वसम्प्रदायस्यैव वीरशैव-सम्प्रदायस्यापि वर्तते विशेषः समादरो जनतासु। एककोटिसंख्या-परिमिता जनताऽनुयायिनी वर्तते धर्मस्यास्येति श्रुतं तत्र। अस्य धर्मस्यानुयायिनो बाहुल्येन व्यापारिणः सन्ति। यथा जैनधर्मानुयायिनो व्यापारनिरता राजस्थान-गुजरातराज्ययोः स्ववित्तवर्चस्वं ख्यापयन्ति, तथैव लिङ्गायत-मतानुयायिनः कर्णाटकप्रदेशे। वैदिकधर्मस्य जैनधर्मतो रक्षायै धर्मस्यास्य प्रतिष्ठा प्रायः सहस्रवर्षेभ्यः पूर्वं तत्र समजायत इत्यैतिहासिका वदन्ति।

रेणुकापीठतो नातिदूरमवस्थिते 'हुली' इत्याख्ये स्थाने, यदीयाया यात्राया विवरणमनुपदमेव भविष्यति, पूर्वमासन् कालामुख-सम्प्रदायस्य मन्दिराणि। परःशतानां मन्दिराणां नगरीयं कदाचनासीत् कार्तवीर्यस्य सहस्रार्जुनस्य राजधानीति श्रूयते। भग्नावशिष्टान्यनेकानि मन्दिराणि, तत्रोत्कीर्णाः शिलालेखाश्च साम्प्रतमप्यवलोकयितुं शक्यन्ते। कर्णाटकराज्यवर्तिनि 'गदग' - स्थाने समुपलब्धे शिलालेखे कालामुखाचार्याः सादरं स्मृता द्वित्रा नामग्राहम्। वामनपुराण-प्रामाण्येन कालामुखसम्प्रदायो वैश्यैरनुगत आसीदिति वयं प्रत्यपादयाम 'सारस्वती-सुषमायां' प्रकाशिते (व० १९ अ० ४) "कालदमनः कालवदनो वा" इति शीर्षके निबन्धे। कालामुखसम्प्रदायस्वरूपं साम्प्रतं नोपलभ्यते, न च दृश्यन्ते क्वापि तदनुयायिनः। हुलीग्रामेऽपि साम्प्रतं वीरशैवमतमेव प्रतिष्ठां भजते। वयमुद्भावयामो वीरशैवसम्प्रदायः कालामुखसम्प्रदायस्यैव परिवर्तितं स्वरूपं स्यादिति।

मठे विशुद्धेश्वर-वार्षिकोत्सवनिमित्तं जनसंमर्दमवलोक्य द्वितीये दिने समीपे एव स्थिते श्रेष्ठिनः श्रीमलगौडा पाटिलमहोदयस्य स्वामिपादानां

शिष्यस्य गृहे स्वगृहनिर्विशेषं दिनत्रयं यावन्त्यवसम्। निपाणीनगरकत उत्तरस्यां दिशि वर्तते करवीरपीठम्, दक्षिणस्यां च रेणुकापीठम्। स्वामिपादाः षड्विंशं दिनाङ्कं यावद् वार्षिकोत्सवे व्यापृता आसन्। अतः पञ्चविंशे दिनाङ्के मया तेषां शिष्येण 'महादेव अप्पा सौदी' इत्यनेन साकं करवीरयात्रा निर्वर्तिता। स्थानमिदं श्मशानाष्टकेषु परिगण्यते। कुब्जिकातन्त्रं कुब्जिकामतं चैतत्स्थानसम्बद्धम्। केचन करवीरपीठमेव पीठचतुष्टयान्तर्गतं पूर्णगिरिपीठमिति वदन्ति। प्रधानतमेषु पीठचतुष्टयेषु बौद्धतान्त्रिकैरत्यङ्गीकृतेषु कामरूपपीठं विहायान्यत् पीठत्रयं कुत्र स्थितमासीदित्यधुना हन्त! अनुसन्धानस्य विषयः।

रात्रौ स्वामिपादैः साकं समीपवर्तिनि ग्रामे 'धुलगुणवाडी' इत्याख्ये प्रस्थितम्। अत्र स्वामिपादानां प्रवचनमासीत्। मयाऽपि करवीरपीठवासिन्या महालक्ष्म्या दर्शनप्रसादाद् यत् स्फुरितं तदत्र प्रोक्तं राष्ट्रभाषायाम्। दक्षिणभारतीयराज्येषु राष्ट्रभाषायाः सर्वाधिकः प्रचारोऽस्माभिः कर्णाटकराज्य एवानुभूतः।

जूनमासस्य षड्विंशे दिनाङ्के प्रातर्दशवादनवेलायामासीत् स्वामिपादानां प्रवचनं वागेवाड़ीमाध्यमिक-कलाशालायाम्। मयाऽत्रापि किमपि भाषितं राष्ट्रभाषायामेव—'सहिष्णुता समन्वयश्च भारतस्य विशिष्टौ राष्ट्रियौ गुणौ। परःशतं वर्षेभ्यः पाल्येते तौ सर्वैं राजभिर्जनैश्च। सहस्राधिकवर्षेभ्यः पूर्वं समागता यहूदीयाः पारसीकाश्च स्वं प्राचीनमेव धर्मं रक्षन्तः साम्प्रतमप्यत्र सुखेन निर्विशङ्कं निवसन्ति। साम्प्रतमागतास्तिब्बतदेशीया अपि जनास्तथैवस्वधर्मसंस्कृतिं पालयन्तः सुखेनासते। अत्रत्यैर्बौद्धैः शैवैः वैष्णवैश्च देशान्तरेषु शान्त्यैव स्वधर्मप्रचारो विहितो न करवालधारया। एतदस्ति निदर्शनमस्य राष्ट्रस्य सहिष्णुतायाः। सत्यवसरेऽत्र समन्वयोऽपि समजायत धर्मेषु। पूर्वं भगवद्गीतया ततः परं पुराणकारैः शङ्कराचार्यप्रभृतिभिश्च राष्ट्रसंघटनाधु विभिन्नासु दृष्टिषु ऐक्यमुत्पादितम्।

**रुचिनां वैचित्र्यादृजुकुटिलनानापथजुषां**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव।**

इति तस्यैव निदर्शनम्।

न केवलं शैव-वैष्णवादिष्वेव, बौद्ध-जैनादिधर्मेष्वपि समन्वयप्रक्रियेयं प्रवृत्ता। काले काले समस्यानां स्वरूपं परिवर्तते। प्रायः सहस्रवर्षेभ्यः पूर्वं समागतोऽत्र इस्लामधर्मः, द्विशतवर्षेभ्यः पूर्वं च ख्रीष्टधर्मो राजधर्मरूपेण। अत्रापि प्रवृत्ता भारतीया समन्वयप्रक्रिया। परं धर्मावितौ नाधुनाऽपि परित्यजतः स्वकीयमाक्रमणात्मकं स्वभावम्। ख्रीष्टधर्मानुयायिनो नगरेभ्यः सुदूरेषु ग्रामेषु वनभूमिषु च निवसत्सु अशिक्षितेषु जनेषु शिक्षां प्रसारयन्तः, रुग्णानां परिचर्यां च कुर्वन्तस्तथैव तपस्यन्ति, यथा हि पुरातना भारतीया ऋषिमुनयो बौद्धाश्च धर्मप्रचारका अतपन्। परं न निःस्वार्थमेतत्सेवाकर्म तैर्निष्पाद्यते, सत्यवसरे धर्मपरिवर्तनं कारयन्ति तेऽसहायानां जनानाम्, राष्ट्रद्रोहं च तेषूत्पादयन्ति। भारतीयेषु संन्यासिषु सा स्फूर्तिः साम्प्रतं नावलोक्यते। राष्ट्रविघटनकारिका इमा विदेशीयानां धर्मानुयायिनां प्रवृत्तयोऽपहाय नगरनिवासमोहं निःस्वार्थं कृतयाऽऽर्तानां सेवयैव ग्रामीणानां वनेचराणां च जनानां निरोद्धुं शक्यन्ते। साम्प्रतं भारते वर्षे निवसत्सु सर्वधर्मानुयायिषु समन्वयात्मिकैषा दृष्टिर्विकसिता भवेच्चेत् तदैव तेषु राष्ट्रियभावना प्रसरं लभेत। एतदर्थं साम्प्रतं प्रचरत्सु सर्वेषु धर्मेषु दर्शनेषु च समन्वयः कोऽपि संपादनीय एव। एतच्च कार्यं शिक्षितेन जनेन कर्तव्यम्' इत्येव भाषितं मया तत्र।

## मेघमाला

परं दुस्सहोदग्र - कंसादिचण्ड - प्रतापार्क - तेजोपहा मेघमाला ।
चिरं देवकी - दीव्यदङ्काम्बरे विद्युदुल्लासिता शातयेन् मेऽघमालाम् ॥ १ ॥
यामम्बु पञ्चषकणानपि याचमानस्त्वं निर्निमेषनयन प्रसमीक्षसे खे ।
सा ते समर्पयति जीवनबिन्दुमद्धा श्रद्धान्विताय किमु चातक मेघमाला ॥ २ ॥
चण्डांशु - तीव्रकरताप - निपीतहर्षा - मप्राप्तवारिवर - सीकरवृद्धतृष्णाम् ।
शुष्यत्सुजीवनरसा - मधुना रसां द्राक् सम्यग्रसां वितनुतामिह मेघमाला ॥ ३ ॥
रविहृत-वसनायाः पांशुलाया अवन्या नवहरित-दुकूलै - रङ्गमाच्छादयन्ती ।
स्फुट-कुटज-कदम्बाऽऽमोदमापादयन्ती प्रियललित-सखीवाऽभ्युद्गता मेघमाला ॥ ४ ॥

—कविवराः श्री रतिनाथ झा शर्माणः—

मध्याह्नोत्तरं प्रस्थिता वयं निपाणीतो लघु-मृत्तैलयानेन रेणुकातीर्थं प्रति। स्वामिपादानां शिष्यौ सहैवास्तां श्री वी० वी० नड़गदली—जी० एस० दुन्दुगे-नामानौ। एतयोर्ग्रामे सङ्केश्वराख्ये किञ्चिद् विश्रम्य प्रस्थितम्, रात्रौ चाष्टवादनं यावदधिगतं रेणुकातीर्थम्। साम्प्रतं भगवत्या रेणुकाया दर्शनं न शक्यते कर्तुमिति श्रुत्वा रात्रौ विश्रामार्थं वयं समीपस्थे हुलीग्रामे बृहन्मठे ( हिरेमठ ) समागताः। द्वितीयदिने प्रातः-कृत्यानि संपाद्य तस्मिन् ग्रामे पर्वताधित्यकायां स्थितानि भग्नावशिष्टानि मन्दिराणि द्रष्टुं वयं प्रस्थिताः।

प्रायो दश द्वादश वा तादृशानि मन्दिराणि दृष्टान्यस्माभिः। अत्रैकस्मिन् मन्दिरे नवमुखमेकं लिङ्गमासीत्। अत्रत्यानि सर्वाणि मन्दिराणि शैवान्येव। अत्र कदाचनासीत् प्रभावः कालामुखानां शैवानामिति पूर्वमेव सूचितम्। साम्प्रतमत्र वीर-शैवानुयायिन एव सर्वे दृश्यन्ते। अत्रत्यो मठोऽपि वीरशैवानामेव।

इतः प्रस्थाय वयं पुनरपि रेणुकातीर्थमागताः। तत्र भगवत्या रेणुकाया दर्शनेन कृतार्थीकृतानि चर्मचक्षूंषि। भगवतः परशुरामस्य जमदग्नेश्च तपःस्थलमिदं दर्शनेनैव जनयति काञ्चनानिर्वच-नीयां भावनाम्। भगवतः परशुरामस्य मन्दिरं निकषाऽनारतं प्रवहता स्वच्छेन निर्झरोदकेन पावित आत्मा।

इतो वयं पण्ढरपुरं प्रति प्रस्थिताः। मध्येमार्ग-मधिगतं सेरसिंगोस्थाने भव्यं कालामन्दिरम्। सायं प्रायः पञ्चवादनवेलायां वयं बीजापुरनगरमागताः। एतदधिनगरं 'गोल गुम्बज' इत्याख्यं प्रख्यातं भव्यं भवनं धारयत् प्रथिततमम्। अस्य भवनस्य विशाल-तमे वर्तुलाकारे उपरितने भागे कृतस्य शब्दस्य सप्तधा प्रतिध्वनयो निष्पद्यन्ते। एकत्र भित्तिभागे स्थापितस्य साम्प्रतिक-हस्तालङ्करणस्य लघुघटी-यन्त्रस्य सूक्ष्मोऽपि ध्वनिस्तत्समक्षवर्तिनि दूरतरे भित्तिभागे स्पष्टं श्रूयते। इतः प्रस्थाय रात्रौ प्रायो नववादनवेलायामधिगतं पण्ढरपुरम्। प्रातर्नित्य-कृत्यानि संपाद्य स्नातं प्रथमं चन्द्रभागायां नद्याम्। तदनु च 'पुण्डरीक विठ्ठल' इति ध्वनिं शृण्वन्तो वयं गताश्चरणयोर्नमनार्थं पुण्डरीकाक्षस्य भगवतो रुक्मिणीजानेः। अत्र देवशयन्यां प्रबोधिन्यां चैकादश्यामाषाढशुक्लपक्षस्य कार्तिकशुक्लपक्षस्य च महान् जनसंमर्दो भवति।

तस्मिन्नेव दिने मया वाराणसीं प्रति प्रस्थितम्, समधिगता च विश्वेश्वरपुरी वाराणसी त्रिंशे दिनाङ्के जूनमासस्येति शम्।

# ग्रीष्म-विलासः -- खण्डकाव्यम्

—स्वर्गीयाः महामहोपाध्यायाः श्री रामशास्त्रि तैलङ्गपादाः—

[ पुण्यश्लोकाः स्वर्गीयाः श्री तैलङ्गपादाः निखिले भारते प्रसृतानां नैकेषां साहित्यिक-विदुषां समादरणीयम् उपाध्यायपदं बिभ्रति। ग्रीष्मकालीनं स्वभावतो नीरसमपि वर्णनं विलासि-विलासिनीसंवादमुखेन प्रस्तोतयद्भिः पूज्यपादैस्तैरत्र बालयुव-वृद्ध-युवक-युवतीसुलभाः दैनन्दिनीयाः ग्रैष्मा व्यवहारा उत्प्रेक्षाद्यलङ्कार-समलङ्कृतास्तथा संग्रथिता यथा नीरसे ग्रीष्मेऽपि सरताया विरोधाभासं स्फुटं जनयन्तस्ते नूनं सहृदयानवर्जयिष्यन्ति। बालानां जल-क्रीडाः पुनः दिवसस्य पश्चिमे तटिनी-तटवर्तीनां नगरायां मूर्तं दृश्यमक्षणोः पुरः प्रस्थापयन्तीति।

—सम्पादकः ]

प्रेक्ष्याऽथ जातमुदयं क्रमशस्तपर्तोः
प्रत्यागतोऽयमचिरान्निजसद्म तस्य।
पृष्टो गुणान् दयितया कुतुकाद्विलासी
भूयः शुभं वचनमारभताऽभिधातुम्॥ १॥

"प्रत्यग्रपाटलसुमाऽऽवलि - गन्धलब्ध-
गन्धौघ-सान्द्रतर-सुन्दर - गन्धवाहाः।
मल्लीलता - कुसुम - भूरिपराग - रम्याः
सौख्याय सन्तु सुतनो शुचिवासरास्ते॥ २॥

घण्टानिनाद - गणना - गुणनक्रमेण
द्वित्रान् प्रयाप्य रजनीप्रहरांस्तपर्तौ।
निद्रादरिद्र - नयनानतिनान्त - चित्तान्
लोकान् प्रभातपवनः सुखयत्यमन्दम्॥ ३॥

प्राभातिकेन मरुता सुखशीतलेन
संवीज्यमान-तनवो वनिता - समेताः।
निद्रासुखं बहुमनोरथलभ्यमाप्य
लोका भवन्ति नितरां सुहिताऽन्तरङ्गाः॥ ४॥

निद्रागृहीतनयना नितरां प्रभात-
काले मृदुः स्थविरलोक-विबोधमानाः।
अर्धाक्षरेण ददतो वचसोत्तरं द्राङ्
निद्रान्ति गाढमधुना सुतनो युवानः॥ ५॥

किञ्चित् - परिस्फुटित-कोमलसार-सालि-
सम्पर्कलब्धमुषसि प्रचुरं सुगन्धम्।
गृह्णन् वहन् प्रतिदिशं पवमान-पोतो
निद्रारुचिं द्विगुणितां कुरुतेऽद्य यूनाम्॥ ६॥

प्राबोधिकीं गुरुजनोक्ति-मुपेक्षमाणान्
निद्रावशान् किल समीक्ष्य समिद्धकोपः।
आलोहिताऽखिलतनुस्तपनः करैः स्वैः
सन्ताड्य बोधयति सम्प्रति किन्नु यूनः॥ ७॥

पाशैरिवाऽतिपरुषैः किरणैः सहस्र-
रश्मेर्विकृष्टतनवः प्रसभं युवानः।
सन्त्यज्य तल्पमधुना परितापभीता
देवं तमाशु नितरां प्रणमन्ति पश्य॥ ८॥

सर्वेषु पङ्कजचयेषु विकासितेषु
तालोच्छ्रितेन रविणा शुचिवासरेऽस्मिन्।
लोकस्य तापचकितानि हृदम्बुजानि
ग्लानिं प्रयान्ति तदिदं बहु विस्मयाय॥ ९॥

एवं क्रमेण जलजातकुलस्य बन्धौ
तारुण्यमाप्य परुषत्वमथाऽभिपन्ने।
तत्तापभीत - तरुजालतल - प्रविष्ट-
शैत्यानुगो भवति कोऽपि च जीविवर्गः॥ १०॥

प्रत्यर्थि - भास्वदधिकोदय-भीतलीन-
गाढाऽन्धकारभृत - गर्भगृह - प्रविष्टाः ।
बालाऽबलागणयुताः कतिचिज्जनाश्च
मध्याह्नकालमधुना परियापयन्ति ॥११॥

भास्वत् - सहस्रकर - सन्तत - पीयमानै-
र्भीतैरिवोटजतले प्रपलाय्य लीनैः ।
शीतैर्जलैः परिगतां कतिचिच्च लोका
गत्वा प्रपां किल चिराय समुच्छ्वसन्ति ॥१२॥

सन्ताप-दूनमनसश्च परे सुराणां
तोयाऽभिषेक - सुखशीतलमेत्य सद्म ।
खेद - प्रशान्तिमधिगन्तुममी विचित्रैः
स्तोत्रैः स्तुवन्ति ननु तान् बहुशः प्रपन्नाः ॥१३॥

दूराऽध्वचङ्क्रमण - खेद - विषण्णगात्रा-
श्छायां विलोक्य तरुमूलगतां प्रसन्नाः ।
तत्रोपविश्य सुखशाखि - तलोपविष्टा-
नेवात्मनः प्रकटयन्ति गिराऽत्र पान्थाः ॥१४॥

मूले तरोर्गलित - भूरिदले निविष्टाः
सक्तून्निपीय सरसांस्तरसा यथेच्छम् ।
सत्कल्पवृक्ष - तलगानमृतस्य तृप्तान्
पान्थाश्चिरं सुरवरान्नु विडम्बयन्ति ॥१५॥

केचित् प्रपाऽवन-नियुक्त-नितान्त-रम्य-
रामाकराऽब्जगलितां सलिलस्य धाराम् ।
चन्द्राऽऽभ-तन्मुख-निरीक्षण-लोलचित्ता
मन्दं पिबन्ति विरलाऽङ्गुलयोऽद्य पान्थाः ॥१६॥

मध्यन्दिनेऽद्य निखिलेषु जनेषु तप्ते-
ष्वर्कोऽपि भूरितरताप - नितान्तखिन्नः ।
शान्तिं सहस्रकर - पीतजलोऽपि नैति
लोकोऽर्तिदस्य पुरुषस्य कुतः सुखाशा ॥१७॥

तीक्ष्णांशु-तापिततमासु वनस्थलीषु
नामभ्रमान् मृगकुलानि पिपासितानि ।
अन्वेषयन्त्यपि चिराय वनस्य चिह्न-
मप्राप्य दूनहृदयानि भवन्त्यतीव ॥१८॥

पानीय - विभ्रमकरैर्वत तिग्मरश्मि-
स्तृष्णाऽऽकुलानि परितो हरिणीकुलानि ।
दीप्रैः सहस्रकिरणैर्बहुशो विलोभ्य
विश्वासघात - बहुपातकमाचिनोति ॥१९॥

धारारयात् सुतनु घर्मजले प्रवृत्ते
देहे खरांशुकिरणैः परितापिते द्राक् ।
मित्रं द्रढीय इव सन्निहितं सकम्पं
हस्तावलम्बमयि यच्छति तालवृन्तम् ॥२०॥

माध्याह्निकेन रविणा रिपुणा चिराय
सन्ताडितं खरतरैः किरणैः समन्तात् ।
शैत्यं निलीयत इवाऽद्य भयद्रुतं द्राक्
कूपोदके वटतले तरुणीकुचे च ॥२१॥

मल्लीसुमे परिमलोऽन्धुजले च शैत्यं
माधुर्यमप्यतितरां सरसे करम्भे ।
एवं सुधागुणसमष्टिरसौ विभक्ता
ग्रीष्मर्तुनेति मनुते जनताऽतितप्ता ॥२२॥

भूषाविशेष - विकला विरलं वसाना
वासोऽवधूत - मृगनाभि - मुखाङ्गरागाः ।
निष्किञ्चना विपुल-काञ्चनकोशभाजो-
ऽप्यस्मिन् शुचौ ननु विभान्ति समानशीलाः ॥२३॥

अङ्के धृताः शिशुजना जननीभिरद्य
मन्दं मुहुर्व्यजनमारुत - वीज्यमानाः ।
लोलेक्षणा अनुपजातगिरः प्रसार्य
जिह्वां तनुं प्रकटयन्ति निजां पिपासाम् ॥२४॥

नाऽन्नाशने न शयने न वनावलीषु
नो हर्म्यपङ्क्तिषु न संस्तरणे न भूमौ ।
नाऽन्तर्गृहे न बहिरङ्गण-भूमिभागे
माध्याह्निकेऽत्र समये सुखलेश-वार्ता ॥२५॥

तापं महान्तमनुभूय निजेन मूर्ध्ना
खेदं हरन् वटतरुस्तलमाश्रितानाम्।
माहात्म्यमाप भुवि दीनजनोपकारः
कार्यः सदेति सुमुखी प्रकटीकरोति ॥२६॥

ग्रीष्मेऽद्य गर्भनिलयाः खलु चन्द्रशालाः
सत्तालवृन्त-पवना मलयानिलाश्च।
पीयूषमम्बु विपदीह समस्तमेव
सञ्जायते हि रतिसुन्दरि भूरि मूल्यम् ॥२७॥

दीनेक्षणानि सरसा नयनाऽन्तपाता
निःश्वाससन्ततिरहो परिहास-वार्ता।
दोःक्षेपणानि परितश्च दृढोपगूहा
दूरस्थितिः प्रियसमागतिरत्र जाता ॥२८॥

ग्लानिं परामुपगतेष्वखिलेषु वृक्षे-
ष्वद्य प्रिये फलभराऽऽनत-सर्वशाखः।
एको रसालतरुरेव निकामकाम्यो
ग्रीष्मे विभाति सुकृती जनलोचनानाम् ॥२९॥

अस्तूपमान-शतकं भवती-कुचस्य
नानाविधैः कविजनै-रुपकल्प्यमानम्।
मूर्धन्यमेकमयि तत्र विभावयामो
रम्यं फलं गुरु रसालतरोर्वयं तु ॥३०॥

लक्ष्मी-विलास-वसति-द्विजवर्ग-जुष्ट-
श्छायाप्रदान-कुशलः स्वयमाश्रितानाम्।
एषोऽतिसौरभतरुः शुचिसङ्ग-शोभी
स्थानेऽद्य साधु फलभारभृतो विभाति ॥३१॥

आमोदभाक् कनक-गौर-फलाऽवनम्र-
मूर्ति-द्विजाऽऽलिरुचिरा सहकारवल्ली।
अद्य प्रिये कुचभराऽवनतां खलु त्वं
सर्वात्मनाऽनुकुरुते तनुगात्रि पश्य ॥३२॥

सेक्तुः शलाटुभिरथो बहुलैः फलैश्च
छेत्तुर्निजा-ऽवयव-दारुचय-प्रदानैः।
कुर्वन् सदोपकृतिमेव समानमित्रा-
ऽमित्रः शमीव सहकारतरु-र्विभाति ॥३३॥

सङ्ख्यातिगेषु भुवि वस्तुषु विप्रकीर्णं
माधुर्यलेश-मवचित्य तपर्तु-रद्य।
तद्राशि-माम्रपटलेषु निवेशयन् किं
वृत्तिं प्रकाशयति माधुकरीं निजस्य ॥३४॥

रूपं सुवर्णनिचयात् सुरसं सुधाया
गन्धं तथाऽऽप्य कमलाददस-स्त्रयस्य।
तत्प्रातिनिध्यकरणे पुनरेकमेव
जातं रसालफलमेतदतीव दक्षम् ॥३५॥

क्षुद्रौघ-सञ्चितमहो मधु राजगर्ह्यं
राजादनं कथमकिञ्चन-लोकलभ्यम्।
आऽङ्क-मानृप-मशेषजनो-पलाल्य-
मेकं रसालफलमेव सुगात्रि धन्यम् ॥३६॥

पाश्चात्यदिक्प्रचलिताः सरयाः सशब्दा
वाता रथा इव तपर्तु-महानृपस्य।
उद्धूत-भूरिरजसो गगनं दिशश्च
संवृण्वतेऽत्र समये जनलोचनं च ॥३७॥

मल्लीसुमैर्विकासिताऽम्बुज-मालिकाभिः
सम्पूज्य चारु सहकारफलं निवेद्य।
आराधितेन महसां निधिना वितीर्ण-
दीर्घायुषो नु दिवसाः सुचिरं जयन्ति ॥३८॥

उग्रैः करै-र्बहुनिपीतरसस्य लोकाः
सन्तापन-व्यसनिनोऽत्र दिवाकरस्य।
उन्मार्गगस्य नृपतेरिव शीघ्रपात-
माबाल-वृद्ध-ललनं खलु कामयन्ते ॥३९॥

भूयः प्रताप्य किल पूर्णकुतूहलेऽथ
शैथिल्यमाप्तवति तिग्मरुचौ कथञ्चित्।
उत्सृज्य भारमिव मूर्धगमत्र दीना
लोकास्तपर्तुदिवसेषु समुच्छ्वसन्ति ॥४०॥

अस्तोत्सवं किल विधातु-मशीतरश्मे-
दुर्ग्राशयस्य नृपतेरिव सम्प्रवृत्तः।
लोकोऽङ्गना-शिशुजनेन सह प्रमोदा-
द्वापी - तडाग - सरितां तटमभ्युपैति ॥४१॥

सूर्योदयात् प्रभृति तापित-सर्वगात्रो
लोकोऽवगाह्य सलिलं महताऽऽदरेण।
पीयूषसार-तटिनीमिव सम्प्रविष्टः
प्राप्नोति वागविषयं कमपि प्रमोदम् ॥४२॥

शीतैर्जलैः करतलोल्लुलितै - रभीक्ष्ण-
मभ्युक्ष्य गात्रमसिताऽम्बुज-लोचनायाः।
प्रीत्या तया प्रतिकृत - स्तरुणश्चिराय
सञ्जायते सुतनु विस्मृत-सर्वतापः ॥४३॥

जानुद्वयं भुजयुगेन निबध्य गाढं
मूर्तं विधाय वपुरुच्चतरात् प्रदेशात्।
वेगादगाध - सलिले परिपातयन्तः
सायं चिराय विहरन्ति मुदा कुमाराः ॥४४॥

नानाविधं हि पणबन्धममी विधाय
बाहू चिराय सलिलेषु समुत्क्षिपन्तः।
मोदादहं - प्रथमिकां बहुलां श्रयन्तो
वेगात्तरन्ति सरितोऽत्र चिरं युवानः ॥४५॥

उत्तेजकै-र्बहुविधै-र्वचनैः सखीन् स्वा-
नाहूय गात्र-परिमर्शकृते युवानः।
प्राप्तेषु सन्निधिममीषु तले निमग्ना-
स्तान् वञ्चयन्ति बहुशो जलकेलिदक्षाः ॥४६॥

एवं चिराय जलकेलि - महोत्सवेन
सन्तापभार-मपनीय दिवाऽनुभूतम्।
तीरोपसर्पणविधौ खलु संशयाना
लोका अहंचरमिकां विपुलां श्रयन्ते ॥४७॥

सोशीर - चन्द्र - हरिचन्दन - चर्चिताङ्गा
निर्मोकतुल्य-ममलं वसनं वसानाः।
ज्योत्स्नोज्ज्वलासु रजनीषु सह प्रियाभिः
पौराः पुरोपवनगाः विहरन्ति हृष्टाः" ॥४८॥

इति दयिततमेन वर्णितं सा
शुचिसमयस्य गुणं निशम्य तथ्यम्।
सुखभर - बहुलालसेव तूर्णं
समुपययौ रसिका प्रमोद - निद्राम् ॥४९॥

# तर्ककुमारः, श्रद्धादेवी च

मूल-लेखकः—
श्री सदाशिव कृष्ण फडके

—अनुवादकः
श्री 'अङ्गारः'

— १ —

कदाचित् क्रान्तियुग-नाम्नि ग्रामे ज्ञानेश्वर-विज्ञानेश्वरनामकौ सुहृदौ प्रतिवसतः। उभावपि तुल्यौ बुद्धिमन्तौ विद्वांसौ कुल-शीलवन्तौ चास्ताम्। तथापि ग्रामीणाः ज्ञानेश्वरं विद्वांसम्, विज्ञानेश्वरञ्च सन्तं मन्वते स्म।

ज्ञानेश्वरः किल पूर्वोत्तरपक्षापादने खण्डनमण्डन-विधौ च अतितरामभिरुचिम् आदधान आसीत्। अत एव सः प्रायः आस्तिकमित्रेभ्यः पूर्वपक्षकरणाय प्रैरयत्, स्वयञ्च वाद-व्यसनितया बुद्ध्या नास्तिक-वादं पाखण्डमतञ्च महता आटोपेन समर्थयन्नासीत्। अभ्यासः शोभनो दुष्टो वा कीदृशोऽपि स्यात्, कालेन स मनोऽपि स्वरङ्गेण पूर्णं रञ्जयत्येव। क्रमशो ज्ञानेश्वरोऽपि पाखण्डमतस्य सुदृढः पक्षपाती समभवत्। विज्ञानेश्वरः पुनरन्तर्मुखवृत्तिः भगवद्-भक्तश्चासीत्। वाद-विवादं कथमपि न स्पृहयते स्म। तञ्च घृणितमपि मनुते स्म।

ज्ञानेश्वरस्य धर्मपत्नी 'पण्डिता' नाम्नी आसीत्, विज्ञानेश्वरस्य च सहधर्मचारिणी 'सहजा' इति विख्याता। ज्ञानेश्वरस्य कन्यारत्ने आस्ताम्, ययोर्नामनी तेन महता कौतूहलेन 'चिकित्सा' 'पाखण्डा' च कृते। अकल्पितयोगेन विज्ञानेश्वर-स्यापि द्वे कन्येऽभवताम्, ययोर्नामनी तेन 'ऋतम्भरा' 'प्रज्ञा' चेति विहिते। कालेन चरमे वयसि ज्ञाने-श्वरस्य एकः पुत्रोऽजायत, यस्य 'तर्ककुमारः' इति तेन नामकरणं कृतम्। विज्ञानेश्वरस्यापि चरमा कनिष्ठा कन्या समजायत, यस्या नाम पित्रा 'श्रद्धा' इति कृतम्।

तर्ककुमारः श्रद्धा च अतितरां सौन्दर्यसम्पन्ने तेजस्विन्यौ चास्ताम्। यथा यथा तर्ककुमारोऽवर्धत, तथा तथा तन्मुखमतीव विचारप्रवणं चञ्चलञ्च परिदृश्यमानमभवत्। श्रद्धायाः पुनर्मुखमण्डलं देवविशेषवत् प्रसादयुतं स्मितान्वितञ्च समदृश्यत। पित्रोरिव एतयोरपि परस्परं सौहृदं स्नेहश्चासीत्। श्रद्धा तर्ककुमारतः पञ्चशैः वर्षैः कनिष्ठाऽऽसीत्, तथापि बाल्यादेव उभौ सहैव क्रीडतः पठतश्चास्ताम्। तर्ककुमारस्य विचित्रकल्पनाभिः श्रद्धा सदैव विस्मयान्विता जायते स्म। कदाचित् तस्य कल्पना-प्राचुर्यं वीक्ष्य सा आश्चर्याभिभूताऽपि भवति स्म। एतद्विपरीतं श्रद्धायाः स्वल्पमायुः तत्र च मुखमण्डले विलसन्तीं सरसां प्रौढताञ्च समीक्ष्य तर्ककुमार-स्तस्याम् अतितरां स्निग्ध आदरभाग् चाभवत्।

एकदा उभौ बालकौ भवारण्ये संसरणा-सरित-स्तीरे क्रीडन्तौ आस्ताम्। श्रद्धा सुगन्धीनि वन-पुष्पाण्यादाय मालां गुम्फन्ती आसीत्। अपरत्र एकस्माद् वृक्षात् निश्च्योतमानं दुग्धसदृशं रसं विलोक्य चकितस्तर्ककुमारः पत्रपुटं निर्माय तत्र तं रसं संगृह्यमाण आसीत्।

कियद् - दूरे सरितस्तटे प्रचण्डतरस्य तरो-रधस्तात् एका योगिराजाः प्रतिवसन्ति स्म। ते प्रतिदिनं स्वीयोटजस्य बहिः "प्रज्वलितस्याग्नेः

निकटे तिष्ठन्त आसन्। न ज्ञायते, तेषां किं वास्तवं नामाऽऽसीदिति, परं जनास्तान् 'योगानन्दे'ति नाम्ना आह्वयन्ति स्म। एतेषां विषये बहूनां विविधा अभिप्राया आसन्। ज्ञानेश्वरस्य मतानुसारमेते कश्चिदज्ञतरः आलसी, कपटी भिक्षुक आसीत्। विज्ञानेश्वरप्रज्ञया पुनरेते विदितवेद्या महात्मान आसन्। तर्ककुमारेण श्रद्धया च पित्रोर्मुखात् महात्मनो विषये मतद्वयं चर्चाप्रसङ्गे श्रुतपूर्वमासीत्। अतस्तयोरपि महात्मविषये स्व-स्वपितुरनुरूपे एव मते समभवताम्।

तस्मिन् दिने विहरन्तौ तौ बालकौ तत्रैव उटजस्याभितः संप्राप्तौ। श्रद्धा स्वहस्तग्रथितां मालां योगिराजस्य कण्ठे समर्पयितुमतितरां समुत्कण्ठिताऽऽसीत्। अत एव सा तूर्णं तर्ककुमारस्याग्रे प्रचलति स्म। किन्तु दौर्भाग्यात् चापल्येन विपत्तिनाम्न्या लतया आबद्धपदा सा भूमौ पपात, तद्धस्तस्था मालाऽपि पद्भ्यां परिमृदिता विम्लाना समभवत्। पतनकृत आघातस्तस्यै तावत्पीडको नाभवत् यावत् मालाया म्लानता खेदकरी अजायत।

दृष्ट्वैतत् तर्ककुमारो बालसख्याः साहाय्याय त्वरितं समागतः। तस्य कल्पनाप्रचुरे मनसि सहैव परस्पर-प्रतीपं कल्पनाद्वयं प्रासूत। तेन विचारितम्—पत्रपुटे सञ्चितो रसः श्रद्धायै देयः, मालायाः स्थाने तद् दुग्धमेव सा महात्मानं समर्पयत्विति। यद्ययं यथार्थतो महात्मा भवेत्तदा नूनं जानीयाद् यन्नूनमयं कस्यचन विषाक्तस्यौषधे रसः, न जातु दुग्धमिति। अथ कृत्रिमो मूढश्च स्यात् तदाऽस्य मतिः समुचितमौषधं (!) प्राप्नुयादिति। विचार्यैवं सोऽब्रवीत्—'भगिनि! किमिति खिद्यसे? गृहाणेदं दुग्धम्। त्वदर्थमेवेदं बुद्ध्या समानीतम्। इदमेव तस्मै महात्मने समर्पय' इति।

श्रद्धाया नेत्रे उन्नते भूत्वा तर्ककुमारमपश्यताम्। सहैव तया स्वीयप्रमादप्रभवया लज्जया तेऽवनामिते च। तस्य समयोचितेन अवधानेन परं प्रमुदिता सा। इयती निरागसा सरला चासीत् यत् कुमारस्य कपटं मनागपि न ज्ञातवती।

श्रद्धा तत्पत्रपुटं हस्ते समादायाग्रे प्रस्थिता। महात्मानः अग्नाधान्याः निकटे आत्मानन्दे निमग्नाः स्थिता आसन्। प्रायस्ते एकान्ते उपांशुरूपेण मन्त्र पाठं कुर्वन्त आसन्। इदानीमपि ते तैत्तिरीयोपनिषन्मन्त्राणि पठन्त आसन्। कस्यचन समित्पाणिनोऽन्तेवसत इव सा भावुका श्रद्धा तेषां निकटे समागता, परं महात्मनामत्र ध्यानमेव नाकृष्टम्। नेत्रे निमील्य ते पठन्त एवासन्—

हा ३ वु, हा ३ वु, हा ३ वु। अहमन्नमहमन्नमहमन्नम्। अहमन्नादो ३ ऽहमन्नादो ३ ऽहमन्नादः। अहं श्लोककृदहं श्लोककृदहं श्लोककृत्। अहमस्मि प्रथमाजा ऋता ३ ऽस्य। पूर्वं देवेभ्योऽमृतस्य ना ३ भायि। यो मा ददाति स इदेवमा ३ ऽऽवाः। अहमन्नमन्नमदन्तमा ३ ऽद्मि। अहं विश्वं भुवनमभ्यभवा ३ म्। सुवर्न ज्योतीः। सह नाववतु, सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु। मा विद्विषावहै। ॐ शान्तिः शान्तिः शान्तिः।

अन्तिम-पाठं श्रुत्वा श्रद्धयाऽवगतं यन्नूनमेतानि भोजनकाले पितृचरणैः पठ्यमानानि त्रिसुपर्णमन्त्राण्येव। मन्त्रपाठेन स्वात्मानन्दे मग्नं तं महात्मानं वीक्ष्य ऋजुमतिः सा बालिकाऽवोचत्—'महाराज, त्रिसुपर्ण-पाठः पर्यवसन्नः। इदमानीतं भवद्भ्य एतद् दुग्धम्। परिगृह्यतामेतत्' इति।

मुग्धतया बालिका वचनमेतद् आम्रेडितमकरोत्। तेन विक्षेपेन त्रस्तमना महात्मा क्रुद्धः सन् चक्षुषी विस्फार्य श्रद्धामवलोकयामास। श्रद्धया तेषां नेत्राभ्यां अग्निकणा निर्गच्छन्तीति अवगतम्। भयङ्करे ते नेत्रे दृष्ट्वा वेपथुमत्यास्तस्याः हस्तात् तद्दुग्धपत्रपुटं प्रज्वलन्त्यामग्न्याधान्यां समापतत्।

पत्रपुटे विषवृक्षस्य रस आसीत्। तस्य विषमयो धूमः परितः प्रासर्पत। दृष्ट्वेदं महात्मनो मुखात् शापवचो निःसृतम्—'गच्छ, त्वमन्धा भव' इति।

शापप्रभावात् निरागसा भावुका बालिका श्रद्धा सपदि अन्धत्वं गता, भयाच्च भूमौ पपात। दूरत एव अनपेक्षितममुं प्रकारं वीक्ष्य तां साहाय्यदानाय तर्ककुमारः त्वरया निकटमाससाद। एकतस्ताम् आश्वासयन् किञ्चिद् दुःखावेगेन किञ्चिच्च क्रोधावेशेन सोऽब्रवीत्—'किमेतत्? विषाक्तरस-

पत्र पुटं तु मयैव तस्या हस्ते निहितम्। प्रायश्चित्तं पुनरियं निरागसा भुञ्जते' इति।

कुमारस्य क्रोधाप्लुतानि वचांसि श्रुत्वा महात्मना उक्तम्—'यद्येवं तर्हि त्वमपि अप्रतिष्ठितोऽन्धो भव' इति।

इत्थं तर्कः, श्रद्धा च उभेऽपि तत्क्षणमन्धे समभवताम्। कियता कालेन पारिवारिकैर्वृत्तमिदं यदाऽवगतं तदा ज्ञानेश्वरः प्रतिहिंसा-पीडितो विज्ञानेश्वरश्च दुःखदग्धस्तत्र गन्तुं प्रस्थितौ। किन्तु विज्ञानेश्वरेण स्वमित्रं बलान्निरुद्ध्य उक्तम्—'भ्रातर्ज्ञानेश्वर! सम्प्रति भवान् अग्रे न प्रयातु। क्रोधवशाद् भवद्भ्यो महात्मनोऽस्य अमर्यादा सम्भविनी। यद्येवं भवेत्तदा प्रश्नोऽयमतितरां वैपरीत्यं भजेत। अतो भवन्तो मा आयान्तु। अहमेव गत्वा सर्वं पश्यामि किं तदिति।'

सौभाग्यात् हठवादी ज्ञानेश्वरो विज्ञानेश्वरस्य उपायस्यास्य औचित्यं विचार्य सम्मतोऽभवत्। अथ एकाकी विज्ञानेश्वरो योगानन्दपादानां दर्शनाय प्रस्थितः। तस्य तत्र प्रापणात् पूर्वमेव योगानन्दानां क्रोधः शमं गतः। विज्ञानेश्वरेण सविनयं तस्मै साष्टाङ्गं प्रणम्य गद्गदगिरा प्रार्थितम्—'अज्ञानिनौ बालकौ क्षन्तव्यौ' इति।

'प्रणिपातः प्रतीकारः संरम्भो हि महात्मनाम्' इति हि अभियुक्तानां वचः। महात्मा योगानन्दोऽपि शान्तो भूत्वाऽब्रवीत्—'विज्ञानेश्वर! सत्यमेतद् यत् ममशापेन भवतां बालकौ अन्धीभूतौ। तथापि इदमपि वक्तुं न शक्यते यदेतौ विचारदृष्टिवन्तौ किल। यतो हि एतौ रस-दुग्धयोर्भेदं न जानतः, साधुना असाधुना च सह व्यवहारस्य भेदं नावगच्छत इति। आस्तां यत्किमपि, विधिलिखितं सम्पद्यत एव। तन्निरोधे न कोऽपि प्रभवति। मन्ये, भविष्यति एताभ्यां बालकाभ्यां किमपि विशिष्टं कार्यं भवेत्। श्रद्धा अन्धतां गतेति मा शुचः, नूनं कालेन सा प्रज्ञाचक्षुर्भवेत्। अस्या अयं सखा कुमार एव पतिर्भवेत्, तत्प्रारब्धानुसारम् उपनेत्रद्वारा नूनमयं सर्वं पश्येत्। स्खलितो भूत्वैव स मतिमान् भवेत्' इति।

अन्धाऽपि कन्या महात्मनो वरेण प्रज्ञाचक्षुर्भवेदिति श्रुत्वा विज्ञानेश्वर आपत्तिमपि इष्टापत्तिममन्यत, तेन च कियानाश्वस्तोऽपि समभूत्। पत्युर्निश्चयेन अन्धाया: कन्यकाया विवाहचिन्तयाऽपि मुक्तिं लेभे।

अथ कालेन ज्ञानेश्वरेण राजनगरस्य नेत्ररोगविशेषज्ञ-चिकित्सकद्वारा परीक्ष्य तर्ककुमार उपनेत्रेण संयोजितः। कतिपयैर्दिवसैः क्रमशः स दृष्टिमाप। किन्तु दृष्टेरस्या उपयोगः स्वयं ज्ञानेश्वरेण अतर्क्यरीत्या तादात्म्यं प्राप्तस्य राजनगरे वृद्धिङ्गतस्य पाखण्डस्य शिक्षायामेव जायमान आसीत्। अर्थात् पाखण्डं कुकल्पनाश्चैव तस्य उपनेत्रेऽभवताम्।

निरागसा, भावुका तपस्विनी अन्धा श्रद्धा स्वानुभवसम्पन्नस्य पितुर्विज्ञानेश्वरस्य छत्रच्छायायां नेत्रयोः कार्यं पितुर्मुखोद्गतेन सच्छ्रवणैः तन्मननैश्च कुर्वती भाविनं प्रज्ञाचक्षुष्ट्वं प्रतीक्षमाणाऽऽसीत्। दैवस्य विचित्रविलसितेन तर्ककुमारस्य तद्दिवसीयो दुरभिसन्धिः तत्प्रभवश्च योगानन्दमहात्मनः शापश्च, उभयमेतत् कदा वररूपतां गच्छेदित्यत्रैव अन्धायाः श्रद्धायाः सौभाग्यं निर्भरमभूत्।

किन्तु अस्यामपि विपत्तौ सन्तोषावहं वृत्तमिदमभवद् यत् तर्ककुमार इदं सुदृढमवधारयन्नासीत् यन्मम दुरभिसन्धिना उपद्रवशीलस्वभावेनैव च श्रद्धा अन्धीभूता। अतस्तेन कर्तव्यनिष्ठायुक्तेन मनसा निर्धारितं यदिमामन्धां श्रद्धां जीवनसङ्गिनीं विधायैव संसारयात्रा मया परिचालनीयेति।

अथ यथोचितसमये परकीय-संस्कृतिरूपे उपनेत्रे बिभ्रतः तर्ककुमारस्य अन्तर्दृष्टिसम्पन्नया अन्धया श्रद्धया सह विवाहोऽभवत्।

[ तयोर्विलक्षणदम्पत्योर्गार्हस्थ्यम्, तत्र ताभ्यामनुभूता नैका उद्बोधिकाः कथाः पाठकैरग्रे पठिष्यन्ते। तत्रैव आधुनिकसाधकस्य असुविधाः, तासामुपायचिन्तनानि चेति प्रत्नो विचारः सूत्र इव ग्रथितो भवेत्। ]

क्रमणसमये नादिरशाहेन इदमपि सिंहासनम् आहृत्य विदेशे नीतम्।

मयूरो निखिले भारते, लङ्कायाम्, जापानदेशे, ब्रह्मदेशे च समुपलभ्यते। राजस्थानप्रदेशे, हरियाणाप्रदेशे, व्रजमण्डले च अस्य समज एव समुपलभ्यते। भारतीयस्य मयूरस्य नेत्रे रक्त-श्यामलतामिश्रे, ( भूरी ) चञ्चुः शृङ्गवर्णा, पादौ च साधारणतः नेत्रसमानवर्णौ एव ( सलेटी भूरे ) भवन्ति। मयूरस्य पादौ सर्वथा कुरूपौ। तस्य सौन्दर्ये महानयम् एको दोषः। मन्ये कदाचित् सौन्दर्येणायम् अवलेपितो न भवेत्, एतदर्थमेव एतत् कुरूपं भगवता तस्मै दत्तं स्यात्। मयूरस्य शिरसि स्वल्पाः हरित-नीलवर्णाः उज्ज्वलाश्च केशा भवन्ति। ग्रीवा देदीप्यमाना, सुन्दरा, घननीलवर्णा भवति। उपरिस्थो भागः हरितवर्णः ( स्लेटी हरा ) भवति। पुच्छस्य उपरितनो भागो रक्त-श्यामः ( भूरा ), वक्षस्तदधोगतः सर्वोऽपि भागः प्रोज्ज्वलहरितवर्णो भवति। पुच्छस्य पङ्खाः दीर्घा अत्याकर्षकाश्च भवन्ति। तेषामग्रभागो वर्तुलो घननीलश्च भवति। ग्रीवायाम् अर्धचन्द्राकृति चिह्नं दृश्यते यच्च नेत्रवत् प्रतीयते। भारतस्य असमप्रदेशे श्वेता अपि मयूराः समुपलभ्यन्ते। किन्तु ते नाधिकम् आकर्षकाः। ब्रह्मदेशस्य जावाप्रदेशस्य च मयूराः इतोऽन्यजातीया भवन्ति। तेषां ग्रीवा वक्षश्च स्वर्णवर्णं भवति। अन्येऽपि नैकजातीया मयूराः कांगो-प्रभृतिदेशेषु उपलभ्यन्ते।

अप्रैलमासतः अक्तूबरमासं यावत् मयूरी एकवारं आत्रीणि पञ्चयावत् अण्डानि जनयति, तैश्च बालाः जायन्ते। मयूरः सहस्रमय-फुटपरिमित उन्नत आसाद्यते। अस्य आहारः कीटाः, अन्नम्, फलानि च भवन्ति। अत्यन्तं चपलः सावहितश्चायं पक्षी वेगेन पलायते। मयूरः अत्युच्चम् उड्डयितुं न प्रभुः। स्वरक्षायै अयमुड्डयनं जानाति। मयूरस्य उदरम् अत्युष्णं भवति। अयं सर्पमपि पाचयति। मयूरो व्यालस्य शत्रुः। दर्शनसमकालमेव तं खादति। सर्पास्तेन बहु भीताः भवन्ति। शब्दश्रवणेनैव दूरतः पलायन्ते। अत एव उच्यते, यत्र वने मयूराः, न तत्र सर्पा इति। मयूरः अतितरां शान्तस्वभावो भवति। स परस्परं जातिबान्धवैः कदापि कलहं न करोति।

मयूर-नृत्यं विश्वविश्रुतं किल। भारतीयकत्थकनृत्ये अस्यैव नाम्ना एको विशिष्टो नृत्यप्रकारो मिलति। यदा आकाशं कृष्णा कादम्बिनी आच्छादयति, तदा मयूरः परं प्रमुदितो भवति। नूतनजलधरान् दृष्ट्वा, तेषां स्तनितं च श्रुत्वा मयूरः पुच्छम् उन्नमय्य वर्तुलाकारेण प्रसार्य सानन्दं नृत्यति। नर्तनसमये स्वसौन्दर्यमालक्ष्य अतितरां गर्वोद्धतो भवति। परं यदा स्वपादौ पश्यति, तदा तावदेव खिन्नोऽपि जायते। कुरूपतेयं तस्मै मर्मभेदिनी जायते, मनसा च स रोदति। स एकाकी कदापि न नृत्यति, मयूर्या उपस्थितिस्तदर्थं परमावश्यकी। मयूरस्य शृङ्गारिकताया इदं प्रमुखं द्योतकम्।

भारतशासनेन १९६२ मितेशवीयवत्सरे मयूरो राष्ट्रियः पक्षी घोषितः। तदारभ्य विशेषतोऽयं सन्मान्यते। राष्ट्रियपक्षिवधः अपराधत्वेन स्वीक्रियते। तस्यावमाननमपि अपराधे एव परिगण्यते। कामं विभिन्नदेशानां नैके राष्ट्रियपक्षिणः स्युः। परं भारतीयोऽयं राष्ट्रियपक्षी सौन्दर्येण सहैव राष्ट्रियैक्यस्यापि सुदृढं प्रतीकम्। अत एव केन्द्रीयशासनेन सर्वे प्रदेशाः समनुरुद्धा यत् भवतां प्रदेशे मयूरा न स्युस्तदा सावहितं ते समानीय पालनीया इति।

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगत्गंज, वाराणसी।

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य
मासिकं मुखपत्रम्

वर्षम् ४५

अङ्कः ७

सम्पादकः
गो० न० बैजापुरकरः

जुलाई
१९६९

वार्षिक-मूल्यम्
५) रूप्यकाणि

प्रत्यङ्क-मूल्यम्
अर्धरूप्यकम्

## दोला-वर्णनम्

श्रीवृन्दावन एव कापि वलते दोलोत्सवस्य स्थली
यत्प्रान्ते समरोपितेव परितः कल्पद्रुमाणां ततिः।
शाखाग्रैरितरेतरं समपरिष्वक्तेव लेखायिता
काण्डानामृजुदीर्घवृत्तवपुषां मध्येषु शून्यान्तरा ॥ १ ॥

तेषामेव महाहरिन्मणि - चतुष्पाचीरतां गच्छतां
चञ्चच्चामरचारु - चेलकलश - प्रालम्ब - मुक्तास्रजाम्।
नानारत्न - फल - प्रसून - विहगश्रेणीजुषा - मन्तरे
प्रांशुः कान्त्रन काञ्चनेन रचिता वेदिश्चतुष्कोणिका ॥ २ ॥

यत्कोणेषु चतुर्षु चारुविटपैरन्योन्य - संसर्गिण-
श्चत्वारो हरिचन्दनाः प्रसविनः सौन्दर्यसारश्रियाम्।
यैः शाखाभिरकारी कश्चन चतुर्द्वारश्चतुस्तम्भवान्
भास्वद्रत्नचतुश्छदिः प्रसृमरस्तुङ्गो मणीमण्डपः ॥ ३ ॥

यच्छाखाग्र - विलम्बिनीभि - रत्नतिस्थूलाभिरान्दोलिनी
बद्धा काञ्चनरज्जुभिर्विजयते प्रेङ्खोलखट्वा हरेः।
या प्राग्दक्षिणपश्चिमोत्तरगते तुल्ये समस्ताङ्गणे
सर्वाभिर्मम संमुखीति ककुभां लक्ष्मीभिरालोक्यते ॥ ४ ॥

—श्री कवि कर्णपूरः

# अनुक्रमः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षे ] वाराणसी, शुद्धाषाढः २०२६ : जुलाई, १९६९ ई० [ ७ अङ्कः


## अष्टमूर्तिः दक्षिणामूर्तिः

गाङ्गेये पीठवर्षे नवमणिखचिते मोदतः सन्निषण्णं
मौनव्याख्या - परास्त - प्रशमधनगण - प्रौढसंशीतिजालम् ।
बिभ्राणं योगपट्टं निगमसमुदयान्वेषणीयाङ्घ्रिपद्मं
कुर्वे पात्रं नतीनामहमघधुतये दक्षिणामूर्तिमीशम् ॥ १ ॥

कल्याणं नः प्रदद्यादचलपतिसुतावल्लभः सर्वलोक-
क्षेमायोच्चण्डगर्व - त्रिपुरदनुजनु - र्दत्तपञ्चत्वहासः ।
पाथोजन्माक्षबाणः सुरमुनिततिभि - र्गीयमानापदान्ते
यद्भासा भाति सर्वं त्रिजगदिदमसौ दक्षिणामूर्तिदेवः ॥ २ ॥

बिभ्राणं पाणिदेशैः सरसिजरुचिभिः पुस्तकं रम्यवीणां
चिन्मुद्रामक्षमालां शिशिरकरशिशु-प्रोज्ज्वलन्मौलिदेशम् ।
नित्यं वाताशनेन्द्राभरणविलसिता - ऽशेषगात्रं महान्तं
वन्देऽहं वाग्विवृद्ध्यै जलजभवमुखै-र्दक्षिणामूर्तिमीड्यम् ॥ ३ ॥

अज्ञानक्ष्माभृदुत्पाटन - धृतजलमुग्वाहना - ऽस्त्रप्रभावं
न्यग्रोधाऽनोकहाधस्तलकृतवसतिं देवदेवार्चिताङ्घ्रिम् ।
भक्तानां बद्धदीक्षं समवनकरणे मूर्तिभाजां समेषां
विद्यावाप्त्यै निषेवे सततमतितरां दक्षिणामूर्तिदेवम् ॥ ४ ॥

कुर्वेऽनन्तान् प्रणामान् करटिकुलपतित्वक्सनाथा यतोऽयं
पीयूषात्मा धरित्री-गगन-महि-मरुङ्-मातरिश्वा च होता ।
बहिःशुष्माऽष्टमूर्ति - व्यवहरणकृतौ हेतुतां यस्य यन्ति
ज्ञानोत्पत्त्यै निकामं क्षितिधरपतये दक्षिणामूर्तयेऽहम् ॥ ५ ॥

—श्री विश्वनाथशास्त्रिणः कार्णाटकाः—

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

—स्वर्गीयाः श्री विन्ध्येश्वरीप्रसाद शास्त्रिणः—

देहसौष्ठवमथाऽन्तरं बलं निःप्रयासमपि जीविकार्जनम् ।
सार्वदेशिक-विपश्चिदुत्तमैः शिक्षणं निगदितं त्रिलक्ष्यकम् ॥ ५१ ॥

५२. आंग्लदेश-जनता-प्रचारिता
शिक्षणस्य बत रीतिरद्भुता ।
तत्र चैकविषयस्य हन्त भो
गन्धमात्रमपि नोपलभ्यते ॥

५३. ब्रैटिशे बहुधना-ऽऽप्यशिक्षणे
को गुणोऽस्ति न मयाऽवधार्यते ।
भृत्यकर्मकर - लब्धिहेतवे
तत्प्रचारित-मिहाऽऽङ्ग्लदेशजैः ॥

५४. मातुरात्मन उत स्त्रियोऽपि वा
बन्धकीकृतवता ह्यलङ्कृतिः ।
विक्रयं बत विधाय सम्पदो
कश्चिदद्भुत उपाधिर्जितः ॥

५५. किन्तु विश्वमखिलं तु शून्यवद्
दृश्यते न भृतिराप्यते क्वचित् ।
अन्ततश्च परितो विषीदता
निन्द्यकर्मणि रतेन भूयते ॥

५६. देश - जातिहित - साधनक्षमं
स्याद् यतः सुलभजीविकार्जनम् ।
स्वावलम्बन-परायणं शुभं
शिक्षणं द्रुतमिह प्रसार्यताम् ॥

५७. वेदमूल - निजधर्म - पालनं
ह्रासमेति सततं दिने दिने ।
तद्धिताय जगतां गृहे गृहे
धर्मशिक्षणमिह प्रसार्यताम् ॥

५८. आर्यजातिरियमास विश्रुता
धर्मपालनपरा स्वभावतः ।
किन्तु बुद्धसमयादहर्निशं
याति सा शिथिलतां स्वकर्मणि ॥

५९. तद्दिनादिह हि साऽधुनावधि
भीषणेऽपि समये सुरक्षिता ।
येन तद्धि बलवद् विधीयतां
धार्मिकं निजसमाज-शासनम् ॥

येन यावन-कराल-शासने स्थापितेन विहितं सुरक्षणम् ।
सर्वशान्ति-दसदार्यसंस्कृतेस्तत्पुनः प्रतिपुरं प्रसार्यताम् ॥ ६० ॥

(क्रमशः)

# भगवानेव तथाकथित-साम्यवादाद् देशं पातु !

साम्यवादो भारतदेशस्य प्राणपदम्। वास्तविकः साम्यवादः किलाऽनेनैव राष्ट्रेण विश्वस्मिन् समुद्भावितः, परिपोषितः सर्वाङ्गीणतां नीतश्च। सूक्ष्मया दृशा विचार्यमाणे साम्यवादेन अशेषतः साद्गुण्य-प्रापणं सर्वथा दुःशकम्। तथा प्रयतिते तदीयं 'साम्य'रूपमेव प्रकाशात् तम इव दूरमपैति, 'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव' साम्यरूपत्वात्। भूयोधर्मवत्त्वे सत्यपि सकलधर्मसत्त्वाभावरूपाया न्यूनतायास्तत्रापि सत्त्वेन साम्यवादस्य वन्ध्याकल्पतापातात्।

भारतराष्ट्रं पुनरपरत्वेन मन्यमानाय स्वात्मरूपत्वं समुपादिशति। स्वात्मवाद एव तस्य ऐकान्तात्यन्तिको वादः। भेदं तथाश्रयं च द्वितीयं स सर्वथा निषेधति। **द्वितीयाद्वै भयं भवति** इति हि तस्य डिण्डिमो घोषः। सत्येवं भारतादधिकः को नाम साम्यवादी भवेत्? **न स्त्री पुमान्**···**उत कुमारी** इति घोषयत् भारतीयदर्शनं वर्गविहीन-समाजस्य व्यावहारिकं चित्रं नाऽऽद्यैव, अनादिकालतो लक्ष्यत्वेन मनुते। अन्ततः साम्यवादिभिरपि वर्गविहीनसमाज-निर्माणप्रसङ्गे साधनानां राष्ट्रीकरणे सति शासनद्वारा श्रमिकैः सह न्याय्यव्यवहारः क्लृप्ततया कल्प्यत एव। सत्येवं कस्यापि प्रकटबाधकस्याऽभावेन शास्त्रविधेरपि मानवहितकारित्व-स्वीकारस्य निष्कण्टकत्वम्। **वसुधैव कुटुम्बकम्** इति निर्दिशत् शास्त्रं कथं नाम कस्यचन हितं घ्नन्तुं प्रसरेत्? अत एव भगवान् साग्रहं स्फुटं वक्ति—

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥**

स एवाऽन्यत्र पण्डितान् सदसद्विवेकबुद्धिमतो लक्षयन्नाह—

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः॥**

एषु प्रतिष्ठितमात्मानं समत्वेन पश्यन्तीति श्लोकस्यास्य परमार्थः। अन्ततः क्रियाद्वैतस्य जगति गगनकुसुमायमानत्वात् भावाद्वैतमन्तरा विषयेऽत्र गत्यन्तराभावात्।

इत्थं परिनिष्ठितधिया विचार्यमाणे साम्यवादेन भारतस्य स्वप्नेऽपि विरोधोऽसम्भवी। तथापि सम्प्रति 'साम्यवाद'-शब्देन यादृशं व्याघ्रचर्मपरिच्छिन्नं रासभीयं सम्प्रदायं तदनुयायिनो जनास्तादृशानि राष्ट्राणि वा विश्वस्मिन् प्रतिष्ठापयितुं समीहन्ते, प्रयतन्ते च, भारतं राष्ट्रं कथमपि तमनुमोदयितुं न प्रभवेत्। यतः सर्वोऽप्ययं तथाकथितः साम्यवादो जडाधिष्ठितो भौतिकतामात्रानुग्राहक एव। न केवलं तदधिष्ठितः, चैतन्यवादमध्यात्मनिष्ठां च विरुणद्ध्यपि। विश्वस्य सर्वथा शुभावहं प्रगतेश्चरमशिखरमधिरूढं चैतन्याध्यात्मिकतासिद्धान्तं कथं न कोऽपि जागृतप्रज्ञो जनो राष्ट्रं वा समुपबृंहयितुं प्रभवेत्?

भौतिकताया आपातरमणीयाया अयं स्वभाव एव यदुपभोगेन सा न शाम्यति, प्रत्युत हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते। जडाधिष्ठितत्वादस्य तथाकथित-साम्यवादस्य कृते भौतिकता-परिपोषण-

प्रसङ्गे किमपि अकृत्यमेव न भवति। येन केन प्रकारेण स्वीय-भौतिकोत्कर्ष-साधनमेव तस्य परमो धर्मः। भौतिक्यां सत्तायामधिकृतायामेव स सफलीभवतीति तदर्थमेवास्य सर्वोऽप्यभिक्रमो जायते। व्यक्तिगतरूपेण तथाकरणे किञ्चन वैरूप्यं वैरस्यं सर्वानुमतिर्वा न मिलतीति तथा चिन्तयन्तः सम्भूय स्वार्थं साधयन्ति। सोऽयं भौतिकमात्रस्वार्थसाधकानां समज एव तथाकथित-साम्यवादिनां सर्वोच्चा परिषद्। देशविशेषस्य उच्चतर-महत्त्वाकाङ्क्षी स्वार्थसाधुधुरीणः स्वीयया विलक्षणया प्रभुशक्त्या परिषदमिमं प्रभावयेत्, स्वात्मसात् कृत्वा तस्याः सर्वोच्चनायकपद-मधितिष्ठन्नयं स्वात्मानं विश्वस्य सर्वोच्चं साम्य-वादिनं नेतारं घोषयति। स्वात्मानं श्रमिकाणा-मुत्पीडितानाञ्च समुद्धाराय समवतृतं नारायणमेव नाटयति। तदुपष्टम्भकानि राज्यानि च तमेव समर्थ्य स्वात्मनः स्वरूपं गोपायन्ति। अदूरदर्शिभिः साम्प्रदायिकैः धनिकवर्गैश्च समुद्भावितैः विविधै-रुत्पीडनैः परिपीडिता राष्ट्रप्रजाः पुनस्तामेव मृगतृष्णिकां पिपासाशमनाय समाश्रयन्ति। इत्थ-मेकतः स्वीये समग्रे राष्ट्रे स्वकीयस्वार्थसाधनोपाये सुदृढे सति 'इच्छति शती सहस्रम्'-न्यायेन तस्य भौतिकावतारस्य विजिगीषोः विश्वस्मिन् साम्राज्य-प्रसाराय दीर्घाद् दीर्घतरं सौम्यमुग्रं शीतमुष्णञ्च महाभियानं प्रारभ्यते।

यदि नामाऽनेनैव पथा विश्वशान्तेः नूनं परि-णतिश्चेत्, यथा च तैर्विश्वशान्ति-मुक्ति-प्रभृतिघोषै-रहरहः समुद्घोष्यते, तदा सोऽपि पन्थाः निर्विचि-कित्सं सर्वानुकरणीयो भवेत्। परं तेषामेव राष्ट्रे तथा प्रयतमानानां पूर्वेषां नेतॄणामैतिह्येन एतद्वि-परीतमेव प्रत्युदाहरणं प्रस्तूयते। एवं सुन्दोपसुन्द-न्यायोऽन्ते च प्रजाविप्लव एव परिशिष्यमाण-स्तदीये समग्रे ऐतिह्ये परिदृश्यते। सत्येवं केनापि मतिमता स पन्थाः कथं समाश्रयणीयो भवेत्? कथं वा चिरप्रबुद्धं भारतराष्ट्रं तमनुमन्तुं शक्नुयात्?

स्वर्णिम-खगतया प्रथितं भारतं राष्ट्रं स्वीय-दासतापाशे समाकृष्टवताम् आंग्लशासकानां प्रभावो यदाऽत्र अस्तं गच्छन् दृष्टस्तदा तद्राष्ट्रं स्ववशं विधातुं लोलुपेन तथाकथितसाम्यवादस्य वैश्विक-सङ्घटनेन तत्प्रतिनिधिकेन राष्ट्रेण चात्रापि स्वीयाः दृढतरा नागपाशाः समास्तृताः। अदूरदर्शिनो भौतिकतामात्रजीविनः कतिपये भारतीयाः देशस्य परतन्त्रता-कालत एव तेषां पाशरूपतां गताः। स्वराष्ट्रनिष्ठाविमुखास्ते तत एव नैकैः कूटचक्रैस्तेषां वैदेशिकसाम्यवाद-साम्राज्यलिप्सूनां साहाय्यं समा-चरन्त आसन्। १९४२ तमेशवीयवत्सरे देशेऽत्र प्रारब्धस्य 'भारतं मुञ्चे'ति महाभियानस्यावसरे एतैः कृतो राष्ट्रद्रोहो नाद्यापि विस्मर्तुं शक्यः केनापि राष्ट्रभक्तेन।

यदा किलास्माकं राष्ट्रं दीर्घकालीनां पारतन्त्र्य-शृङ्खलां सन्त्रोटच स्वतन्त्रमभवत्, तदा साम्यवाद-प्रभावितानि राष्ट्राणि भूरिशः प्रकटसाहाय्यस्य व्याजेन राष्ट्रमिदं प्रभावयितुं प्रावर्तन्त। तत्रैकेन प्रतिवेशिना साम्यवादिराष्ट्रेण तु अभूतपूर्वं भारत-सौहार्दजालं वयितम्। भारतराजधान्यां देशद्वयस्य प्रधानमन्त्रिणोः शोभायात्रायां 'भारतीयाश्चीनीयाश्च भ्रातरौ भ्रातरौ' इत्यस्य घोषैर्दिगन्तानि समापूरि-तानि। साम्यवादिराष्ट्रेषु स्वस्य मूर्धन्यतां ततश्च समग्रे विश्वस्मिन् साम्यवादतन्त्रप्रस्थापनं समभिल-षतस्तस्य बृहत्तरेण भारतदेशेन सह प्रथममिदं कूट-सौहार्दं गूढदुरभिसन्धिको पञ्चशीलसन्धिश्च तदीय-महत्त्वाकाङ्क्षायाः सफलकूटनीतेश्च प्रमुखमङ्गं प्रच्छन्नं कूटचक्रञ्चासीत्। परमस्माभिस्तत् नाव-

धारितम्, तिब्बतराष्ट्रे तदीयसत्तासमर्थनेन च तत्कूटसौहार्दस्य महत्तरं मूल्यं प्रदाय स्वीया राष्ट्र-सीमा स्वयमेवाविचार्य विवादविषयतामानीता। अन्ततो यदा किल सकला सामरिकी योजना सुनियोजिताऽभवत्, तदैकस्मिन् दिने तेन मित्र-म्मन्येन राष्ट्रेण सहसाऽऽक्रम्य विपुलं भारतीयं सीमाप्रदेशं हस्तगतं कृत्वा पूर्वमैत्र्या अभूतपूर्वं मूल्यं प्रत्यावर्तितम्। वयं पुनर्मूढबालक इव रुदन्तो विलपन्तश्चैव स्वात्मनः परितोषं कृतवन्तः।

साम्प्रतं साम्यवादिनो द्वयो राष्ट्रयोः परस्परं स्पर्धा प्रचलति। परं भारतराष्ट्रस्य कृते उभयोरपि दृष्टिः समैव लुब्धा। अन्यदेतद् यदेकं राष्ट्रं सभ्य-जनसम्मतैः प्रकारैः भारतराष्ट्रं प्रभावयितुं प्रयतते। अपरश्च प्रकटशत्रुत्वं समाचरद् अस्माकं राष्ट्रं स्वात्मसात् कर्तुं प्रयतते। भारतविरोधिना प्रति-वेशिना पाकिस्तान-राष्ट्रेन सह सङ्घट्टनं कृत्वा तदद्य अहरहोऽस्माकं राष्ट्रं प्रताडयितुं बद्धपरिकरं वर्तते।

साम्यवादाधिनायकतन्त्रं विश्वस्मिन् प्रतिष्ठा-पयतोः एतयो राष्ट्रयोर्वेतनभोगिनः अवैतनिकाश्च कार्यकरा भारतराष्ट्रद्रोहिणः कतिपये भारतीया अदूरदर्शिनो भौतिकतावतारा अपि अस्माकं राष्ट्रं तयोरधीनं कर्तुं नैकशः प्रयतन्ते। तेष्वपि मार्क्स-वादिनो दक्षिणपन्थीयाः माओवादिभ्यो वाम-पन्थीयेभ्यः प्रस्तरादिष्टका मृद्वीति न्यायस्य विषयाः। इष्टकाकल्पैः तथाकथितभारतीयसाम्य-वादिभिः संवैधानिकीं संसदीय-प्रणालीमनुगृह्यैव स्वीयाभिसन्धि-साधनाय प्रयतितम्। केरल-पश्चिम-वङ्गादिविभिन्नप्रदेशेषु शासने तेषां साम्यवादिनां प्रवेश एवास्य निदर्शनम्। माओवादिनः पुनः 'नक्सलवादी'ति बिरुदं विभूष्य यावन्ति समाज-द्रोहकराणि कार्याणि समाचरन्ति, न तानि विवेक-शीलभारतीयेभ्यः संवृतानीति तत्र विषये किम-धिकजल्पनेन?

अचिरादेव घटनाद्वयेन एतेषां भारतीय-साम्यवादिनामावृतमेतत् स्वरूपं विवेकिनां परीक्ष-काणां दृशोर्विषयतां गतम्। 'कतिपयदिवसेभ्यः पूर्वं लन्दननगरे साम्यवादीय-प्रमुखतम-वामपन्थीय-नेतृवरैः श्री रणदिवेमहोदयैः स्पष्टमेवोक्तं यत् 'साम्य-वादिनः संविधानान्तर्गता भूत्वा भारतीयसंविधानं विशृङ्खलयितुं नाशयितुं च प्रयतन्ते। अस्माकं संसदीयपद्धत्यनुग्रहस्य इदमेवोद्दिष्टम्। कामं कश्चिद् दक्षिणपन्थी वामपन्थी वा स्यात्, उभयोरपि साम्यवादिनोः एकैव ध्येयमि'ति। विस्मयावह-मेतत् यद् भारते प्रादेशिक-शासनपदयोः प्रतिष्ठितैः साम्यवादिनेतृभी रणदिवे महाभागस्यास्य वक्त-व्यस्य कथमपि प्रतिषेधमकृत्वा 'अप्रतिषिद्धमनुमतं भवती'ति परिभाषा चरितार्था क्रियते। केरल-मुख्यमन्त्रिभिः श्रीनम्बूदरीपादैः श्रीगोपालन्-संसत्सदस्यैः साम्यवादाचार्यैस्तुव क्तव्यमिदमनूदित-मपि। साम्प्रतं साम्यवादशासन - शासितायाः पश्चिमवङ्गप्रदेशीयजनताया जीवनं यावदसुरक्षित-मास्ते, तत्तथा कदापि नासीत्। अहरहो नैकानि विस्फोटकानि कार्याणि जायन्ते। लोकतन्त्रस्य केन्द्रबिन्दुभूतानि वृत्रपत्राण्यपि समाक्रम्यन्ते। घेराव-प्रभृतीः दुष्प्रथाः निष्कण्टकं प्रसरन्ति, प्रसरि-ष्यन्ति च। पश्चिमवङ्गगृहमन्त्रिणा उपमुख्यमन्त्रिणा श्री ज्योतिवसु महोदयेनापि विवशतोऽचिरादेवोक्तं यत् 'समाजविघातक-कार्यकर्तॄणां नक्सलवादिनां सर्वथा दण्डनं भवेत्, यद्यपि स्वसिद्धान्तप्रचाराय तेषां स्वातन्त्र्यं सुरक्षितमेव।' कोऽस्यार्थः? स्पष्ट-मेतद् यदद्यतनीयं पश्चिमवङ्गप्रदेशशासनं शासना-न्तर्गतं सत् संविधान-विशकलनायैव साम्यवादस्य सुदृढाधारपीठनिर्मित्यै चैव प्रयतते।

अपरा घटना साम्यवादिसङ्घटनाधिकृते केरलराज्ये मुसलिमलीगपन्थीयानां तोषाय मालापुरनामकं यावनबहुलं नवं मण्डलं परिकल्प्य देशे पुनः साम्प्रदायिक-वर्गकलहस्य बीजावापो नाम। साम्यवादिराज्यशासकैरुद्घोष्यते त्विदमेव यदात्मनिर्भरता-शासनीयसुविधादृष्ट्या मण्डलमिदं नवं सङ्घट्यते। परं तथ्यं पुनरन्यदेव वर्तते। तत्र राज्ये साम्यवादिनां शासनं मुसलिमलीगीयप्रतिनिधीनां बलेनैव सुरक्षितमास्ते। लीगीयाश्च हिन्दूनामुपरि तत्सम्प्रदायस्य ऐतिहासिकसमुत्पीडनस्य केन्द्रभूतं पूर्वं कथमपि साकारतयाऽपरिणतं मोपलिस्थानं यथाकथञ्चन मूर्तिमन्तं विधाय हिन्दूनामवमाननाय स्वीयसङ्घटनं दृढीकृत्य भविष्यति मोपलिस्थाननामकस्य स्वतन्त्रप्रदेशस्या याचर्थनाप्रस्तावाय चैव मालापुरस्य नवमण्डलत्वेन स्थापनाग्रहं चिरात् कुर्वन्त आसन्। साम्यवादिभिश्च एकेनैवोपायेन 'आम्राश्च सिक्ताः पितरश्च तृप्ताः' इति भणितिश्चरितार्थतां नीता। वर्गसङ्घर्षः किल तेषां स्वार्थसाधनस्य परममस्त्रम्। मालापुरमण्डलसङ्घट्टनेन एकतो यत्र स्वशासनं दृढीकर्तॄणां लीगीयानां परितोषो भवति, तत्रैव अपरतो वर्गसङ्घर्षस्य सुदृढं बीजावापो जायते, इति विचार्यैव इष्टकाकल्पैः साम्यवादिभिरेवं संविधानान्तर्गतः संविधानविघटनस्य समुपक्रमः कृतः। नवसङ्घटितस्यास्य मालापुरमण्डलस्य हिन्दूजनसमुत्पीडकः संक्षिप्त इतिहासोऽत्रैव अङ्के अन्यत्र प्रकाशितः। तेनैव लीगीयानां दुरभिसन्धिः स्फुटीभवति। स्वातन्त्र्यवीरैः स्वर्गीयैः श्री सावरकर महाभागैस्तु 'मोपलिस्तान'-नामिका विस्तृता सुप्रसिद्धा आख्यायिकैव लिखिता वर्तते। तेनाप्येतद् रहस्यमनावृतं जायते। मालापुर-मण्डलस्य एतादृशं विकृतं रूपमनुलक्ष्यैव भारतीयजनसङ्घादि-प्रमुख संस्थाभिः अखिलभारततस्तत्र सम्प्रति विरोधे सत्याग्रहः प्रचालितो वर्तते। केन्द्रशासनस्य कर्तव्यं वर्तते यदित्थं देशविघटकतत्त्वानां सुदृढं निरोधः करणीय इति।

यत्किमप्यस्तु, इदं तु विस्तृतेनानेन विवरणेन स्फुटं यद् भारतीयाः साम्यवादिनः कामं दक्षिणपन्थीयाः, वामपन्थीयाः, नक्सलवादिनः केऽपि स्युः, सर्वे ज्ञानतोऽज्ञानतो वा स्वतन्त्रमिदं भारतराष्ट्रं वैदेशिक-साम्यवादिनां हस्तेषु समर्पयितुमेव सर्वतः सचेष्टा वर्तन्ते। दौर्भाग्यात् देशस्य पूर्व-दक्षिणसीमाप्रदेशयोस्तेषामेव शासनं प्रचलति। मध्यतने शिष्टेषु च प्रदेशेऽपि ते सक्रियाः। सत्येवं भारतस्य स्वातन्त्र्यं भगवानेव रक्षत्वित्येव वक्तव्यं भवति। यतो हि अस्माकं केन्द्रीयं शासनं शासकीयं दलञ्च विषयेऽत्र मूकदर्शक इव परिदृश्यते। बैङ्गलोर-परिषदि कांग्रेससङ्घटनेन विषयेऽत्र विचारकरणमुपाययोजनञ्च परमावश्यकं न ध्यातमिति महतो विस्मयस्य विषयः। तत्र राष्ट्रीयसुरक्षा-हितचिन्तनं तु दूरे एवास्ताम्, दलीयहितचिन्तनमपि नाभवत्। केवलं सत्तालोलुपानां व्यक्तिवादस्य प्रतिष्ठापने एव सर्वोऽभिक्रमो दृष्टिपथं गतस्तटस्थानाम्। किमेतत् राष्ट्रनायकानां शोभते? नैतावदेव, एतद्विपरीतमस्माकं राष्ट्रनायकानामयं पारम्परीणः स्वभावो यत्कोऽपि वर्गो यदा उग्रं किमपि नग्नताण्डवं समाचरति, तदैते तस्य शासनमकृत्वा तन्मनस्तोषकमेव कार्यं कर्तुं प्रवर्तन्ते। यावनतुष्टीकरण-प्रकारस्तस्य सुस्पष्ट एव। इदानीं साम्यवादि-सन्तुष्टीकरणमपि तथैव तैः समाचर्यते। समाजवादी-समाजरचनाघोषो निधीनां ( बैंकानां ) तूर्णं राष्ट्रीकरणादिकमस्यैव निदर्शनम्। किन्तु ते विस्मरन्ति यत् यथा तेषां यावनसन्तुष्टीकरणफलं देशविभाजनरूपेण भारतेन प्राप्तं तथैव साम्यवादिसन्तुष्टीकरणस्यापि फलं

परिणमेत्। यूरोपीयेषु नैकेषु देशेष्वेवमेव निदर्शनं तदीये इतिहासे दृश्यते। तथाकथित-समाजवादि-विचारधारायाः सुदृढायां पृष्ठभूमौ साम्यवादसस्य-सम्पत्तिस्तैः सारल्येन साधिता यूरोपीयदेशेषु। अन्ततस्तानि सर्वाणि राष्ट्राणि साम्यवादस्य करालदंष्ट्रायामेव समाविष्टानि। तत्तद्देशस्य मौलिकं स्वातन्त्र्यञ्चापहारितमभवत्।

अत इदमावश्यकं यत्सर्वैर्भारतीयैः प्रजाजनैः भारतशासनेन च सर्वमिदं विचार्य तथा क्रमोऽनुसरणीयो यथा देशस्य स्वातन्त्र्यं सुरक्षितं स्यात्। तस्यैकतायाः कथमपि भङ्गो न भवेत्। अस्माकं राष्ट्रं धनधान्य-मानसम्मानादिदृष्ट्या सर्वथा पूरितं सद् विश्वस्मिन् आदर्शराष्ट्ररूपेण जीवनं यापयत् विश्वशान्तिस्थापने महत्त्वपूर्णं भागं निर्वहेत्। नैतत् कथमपि असम्भवं कठिनं वा। आवश्यकता वर्तते यदस्माभिः परकीयप्रवाहपतितता-स्वभावं परित्यज्य स्वीयानां भारतीयधर्म-कर्म-सभ्यता-संस्कृतीतिवृत्तानां सर्वथाऽनुकरणं विधेयम्। भारतीया प्राचीना राजनीतिः मूलतो विश्वकल्याण-कामनामधिष्ठायैव प्रवृत्ता वर्तते। सर्वे स्व-स्व-कर्तव्यानुरूपं कार्यं कुर्वन्तु। यदैव भारतं परानुकरणं परित्यज्य भारतीयराजनीतिमेव समाश्रित्य देशसञ्चालनं करिष्यति, तदैवात्र सुराज्यं स्थापितं भवेत्, राष्ट्रियासन्तोषाभावेन वादान्तरस्य च प्रसर एव न स्यात्।

भारतीया राजनीतिः धर्म-संस्कृति-नियन्त्रिता वर्तते। तत्र अधिकारापेक्षया कर्तव्ये विशेषो भरः। प्राणिमात्रस्य सुखं शाश्वतिकी शान्तिश्च तस्याः परमुद्दिष्टम्। स्व-स्वमर्यादानुसारं कर्तव्यपालनेनैव शाश्वतिकी सिद्धिः। **परोपकारः पुण्याय पापाय परपीडनम्** इति हि तस्य ध्येयवाक्यम्। जगदत्रैव भूमण्डले न समाप्यते। विशाल-ब्रह्माण्डापेक्षया अत्यल्पतममेतत् मण्डलम्। यथा कर्म तथा फलमिति हि सिद्धान्तः। अन्ततः सर्वे एव अमृतस्य परमात्मनः पुत्राः। सर्वेषां सहजं भ्रातृत्वमैक्यरूप्यञ्च। **आत्मवत् सर्वभूतेषु यः पश्यति स पश्यति** इति हि तदीय आदेशः। एतादृश्याः अध्यात्मचैतन्याधिष्ठिताया राजनीतेः व्यापक-प्रचारेण अनुकरणेनैव च साम्प्रतिकस्य तथाकथित-साम्यवादासुरस्य नियन्त्रणं सम्भवि। अतो भारतशासनस्य परं कर्तव्यं यदस्याः चैतन्याधिष्ठिताया आध्यात्मिकताया व्यापकं प्रसारं कुर्यात्। एतदन्तरा भौतिकभूताविष्टस्य साम्यवादस्य नियन्त्रणं सर्वथा असम्भवि। परं स्वातन्त्र्यं तु आत्मस्वातन्त्र्ये एव प्रतितिष्ठति। तथाकथित-साम्यवादशासने तस्य लेशोऽपि दुर्लभः। सर्वथाऽशान्तिः सर्वनाशश्चैव तस्य फलश्रुतिः। चिरकालतः सभ्यतायाः शिखरे समारूढस्य भारत-राष्ट्रस्य कृतेऽद्य परीक्षावसरो यदिदं स्वतन्त्रं राष्ट्रं स्वीयप्राचीनप्रतिष्ठानुरूपं पूर्णस्वातन्त्र्यपदे विराजितं भवेत् उत अर्जितां भौगोलिकीं स्वतन्त्रतामपि अपहाय चिराय भौतिकासुरकल्पस्य तथाकथित-साम्यवादस्य दंष्ट्रायां महानिद्रितं भवेत्। अत्र भगवानेव राष्ट्रं राष्ट्रकर्णधारान् प्रजाजनांश्च सद्बुद्ध्या संयुनक्तु, येन सर्वथा स्वतन्त्रं सदेतत् विश्वस्मिन् शान्ति-सुव्यवस्था-स्थापनाय प्रभवेदित्येव कामयामहे।

●

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

वस्तुतस्तु—कान्ताद्यवच्छिन्न-चैतन्यस्य परिच्छिन्नत्वेन तद्विषयासु रतिसु परिपूर्णस्य रसस्यानभिव्यक्त्या तत्र क्षुद्ररसत्वमेव। भगवद्रतौ तु परिपूर्णस्य अनवच्छिन्नपरमानन्दस्य अभिव्यक्त्या तत्रैव मुख्यरसत्वं युक्तम्। खद्योतेभ्य इव क्षुद्रकान्तादिरसेभ्यो भगवद्रसस्तु प्रचण्डमार्तण्ड इव महत्तमः।

किञ्च—साक्षात् सुखविरोधिनां क्रोध-शोक-भयादीनामपि रसत्वमनुभवबलादभ्युपेयते, ततोऽनुभवसिद्धे ततः सहस्रगुणितरसे कुतस्तदपलापसम्भवः ? तदुक्तं भक्तिरसायने—

परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः।
खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा॥
क्रोधशोकभयादीनां साक्षात्सुखविरोधिनाम्।
रसत्वमप्यभ्युपगतं तथाऽनुभवमात्रतः॥
इहाऽनुभवसिद्धोऽपि सहस्रगुणितो रसः।
जडेनैव त्वया कस्मादकस्मादपलप्यते॥

विशिष्टाद्वैतिनस्तु—वेद उपास्ते इत्यादिश्रुत्यनुरोधेन उपासनावृत्तिरूपामेव भक्तिमिच्छन्ति। तस्या एव ध्रुवास्मृतित्वमपि आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः इति श्रुतौ च ध्रुवायाः स्मृतेरपवर्गोपायताश्रवणात्।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥

इति श्रुत्यन्तरैकवाक्यतया दर्शनसमानाकारत्वञ्च तस्या वदन्ति।

द्वैताद्वैतिनां रीत्या भक्तेरुपासनात्मकत्वेऽपि भगवद्धामविग्रहादिवत् अप्राकृतत्वमेव, प्राकृताप्राकृतभेदेनाचेतनद्वैविध्याङ्गीकारात्। स्नेहस्निग्धचित्तवृत्तितादात्म्येन अप्राकृतदिव्यवपुषस्तस्याः प्रादुर्भावेन शास्त्रनिर्दिष्टोपायानुष्ठानसार्थक्यम्।

श्रीकण्ठाद्याः शैवाः दत्ताद्याः शाक्ताश्च सौरा गाणपत्याः सर्वेऽपि भक्तिमाहात्म्यं वर्णयन्ति।

यद्यपि सर्वेषामेव औपनिषदानां जीवात्मनः सच्चिदानन्दात्मकब्रह्मणोंऽशत्वेन चिदानन्दात्मकत्वेन रसरूपत्वं संभवति, भगवद्रूपस्य आलम्बनविभावस्यापि परमानन्दरूपत्वेन भगवदालम्बनके रसे रसत्वं संपुष्यते, परन्तु कान्तालम्बनके तु रसे कान्तादीनां केषाञ्चिद्रीत्या प्रकृतिपरमाण्वाद्यचित्कार्यत्वेन तत्र चिदानन्दाभावात् स्वतो रसाभावेन सांख्यवत् सुखदुःखमोहात्मकस्य कान्तादेः सुखात्मनाऽभिव्यक्त्या रसत्वपोषो मन्तव्यः।

अद्वैतिरीत्या तु परमानन्दकार्यत्वेन सर्वस्य मायावरणाद्यपनयेन कान्ताद्यालम्बनयोगेऽपि रसाभिव्यक्तिः नानुपपन्ना।

शुद्धाद्वैतरीत्याऽपि संसारस्य मायिकत्वेऽपि प्रपञ्चस्य ब्रह्माकार्यत्वे ब्रह्मात्मकतैव। लोकोत्तरकाव्यव्यापारमहिम्ना भगवद्विषयकरतिमद्भोग्याद् भजनादिश्रोतृभेदतिरोधानेन श्रोतृषु रसाभिव्यक्तिः सूपपन्ना। लोकार्थप्रपञ्चसृष्टौ सदंशपरिणामात्मकभोग्यवर्गे चिदंशपरिणामात्मक-भोक्तृवर्गे यद्यपि क्रमेण चिदानन्दयोः आनन्दस्य च तिरोधानं भवति। अत एव जडस्य प्रकाशः सेन्द्रियमनोवृत्त्यादिसापेक्षो भवति। रजोव्यापारेण तमोऽपनयने सति सत्त्वमहिम्ना वस्तुप्रकाशः, भगवत्प्रकाशस्तु भगवन्महिम्नैवेत्यन्यत्।

(क्रमशः)

# वैदिकाऽवैदिक-दर्शन-मीमांसा

—श्री जगन्नाथ श्रीधरशास्त्री पदे—

( ९ )

देहात्मवादिनो भोगापवर्गवादिनो वा दुष्कृतिनः। आत्मैकत्ववादिनो धर्मवादिनो वा सुकृतिनः। विभागोऽयं गीताशास्त्रे उक्तः। तथा हि—

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः॥**
( ७.१५ )

आसुरं भावमाश्रिताः देहात्मवादिनो भोगवादिनो वा।

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।**

इति गीताशास्त्रे षोडशाध्याये ( ७ सप्तमश्लोके ) सविस्तरमासुरी सम्पदुक्ता, तामाश्रिताः। ते इदं सर्वं दृश्यं जगदेव विषयीभूतं भोगार्थं प्रपद्यन्ते, नात्मानम्। त्रिगुणात्मिकाया महामायाया उपासका एते। तथा हि—**मायेत्यसुराः** ( शत० ब्रा० १०.५.२.२० ) इति परिदृश्यमानायास्त्रिगुणात्मिकाया मायाया एवोपासकत्वमसुराणाम्।

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥**
( गी० ७.१३ )

इत्येते मायामोहितत्वात् मायां प्रपद्यन्ते, नात्मानम्। प्रकृतेश्च भेदा अनन्ता भवन्तीति उपासनाप्रकाराश्चानन्ता असुराणाम्। ते च सर्वे तन्त्रशास्त्रेषु पुराणेषु चोपवर्णिताः। प्रकृत्युपासका मूर्त्युपासका वा एते। प्रकृतिवाद एव मूर्तीनामानन्त्यम्, उपासनाप्रकाराणां चानन्त्यम्।

एते हि तमःप्रधानत्वात् **सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु** इति ( ६.९ ) श्लोके १. सत्त्वप्रधाना **सुहृच्छब्देन**, २. रजःप्रधाना मित्रशब्देन, ३. तमःप्रधाना अरिशब्देन, ४. त्रिगुणात्मका **उदासीन**शब्देन, ५. सत्त्वतमःप्रधाना **मध्यस्थ**शब्देन, ६. रजस्तमःप्रधाना **द्वेष्य**शब्देन, ७. सत्त्वरजःप्रधाना बन्धुशब्देन इत्येवं ये सप्त प्रकृतिभेदा उक्तास्तत्रैते अरिस्वभावाः सर्वेषामरयो भवन्ति।

अथवा—आरोहक्रमेण दुष्कृतिनां प्रथमः प्रकारः। अवरोहक्रमेण चान्तिमः। एते विषयिणः। मायया त्रैगुण्यात्मिकया।

**दैवी ह्येषा गुणमयी मम माया दुरत्यया।**
( गी० ७.१४ )

त्रैगुण्यं देहस्याऽसाधारणो धर्मः। मायया अपहृतं सन्मुषितं ज्ञाने येषां ते।

**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च।**

( गी० ७.२० ) इत्युक्तेः। ज्ञाने क्षेत्रज्ञरूपस्य आत्मनः प्रकाशरूपस्य धर्मः। **अमानित्वमदम्भित्वम्** ( गी० १४.७ ) इत्यारभ्य—

**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा।**

( गी० १३.११ ) इत्यन्तमुक्तः। अज्ञानं मानित्वं दाम्भित्वमित्यादयः क्षेत्रधर्माः। देहात्मवादिनोऽसुरा विज्ञानवन्तो विपरीतज्ञानयुक्ता अज्ञानिन इति यावत्। नञोऽत्र विरुद्धार्थता। अत्र मायया दृश्येन विश्वेन देहिनोऽन्नमयकोशस्था देहात्मवादिन इति यावत्। आरोहणक्रमेणायं द्वितीयः प्रकारः।

नराधमाः, नराणां मध्ये अधमाः निकृष्टाः, तमःप्रधानत्वात् कामहताः। विषय-विषयाणि

शिखण्डिनस्ते ! —श्रीखिस्ते वटुकनाथ शास्त्रिणः

१. उन्मज्जतीव गगनान्नवकज्जलाभा
सेना घनाघनमयी विषमायुधस्य ।
बालां मृणालमृदुलामुपतापयन्तः
केकां किरन्ति परितश्च शिखण्डिनस्ते ॥

२. ये सज्जनान् व्यथयितुं विहितावतारा
भारा भुवः कलहयोजनमात्रसाराः ।
ये भोगिभोजनविदः परकार्यसिद्धि-
व्यापारिता भुवि चरन्ति शिखण्डिनस्ते ॥

येषामिन्द्रियाणि । येषां मन इन्द्रियाणां पश्चादेव धावति ते इन्द्रियचैतन्यवादिनो नराधमाः प्राणमयकोशस्थाः प्राणिन इति यावत् । आरोहणक्रमेणायं तृतीयः प्रकारः ।

मूढाः बुद्धिहीनाः । तमःप्रधानाः मोहप्रधानाः कामान्धा इति यावत् ।

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।**

इति ( गी० ३.४० ) बुद्धिपर्यन्तं कामस्याधिष्ठानात् विषयिणो विषयमापन्नाः ।

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।**
**सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप ॥**

इति ( गी० ७.२७ ) सम्मोहेन मायापर्यन्तान् विषयानेव प्रपद्यन्ते । तेषामिन्द्रियाणि मनो बुद्धिश्च विषयैराक्रान्ता भवतीति नेदिष्ठस्याप्यात्मनो बोधो नास्ति । अत एव ते मूढा मनोमयकोशस्था मनश्चैतन्यवादिनो मनीषिण इति यावत् । आरोहणक्रमेणायं चतुर्थप्रकारः ।

एते चत्वारोऽपि दुष्कृतिनः पापकारिणः ।

**प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः ।** (न्या० सू० १.१.१७)
**प्रवर्तनालक्षणा दोषाः ।** ( १.१.१८ )
**दोषा रागद्वेषमोहाः ।** ( न्या० भा० १.१.१८ )
**प्रवृत्तिदोषजनितोऽर्थः फलम् ।** ( १.१.१९ )

इति न्यायवित्समयानुसारेण सर्वा प्रवृत्तिः सदोषैव भवति । क्रियायाः सदोषत्वात् सा दुष्कृतिरित्येवोच्यते । मिथ्याज्ञानापायाभावे देहात्मवादिनां क्रिया दुष्कृतिरेव । अत एव ते दुष्कृतिन इत्यभिधीयन्ते। तेषां क्रियाफलं कर्तृगामि, तच्चार्थरूपम् । वस्तुतस्तु क्रियाफलं कर्मगामि । तच्च धर्मरूपम् अर्थरूपं फलमेभिस्तु कामस्यैव लभ्यते, न क्रियायाः । नष्टे कामे फलमर्थरूपं नास्ति ।

एते सर्वे । न माम् अन्तर्यामिणं परमेश्वरं सर्वभूतस्थितं ( गी० ६.३१ ), **पादोऽस्य विश्वभूतानि** ( मा० सं० ३१.३ ) इति परब्रह्मणः पादस्वरूपत्वम् ! प्रपद्यन्ते । कामहतत्वात् । भगवानप्यत्र भक्तानुग्रहार्थं परिदेवयते ।

आत्मैकत्ववादिनः सुकृतिनः । तथा हि—

**चतुर्विधा भजन्ते मां नराः सुकृतिनोऽर्जुन ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥**
( गी० ७.१६ )

चतुर्विधाः चतुष्प्रकाराः । आर्तः, जिज्ञासुः, अर्थार्थी ज्ञानी चेति । भजन्ते सेवन्ते । मनसा वाचा क्रियया च । मनसा एकमेवाद्वितीयं ब्रह्म धर्मीति चिन्तयन्ति । वाचा एकत्वमद्वितीयत्वं च प्रस्थापयन्ति । द्वैतं च समूलमुन्मूलयन्ति । क्रियया एकत्वप्रस्था-

पदार्थं न ममेति त्यागं कुर्वन्ति, न भोगं ममेति भुञ्जन्ति। क्रियाफलं कर्मगामि, स च धर्म इति प्रस्थापयन्ति। क्रियाफलं कर्तृगामि, स चार्थः काम-फलं न क्रियाफलमिति तस्य त्यागं प्रतिपादयन्ति। कर्ता केवलं निमित्तकारणमित्यन्यथासिद्धः। अन्यथा-सिद्धत्वात् फलं प्रति तस्य हेतुत्वं नास्ति। तथा-न्यथासिद्धत्वात् कर्तृत्वमपि नास्ति। कर्तृत्व-मेकस्यैव। अथवा समवायिकारणा-ऽसमवायिकारण-निमित्तकारणानामेकीभूतानामेव। मां सर्वभूत-स्थितमेकमद्वितीयं चित्स्वरूपमीश्वरम्। नराः जनाः सुकृतिनः पुण्यकर्माणः। तथा चोक्तं गीतासु (७.२८)—

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम्।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः॥**

येषां तु। अन्तगतं समाप्तप्रायं क्षीणम्। पापं कामः काम्यं जगदिति यावत्। तथा चोक्तं गीताशास्त्रे—

**काम एष क्रोध एष रजोगुणसमुद्भवः।**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्॥**
(३.३७)

**पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्।**
(३.४१)

**ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते।**
**सङ्गात् सञ्जायते कामः कामात् क्रोधोऽभिजायते॥**
(२.६२)

कामश्च बुद्धिपर्यन्तमेव अवस्थितः, विषय-सम्बद्धत्वात्। विषया अपि बुद्धिपर्यन्तमेव अव-स्थिताः। तथा चोक्तं गीताशास्त्रे (३.४२)—

**इन्द्रियाणि मनोबुद्धिरस्याधिष्ठानमुच्यते।**
**मनसस्तु पराबुद्धिर्यो बुद्धेः परतस्तु सः॥**

जनानां लोकानाम्। पुण्यकर्मणां नित्यं नैमित्तिकं चैव कुर्वताम्। काम्यं निषिद्धं च कर्म संन्यस्यताम्। कर्मगामि क्रियाफलं न कर्तृगामीति सिद्धान्तयताम्। धर्मः फलं नार्थ इत्यभ्युपगच्छताम्। कर्तृगामि क्रियाफलं कामस्यैवेति काममेव न क्रियां परि-त्यजताम्। ते। द्वन्द्वमोहनिर्मुक्ताः। तथा चोक्तम्—

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत।**
**सर्वभूतानि सम्मोहं सर्गे यान्ति परन्तप॥**
(गीता ७.२७)

इच्छाद्वेषमोहैर्निर्मुक्ता गुणत्रयातीता इति यावत्। भजन्ते सेवन्ते। मां परमात्मानम्। दृढव्रताः एकमेवाद्वितीयं ब्रह्मेति परमार्थतत्त्वं नान्यथेति निश्चितविज्ञानाः। एकत्वाद्वितीयत्व-प्रस्थापकाः। एकत्वमेव दृढं व्रतं येषां ते। एकत्विनः। तस्मादत्र सुकृतिनो गुणातीताः। तेषा-मेव आत्मख्यातिः। तथा च योगसूत्रम्—

**तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्।** (१.१६)

अत एव गुणातीता मां भजन्ते। अर्जुन। आत्म-ज्ञाने जाते तत्रैव अन्तर्यामित्वेन परमात्मज्ञानमिति परमात्मभजनमात्मज्ञानमेव।

आर्तो दुःखाभिभूतो विषया एव दुःखहेतव इति इहामुत्र भोगविरागसम्पन्नः कामाभावाद् गुणातीतो नित्यनित्यावस्तुविवेकज्ञश्च। नित्यानित्य-वस्तुविवेकश्च त्रयोदशाध्याये, गुणवैतृष्ण्यं चतुर्दशा-ध्याये, वशीकारसंज्ञावैराग्यं पञ्चदशाध्याये गीतायामुक्तम्। आत्मैकत्वविद्या चावरोहक्रमेण परिसमापिता। तत्रैव निस्त्रैगुण्यप्रतिपादनपर-गुह्यतमशास्त्रस्य समाप्तिः। अन्तिममध्यायत्रयं त्रैगुण्यविषयं देहात्मवादिनां कृते। एवम् आर्तो नाम आत्मज्ञः। विज्ञानमयकोशस्थो बुद्धिचैतन्य-वादी बुद्धिमान् इति यावत्। अत एवोक्तं भगवद्गीतासु (१५.२०)—

**एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत।**
इति।

(क्रमशः)

# मानस-भारती--देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए० साहित्याचार्यः—

(ग) श्रुतिर्निरञ्जनं परं समास्थितं जनिं विना
रजोविहीनमव्ययं प्रभुं यमत्र गायति।
यमाप्नुवन्त्यथर्षयः कृपानिधिः स आगतो
विमोहयत्यसौ जडं जगच्च कान्तिपुञ्जधृक्।
मनोऽम्बुजन्मनो मम सदङ्गकान्त्यलेः सदा
समाप्नुवन्त्यनेकशो रतिप्रियस्य रम्यताम् ॥३॥

(घ) अगम्यगम्यरूपधृक् सुनिर्मलस्वभावकः
समोऽसमः सुशीतलो रमानिवास ईश्वरः।
प्रयत्य योगिनो मनो नियम्य सेन्द्रियं सदा
यमाप्नुवन्ति सन्ततं स्वदासहस्तगश्च यः।
भवापहास्ति यस्य कीर्तिरुत्तमातिपावनी
नित्यमेष राघवो हृदि स्थितो भवेन्मम ॥४॥

अखण्डभक्तिं प्रभुतः प्रयाच्य
गृध्रो हरेर्धाम ययौ तदानीम्।
यथोचितं मानवमूर्तिरीश
ऊर्ध्वाः क्रियास्तस्य चकार रामः ॥३२॥

रामोऽतिमृदुचित्तोऽसौ दीनेभ्यः करुणाकरः।
हेतुं विना कृपालुश्च सत्यमेव ततः प्रभुः।
मांसाशिनीचगृध्राय योगिकाम्यां ददौ गतिम् ॥
शिवः शिवां वक्ति देवि नरास्ते दुर्भगा मताः।
भवन्ति विषयासक्ता ये सन्त्यज्य हरिं परम् ॥
ततस्तौ भ्रातरौ सीतां मार्गमाणौ प्रजग्मतुः।
लताकुलं वृक्षपूर्णं पश्यन्तौ निबिडं वनम् ॥
नाना खगा मृगास्तत्र वने सिंहाश्च हस्तिनः।
ऊचे रामहतो मार्गे कबन्धः शापसङ्कथाम् ॥

देवं दृष्ट्वा गतं पापं दुर्वासा मां शशाप यत्।
रामस्तमूचे गन्धर्वं विप्रद्विड् रोचते न मे॥
छलं विहायाचरणेन वाचा
हृदा च विप्राननुसेवते यः।
मया सह ब्रह्मशिवादिदेवा
अनारतं तस्य वशे भवन्ति ॥३३॥

विप्रः शपंस्ताडयन् वा श्रावयन् परुषं वचः।
हीनः शीलगुणाभ्यां वा पूज्य इत्थं सतां मतम्॥
शूद्रस्तु ज्ञाननिपुणो गुणयुक्तोऽपि नार्च्यते।
इत्थं रामो निजं धर्मं बोधयामास तं ततः॥
स्वपादाब्जप्रीतियुक्तः स रामायातिरुच्यत।
रामपादाब्जमानम्य ययौ स्वः स गतिं गतः॥
उदारेशो गतिं दत्वा शबर्याः स्थानमन्वगात्।
गृहागतं तु शबरी विलोक्येशमतूतुषत्॥
सा मातङ्गमुनेर्वाक्यं स्मृत्वाऽतुष्यच्चिरं हृदि।
अरविन्दाक्षयो - दीर्घभुजयोर्वनमालिनोः॥
जटामुकुटयोर्भ्रात्रोः श्यामगौर-सवर्णयोः।
पपात शबरी भावात् तयोः पादाम्बुजन्मनोः॥
अवाङ्मुखी प्रेममग्ना मुहुः पादाब्जयोर्नता।
प्रक्षाल्य सादरं पादौ सा तयोरुभयोस्तदा।
भ्रातरौ ललिते पश्चादुपावेशयदासने॥

कन्दानि मूलानि फलानि चासौ
रसान्वितान्यार्पयदीश्वराय।
सौमित्रियुक्तो रघुवंशदीपो
मुहुः प्रशंसन्नुदरीचकार ॥३४॥

(क्रमशः)

# महाकवेः श्रीहर्षस्य काल-निर्णयः

—डॉ० श्रीगजाननशास्त्री मुसलगांवकरः—

*[ मीमांसा-प्राध्यापकः—संस्कृतमहाविद्यालयस्य, हि० वि० वि०, वाराणसी ]*

[ महापण्डिते श्रीहर्षे दार्शनिक-कवित्वयोरनितरसाधारणभक्तियोगस्य च सङ्गमदर्शनेन तीर्थराजपदवी निर्विचिकित्सं समुल्लसति। तदीयं जीवनवृत्तं तु किंवदन्त्यनुसारं सर्वैर्विद्वद्भिर्ज्ञायत एव। तत्कालनिर्णयविषये पुनर्महान् विसंवादो दृश्यते। नैकेषां विदुषामत्र विषये मतान्युद्धृत्य मान्यैः शास्त्रिवर्यैः विविधप्रमाणैः नवम-दशमशताब्द्योरान्तरालिकः काल एव निर्धारितोऽत्र पूर्वमतानां खण्डनपुरस्सरम्। समालोचनव्यसनिनां विदुषां कृतेऽयं प्रयासो नूनं महत्त्वपूर्णो भवेदिति।
—सम्पादकः ]

बहुभिर्बहुधा प्रोक्तः कालोऽस्यापि महाकवेः।
श्रीश्रीहर्षस्य विमतो मया निर्धार्यतेऽधुना॥

कवितार्किक - चक्रचूडामणेः श्रीहर्षस्य स्थिति-कालनिर्णये बहूनां प्राच्यपाश्चात्यविदुषां विसंवादो दृश्यते। लेखेऽत्र तं समासतः प्रदर्श्य निःसन्दिग्ध-प्रमाणपरिप्लुतविचारेण स्वसम्मतस्तदीयस्थिति-कालनिर्णयः प्रकाश्यते, यत्र किल पण्डितप्रवरस्य श्री काशीनाथ तैलङ्गमहोदयस्य सम्मतिरपि पोषिका भवेत्।

पूर्वं तावत्स्वमतप्रतिकूलविचारचणानां विदुषां स्वर्गीय-महामहोपाध्याय श्री शिवदत्त महोदयानां तथा डॉ० बूलर-श्री बाबू रामदास सेन-साहित्या-चार्य-सीताराम जयराम जोशी-श्री बलदेवोपाध्याय-श्री चन्द्रशेखर पाण्डेय-भोलानाथ व्यास प्रभृतीनां परस्परमैकमत्येन तन्मतमुपन्यस्यते। तन्मतपोषिका-स्तत्प्रदर्शिता युक्तय एते—

"सुप्रसिद्धमेवैतद् यदेष कान्यकुब्जेश्वराश्रित आसीदिति नैषधीयचरितस्य समाप्तिश्लोकेन गम्यते। कथमन्यथा तस्मात् ताम्बूलद्वयस्याऽऽसनस्य च लाभो विद्वत्कुलचूडामणेरस्य श्रीहर्षस्य परम-वैदुष्यप्रख्यापन-सम्मानादिहेतुतया निबन्धनमर्हेत्। तथा च—

ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वराद्
यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम्॥

कान्यकुब्जेश्वरो[1] जयन्तचन्द्रो ( १२४३ ) वैक्रमीय - त्रिचत्वारिंशाधिकद्वादशशतमिते वर्षे ( A. D. 1187 ) अभूदिति तत्प्रदत्तग्रामस्य दान-पत्रानुसारेण निश्चीयते। अयञ्च अनितरसाधारण-स्तदानीन्तनो महाराजो वाराणस्या अधिपतिरप्या-सीत्। इत्थञ्च जयन्तचन्द्रस्य ख्रिस्तद्वादशशतके स्थितिनिश्चयात् नैषधीयचरितकर्तुः श्रीहर्षस्यापि तदैव स्थितिर्निश्चिता भवति। अत एव जयन्त-चन्द्रपितुः विजयचन्द्रस्य वर्णनात्मकमेव 'तस्य श्री-विजयप्रशस्तिरचनातातस्य नव्ये महा'[2], 'गौडो-र्वीशकुलप्रशस्तिभणितिभ्रातर्ययं तन्महा'[3] इत्यादि—'विजयप्रशस्ति'नामकं 'गौडोर्वीशकुलप्रशस्ति'नामकं काव्यद्वयञ्च तेन निरमायि। तदानीन्तनः कोऽन्यो गौडोर्वीशकुलप्रदीपो भवेदिति फलतो जयन्तचन्द्र-पितृवर्णनात्मकमेव तत्काव्यम्। तेन च सिद्धमेतस्य संख्यावत्सार्वभौमस्य तदानीन्तनत्वम्।

१३४८ ख्रिस्ताब्दे राजशेखरेण स्वरचिते

---

१. प्राचीन लेखमाला, ले० २३।
२. स ५।१३८, पृ० १०६ नै० नि० प्रे० मुं०।
३. स ८।११०, पृ० १६७ नै० नि० प्रे० मुं०।

प्रबन्धकोषेऽपि 'श्रीहर्षो जयन्तचन्द्र-सभायाः सभास्तार' इत्युदलेखि । तेनापि स ख्रिस्तद्वादशशताब्द्यन्तिमभागे बभूवेति पूर्वोक्त एवार्थो दृढीक्रियते ।

नैषधचरितस्य व्याख्या[1] अहमदाबादसमीपे ढोलका-ग्रामवास्तव्येन चाण्डुपण्डित-नाम्ना केनचित् विदुषा १३५३ संवत्सरे ( A.D. 1296 ) निर्मिता उपलभ्यते । तस्याः समाप्तौ लिखितम्—

> श्रीविक्रमार्कसमयाच्छरदामथ
> त्रिपञ्चाशता समधिकेष्वितेषु ।
> तेषु त्रयोदशसु भाद्रपदे च शुक्ल-
> पक्षे त्रयोदशतिथौ रविवासरे च ॥

नैषधकाव्यं च तेन चाण्डुपण्डितेन नव्यत्वेन उपवर्णितम् । तथा हि, सर्गसमाप्तौ—

> श्रीमानालिगपण्डितः स्वसमयाविर्भूत-सर्वाश्रम-
> श्चाण्डुपण्डितसंज्ञितं प्रसुषुवे श्रीगौरिदेवी च यम् ।
> बुद्ध्वा श्रीमुनिदेवसंज्ञविबुधात्काव्यं नवं नैषधं
> द्वाविंशे च स वर्णने वितरणं सर्गे च चक्रे क्रमात् ॥

चाण्डुपण्डितस्य कथनेन 'तत्समये विद्याधर-विरचिता नैषधीयचरितस्य एकैव टीकाऽऽसीत् तथा चोक्तप्रारम्भे—

> टीकां यद्यपि सोपपत्तिरचनां विद्याधरो निर्ममे
> श्रीहर्षस्य तथापि न त्यजति सा गंभीरतां भारती ।
> दिक्कूलङ्कषतां गतैर्जलधरैरुद्गृह्यमाणं मुहुः
> पारावारमपारमम्बु किमिह स्याज्जानुदघ्नं क्वचित् ॥
> इति ।

परमुपरिप्रदर्शितं गवेषणापूर्णं तत्तत्प्रमाणोपन्याससहितं श्रीहर्ष-स्थितिकाल-निर्णयमाभास-दूषितत्वात् सूक्ष्मनिरीक्षणशालिनो नैवाङ्गीकुर्वन्ति । यतो हि प्रथमं तावत् कान्यकुब्जेश्वरत्वेन जयन्त-चन्द्रस्यैव ग्रहणे मानाभावः । कान्यकुब्जेश्वरत्वं यथा जयन्तचन्द्रे तथा तत्पितरि विजयचन्द्रे, तत्पितरि गोविन्दचन्द्रे तत्पूर्वजेष्वपि विद्यते । यदि नाम राजशेखरकृतोल्लेखदर्शनात् जयन्तचन्द्र-राजसभायां श्रीहर्षस्य सभास्तारत्वनिश्चयस्तदा भोजराजसभायां कविकुलगुरोः कालिदासस्यापि स्थितिरमंस्यत । कथासरित्सागरं प्रमाणत्वेन कक्षीकृत्येति कृत्वा नैतत्प्रामाणिकम् ।

किञ्च—गौडोर्वीशकुलप्रदीपो यथा जयचन्द्रस्तथैव तत्पितरोऽपि संभवितुमर्हन्ति । यदि ते कापुरुषाः स्युः, कथन्नामास्मिन् पौरुषमाविर्भूतं स्यात् ? अतो गौडोर्वीशकुलप्रदीपत्वेन न केवलं जयचन्द्रस्यैव बोधः, परं तत्पूर्वनजानामपि ।

अपि च—यस्य राज्यकाले कविः संवसति, तस्यैव प्रशस्ति विरचयति स्वप्रेरणयेति न तिरोहितं लोकव्यवहारविदां विदुषाम् । अतो विजयप्रशस्ति-काव्यं तस्य जयचन्द्रराजसभासदत्वं नैव साधयति ।

किञ्च—चाण्डुपण्डितस्य 'काव्यं नवं नैषधम्' इत्यनेन नैषधकाव्यस्य अभिनवत्वे तात्पर्यग्रहणं मुग्धत्वमेव द्योतयति । आसीत्खलु व्युत्पित्सूनां काव्यपञ्चकस्य अध्ययनपरिपाटी सर्वत्र भारते । वर्तते चाद्यापि दक्षिणभारते रघुवंश-किरातार्जुनीय-कुमारसंभव-शिशुपालवध-नैषधीयचरितप्रभृति-काव्यपञ्चकाध्ययन-सम्प्रदायः । तत्र नव्यकल्पनादि-गुणवत्तया श्रीहर्षविरचितं नैषधीयचरितमेव परां कोटिमारोहतीति सर्वसम्मतम् । 'णु'-स्तुतौ-धातोः नवशब्दनिष्पत्तिः, अतष्टीकाकर्तुः सन्निकटकालात्मना नव्यत्वकल्पनमनुचितम् । नव्यशब्देन काव्यस्य नव्य-कल्पनादिगुणवत्ता सूच्यते । तथा चोक्तं कविनैव अष्टमसर्गसमाप्तौ—कविकुलादृष्टाध्वपान्थे महाकाव्ये चारुणि' इति, एकादशसर्गसमाप्तौ शृङ्गारामृतशीतगौ इति, त्रयोदशसर्गसमाप्तौ 'स्वादूत्पादभृति इति, एकोनविंशसर्गसमाप्तौ एकामत्य-

---

१. नैषधदीपिका ।

अतो **नवार्थघटनाम्** इति च। एवं नानाप्रतीकोपन्यासेन नैषधचरितकाव्यस्य अपूर्वप्रमेयपरिपुष्टत्वं 'नव'विशेषणस्याभिप्रायः। अतो नैषधरचनायाश्चाण्डुपण्डितसन्निकट-पूर्वकालवर्तित्वकल्पनमनुचितम्।

चाण्डुपण्डितस्य समये विद्याधरपण्डितविरचिता नैषधीयस्य एकैव टीका आसीदिति कथनमपि न मनोरमम्। ततश्चाण्डुपण्डितस्य स्थितिकालः वि० सं० १३५३ (A.D. 1296) वर्तते। ततः कियत्यपि पूर्वस्मिन् समये भूदेवपण्डितेन नैषधीये टीका व्यरच्यतेति प्रमाणेन विज्ञायते। तथा च—

"युग्माश्वाङ्कै निरुक्ते शकनृपसमये कान्यकुब्जेश्वरस्य आदेशं प्राप्य यत्नान्नलचरितमहाकाव्यटीकां व्यधत्त। सूरिर्भूदेवसंज्ञो दिनमणितनयः कूर्मपूर्वाङ्गजन्मा तुष्यात्तेनान्तरात्मा त्रिभुवनजनकोमापतिः श्रीमहेशः।"

अनेनैतदवगतं भवति यदयं टीकाकारो भूदेवोऽपि कान्यकुब्जेश्वरस्य आदेशं प्राप्यैव नैषधीये टीकां निर्मितवान्। एवञ्च नैषधीये भूदेवस्य टीकारचनाकालः शकवत्सरः ९७२ (वि० सं० ११०७), (ई० सं० १०५०) वर्तते। तेन भूदेवकृत-नैषधचरितटीकास्थ-पद्येन ९७२ शाकवर्षेभ्यः पूर्वं महाकाव्यप्रणेतुः श्रीहर्षस्य स्थितिरासीदित्यङ्गीकरणीयमेव।

किञ्च चाण्डुपण्डितः टीकारम्भे—

> 'प्रथमं तावत् कविर्विजिगीषुकथायां स्वपितृपरिभावकमुदयनमत्यमर्षणतया कटाक्षयंस्तद्ग्रन्थग्रन्थीनुद्ग्रन्थयितुं खण्डनं प्रारिप्सुश्चतुर्विधपुरुषार्थैरभिमानमवधीर्य मानसमेकतानतां निनाय'

इत्युल्लिखति। राजशेखरोऽपि—**श्रीहर्षः शास्त्रार्थे स्वपितुर्हीरस्य विजेतारं पण्डितं पुनः स्वयं शास्त्रविचारे स्वबुद्धिविभवेन जित्वा स्वपितुर्वैरं निरयातयत्** इति ब्रवीति। एतेन नैयायिकप्रवरस्य कुसुमाञ्जलिकारस्य उदयनाचार्यस्य समकालिकः श्रीहर्ष इति स्पष्टमवगम्यते। श्रीमदुदयनाचार्यस्थितिकालस्तु तत्कृत'लक्षणावली'स्थपद्येन विज्ञातुं शक्यः। तथा हि—

> **'तर्काम्बराङ्क-प्रमितेष्वतीतेषु शकान्ततः।**
> **वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्॥**

अस्य पद्यस्य दर्शनेन उदयनाचार्य-स्थितिकालः शकः ९०६ (वि० सं० १०४१, ई० सं० ९८४) स्पष्टो भवति। एतद्विरचितानि लक्षणावलोस्थानि लक्षणान्युदाहृत्य श्रीहर्षेण स्वोपज्ञे 'खण्डनखण्डखाद्ये' प्रायशः खण्डितानि। स्थालीपुलाकन्यायेन किञ्चिन्मात्रमुदाह्रियते। अनुमानलक्षणखण्डनावसरे प्रथमपरिच्छेदे—

> **तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा।**
> **त्वद्गाथैवाऽन्यथाकारमक्षराणि कियन्त्यपि॥**[1]

तथा उदयनाचार्येणापि स्वोपज्ञे आत्मतत्त्वविवेके[2] द्वितीयपरिच्छेदे अलीकविचारासहविचारस्य भौतिकत्व-विचारप्रसङ्गे **तत्रालीकं विचारासहमनिर्वचनीयं वा यमाश्रित्य जगन्निन्द्यते, स एव विचारश्चिन्त्यतां कोऽसौ कीदृशश्चेति** इत्यादिग्रन्थेन श्रीहर्षस्य खण्डनं विहितमिति दरीदृश्यते। अत उदयनसमकालिक एव श्रीहर्ष इति निःशङ्कं निर्धार्यते। यत एकतरस्य मतखण्डनं ग्रन्थे च कालान्तरेणापि संभाव्यते, पर परस्पर-मतखण्डनं नहि तयोरसमकालिकत्वे भवितुं शक्यम्।

किञ्च वैरं निरसिसिषुः श्रीहर्षो राजसभां प्राप्य **गोविन्दनन्दनतया चे**'ति राजानं स्तौति। तेनैव बहवोऽद्य यावत् भ्रमं प्रपेदिरे—'गोविन्दस्य नन्दन' इति कृत्वा जयचन्द्रं मेनिरे। तथैव 'विजयप्रशस्ति-' शब्देन सह 'तात'शब्दस्य श्रवणमात्रेण विजयसिंहं जयचन्द्रस्य पितरं बुबुधिरे। एवमेव 'गौडोर्वीश'-

१. शारदाटीकायुते खण्डनखण्डखाद्ये अनुमानप्रकरणे, पृ० ३४०।

शब्देन च जयचन्द्रस्य निर्धारणं चक्रिरे। परं सर्वेषामयं व्यामोह एव।

वस्तुतस्तु श्रीहर्षेण स्तूयमानो राजा सौन्दर्य-सारभूतस्य गोविन्दसदृशस्य पुत्रस्य लाभेनैव तथा—"गोविन्दो नन्दनो यस्य स गोविन्दनन्दनः, तस्य भावो गोविन्दनन्दनता, तया गोविन्दनन्दनतया।" अथवा स्वशरीरस्य समुत्कृष्टशोभया वा न नरनारी-चित्तापहारकः, किन्तु अद्भुतप्रबलपौरुषेण नर-नारीमनोमोषक इत्यभिप्रायेण 'गोविन्दनन्दन'-शब्देन तत्पिता 'मदनपाल' इत्यभिहितो भवति। गोविन्दचन्द्रस्य सौन्दर्यमेतावता विज्ञातं भवेत्—

'सान्द्रामृतद्रवमुचां प्रभवो गवां यो
'गोविन्दचन्द्र' इति चन्द्र इवाम्बुराशेः।'[1]

मदनपालस्य पौरुषविषये तावत्—

**तस्यात्मजो (श्रीचन्द्रदेवात्मजः) 'मदन-पाल' इति क्षितीन्द्र-**
**चूडामणिर्विजयते निजगोत्रचन्द्रः।**
**यस्याभिषेककलशोल्लसितैः पयोभिः**
**प्रक्षालितं कलिरजःपटलं धरित्र्याः॥ ६॥**
**यस्यासीद् विजयप्रयाणसमये-तुङ्गाचलोच्चैश्चल-**
**न्माद्यत्कुम्भि-पदक्रमासमभर-भ्रश्यन्महीमण्डले।**
**चूडारत्नविभिन्नतालुगलित-स्त्यानासृगुद्भासितः**
**शेषः शैशवशादिव क्षणमसौ क्रोडे निलीनाननः॥ ७॥**

अपि च—'विजयप्रशस्तिरचनातातस्य' अत्रत्य-'तात'शब्देन जनकमवबुद्ध्य 'विजय'शब्दस्य साहचर्येण च जयचन्द्रस्य पितुर्विजयसिंहस्य प्रशस्ति-परं काव्यमिति निर्धारितं मोहग्रस्तैर्विद्वद्भिः आधुनिक-भाषाविज्ञानवादिनां[2] विदुषामिव।

वस्तुतस्तु विजयप्रशस्ति-नाम्नो ग्रन्थस्य रचनया तातस्य जनकस्य साऽपि तेन रचिता इत्यर्थः। 'विजयप्रशस्ति'शब्द सापेक्षः। कस्य विजयप्रशस्तिः? इति प्रश्ने यस्य राज्यकाले कविनिवासः, तस्यैव विजयप्रशस्तिरित्युत्तरम्। तथैव गौडोर्वीशकुलस्य गौडदेशभूपालवंशस्य प्रशस्ति-रित्यर्थः। नहि तेन जयचन्द्रस्य तत्पितुर्वा प्रशस्ति-रित्यर्थो लभ्यते।

किञ्च—त्रयोदशशतकस्थितेन श्रीगङ्गेशोपा-ध्यायेन नैयायिकप्रवरेण खण्डनकृतः श्रीहर्षस्य कारिकामुद्धृत्य 'एतेन खण्डनकारमतमपि अपास्त-मि'ति तत्त्वचिन्तामणौ तन्मतं खण्डितम्। अनेनापि तत्पूर्वत्वं श्रीहर्षस्य अवश्यमेव स्वीकर्तव्यम्। निष्कर्षश्चायं सम्पन्नः—

१. प्रतिस्पर्धिना उदयनाचार्येण सह हीरपुत्रस्य श्रीहर्षस्य राजसमक्षं साक्षात्कारपूर्वकसंभाषण-वर्णनस्य श्रीचाण्डुपण्डितलेखानुसारेण सुस्पष्ट-प्रतीयमानत्वेन तयोः समकालिकत्वं सिद्ध्यति। उदयनाचार्येण च स्वरचिते ग्रन्थे रचनाकालः (शक० ९०६, सं० १०४१ सन् ९८४) स्वयमङ्कितः।

२. कान्यकुब्जेश्वराज्ञया भूदेवपण्डितेन नैष-धीयचरिते टीका सन्दृब्धा। आरम्भ एव तेन टीका-रचनाकालः (शक० ९७२, सं० ११०७, सन् १०५०) स्वयमङ्कितः।

३. श्रीहर्षप्रणीत-खण्डनखण्डखाद्यस्य खण्डन-रूपस्य 'खण्डनोद्धार'ग्रन्थस्य रचयिता वस्तुतः

१. राजशेखरकृते प्रबन्धकोषे, ८।

२. आधुनिकाः पाश्चात्त्यगुरुका भाषाविज्ञानवादिन इत्थमन्वेषणं विदधति—
'कुम्भकर्णे मकारोऽस्ति भकारोऽस्ति विभीषणे।
रावणे स कथं न स्यात् रामणो न तु रावणः॥'

## कला-विलासः

१. कलिन्दकन्याकमनीयकूले
नागः सहस्रोग्रफणप्रकाशः।
तदीयशीर्षेष्वभवन्मुकुन्द—
पदारविन्दस्य कलाविलासः॥

२. क्वास्ते स ताराधिपतिः क्व सूर्यः
सहस्रशः प्रोल्लसिताः क्व ताराः।
इत्थं पुरारेरनुमेयशोभि
विभ्राजते नृत्य-कलाविलासः॥

३. यदेव बुद्धौ प्रविशेत्तदेव
संलेख्यमित्थं गणनायकस्य
कूटेषु बुद्धिं स्थगयन् प्रदीप्तां
द्वैपायनस्यास कलाविलासः॥

४. रात्रेर्दिनं तद्दिवसस्य रात्रि—
र्मेरोः कणश्चापि सुमेरुरूपः।
क्षणे क्षणे नूतनवैभवं तत्
सर्वेश्वरस्यैक - कलाविलासः॥

वारां निधेः पूर्णतिथौ प्रमादस्तच्चन्द्रकान्ते शतधा द्रवत्वम्।
सर्वं तदेतत्सुविचार्यमाणं तारापतेरस्ति कलाविलासः॥ ५॥

—श्रीशिवदत्तशर्मा चतुर्वेदः—

---

षड्दर्शनटीकाकारो वाचस्पतिमिश्रश्चेत् तेनापि स्वविरचिते 'न्यायसूची-निबन्ध'ग्रन्थे तद्रचनाकालः (शक० ८९८, सं० १०३३, सन् ९७६) स्वयमङ्कितः। तथा हि—

न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे।
श्रीवाचस्पति - मिश्रेण वस्वङ्कवसुवत्सरे॥

एवञ्च एतत्पूर्वकालवर्तित्वस्यावश्यमभ्युपेयत्वेन नवम-दशमशताब्द्योरान्तरालिकः श्रीहर्ष इति निश्चिनुमो वयम्।

श्रीहर्षस्य कवेः स्थिति र्बुधवरै-
र्निर्धारिता द्वादशे
मध्ये वापि त्रयोदशे हि शतके
श्रीकान्यकुब्जाश्रया।
अद्याहं प्रबलप्रमाणवशतः
श्रीमत्कवेः सुस्थितिं
वाभाष्ये दशमेऽथवा हि नवमे
गोविन्दपित्राश्रयाम्॥
केचिद् वदन्ति जयचन्द्रनृपस्य राज्ये
हर्षं पुनर्विजयसिंहनृपस्य काले।
गोविन्दचन्द्रनृपतेरपि राज्यकाले
हर्षः परं मदनपाल - नृपाल - काले॥

श्रीमत्कान्यकुब्जेश्वराः—श्री मदनपालदेवः (नवमशताब्द्या उत्तराध,) श्रीगोविन्द्रचन्द्रदेवः, श्रीविजयसिंहदेवः, श्रीजयचन्ददेवः (द्वादशशताब्द्या उत्तरार्धे) चाभवन्।

आधुनिकैः महामहोपाध्याय-शिवदत्तप्रभृतिभिः भारतीयैर्विद्वद्भिः, पाश्चात्त्यैः डॉ० बूलर प्रभृतिभिर्विद्वद्भिश्च श्रीहर्षस्य स्थितिकालः द्वादशशतकस्योत्तरार्धस्त्रयोदशशतकस्य पूर्वार्धश्च स्थिरीकृतः। कान्यकुब्जेश्वरस्य जयचन्द्रस्य राज्ये तैः स्थापितः सः। श्री वरदाचार्येण संस्कृत-साहित्येतिहासे विजयसिंह - जयचन्द्रयो राज्ये स दर्शितः।

श्रीगदाधरेण नैषधव्याख्यात्रा गोविन्दचन्द्रस्य राज्ये तत्स्थितिः प्रदर्शिता। परमधुना गदाधरादपि प्राचीनेन भूदेवपण्डितेन नैषधव्याख्यात्रा तत्स्थितिः निर्दिष्टकालात्पूर्वं साधितेति विलोक्य नवम - दशमशताब्द्योरान्तरालिकत्वं श्रीहर्षस्य निःसन्दिग्धं निर्धार्यते।

# द्वादशमासिकं विरहिणी-गीतम्

—श्री उमाशङ्करशर्मा त्रिपाठी—

[ आंग्लभाषा-प्राध्यापकः—काशीविद्यापीठम्, वाराणसी ]

१.

हृदयरमो मम वसति विदेशं सखि! विरहो मम भाग्यमशेषम्।
उदिता नवमेघा आषाढे, प्रवसिमि कथं प्रियविरहे गाढे॥

२.

पथिकं त्वरयति गृहमभिचपला, असिताम्बरा पयोधर-नवला।
वर्षति नभसि जलधरो भीमं, लिम्पति तमो मार्गमपसीमम्॥
निशाऽभिसरति दिवसमपशङ्कं, तदपि सहे शठ-जीव-कलङ्कम्।

३.

भाद्रे नृत्यति शिखी सरागं, भेकरवः पूरयति तडागम्॥
भीता काऽपि विशति प्रियहृदयं, काऽपि तनोति मनोरथ-विजयम्।
शय्या तपति दहति घनबिन्दुः, प्रसरति वपुषि विरह-नव-सिन्धुः॥

४.

वीक्ष्या-ऽऽश्विनं स्फुरति पुनराशा, ह्रियते निष्करुणेन हता सा।
चक्रमिथुन-मुल्लसति तडागे, हंसो दधाति मनो नवरागे।
सरसि निर्मले विहसति कमलं, कुरुते का न यौवनं सफलम्।
स्वपिति वधू प्रियवक्षसि लग्ना, विधुरा मूर्च्छति दैन्यनिमग्ना।

५.

शैत्यमङ्कयति कार्तिक-पवनं, वनमिव विना प्रियतमं भवनम्।
मामुत्सुकयति पथि पथिकाशा, तदनु खेदयति भृशं निराशा।
दीपावली लसति प्रिययोगे, दहति च मां प्रियजनो वियोगे।

६.

मार्गशीर्षमर्चति प्रियकामा, विलयमीहते विधुरा वामा।
एकाकिनी स्वपिमि शुचि विकला, अहस्तदेव निशाऽसौ - विफला।
विफलमये मम, जीवितमखिलं, भवतु मृतायां मयि प्रियमिलनम्।

[ क्षत्रपति-महाकाव्यस्य कविवरैः श्रीत्रिपाठिमहोदयैः मैथिलकविकोकिलस्य विद्यापतिकवेः काव्यमनुलक्ष्य नव्यैर्भावैरुपबृंहितमिदम् अभिनवं द्वादशमासिकं विरहिणी-गीतमद्य प्रस्तूयते 'सूर्योदय'-पाठकेभ्यः । आशास्यते च रसिकानां नूनमिदममन्दं मोदं जनयेदिति ।—सम्पादकः ]





७.

कृशतरमहः सुदीर्घा यामा, **पौषे** मासि प्रिया किमु वामा ।
दूरं प्रियो वसति परदेशं, ग्लपयति मनोभवः सविशेषम् ।
मा मा लभतां कदापि वियोगं, विषमं सहे प्रतीक्षा-रोगम् ।

८.

**माघे** हिमपौरुषमतितरलं, भरति तुषारकणो जगदखिलम् ।
चोलकमुन्नत-कुचयुगबन्धं, सोढुमुरः क्षमते न सगन्धम् ।
निस्त्रपदैवो मम प्रतिकूलं, का न प्रिये नन्दति सुखमूलम् ।

९.

पिके सतारमुदञ्चति रागं, क्षिपति **फाल्गुने** मन्मथनागम् ।
युवतिजनो घनसङ्कटपूरे, निपतति नियतं रमणे दूरे ।
स्वेद-ताप-निश्श्वास-निपीतं, तरला वपुर्दहति शुचिभीतम् ।

१०.

रतिनवकौशल-सूतिरुपेतो, **मधुरिह** नवदल-पुष्प - समेतः ।
अलिरपि वेत्ति कुसुम-मधुकालम्, भ्रमति रणति नृत्यति प्रतितालम् ।
विकसित-यौवनमिह परिपूरम्, तदपि प्रियो मम वसति विदूरम् ।
रसिकशिरोमणिरपि किमु दयितः, विन्दति नैव सुरभिमपि परितः ।

११.

स्वपिमि **माधवे** माधव-विधुरा, दवदहने वल्लरिरिव मधुरा ।
विरहिजनं विद्ध्यति शठमारः, ज्वलति धरा व्यथयति तनुभारः ।
श्रमजलसेकमाचरति दिवसः, अहिमुखमरुदिव मारुतरभसः ।
दुरितपूरमिव दिशि दिशि तापः, शङ्के ज्वलति विरहिणी-शापः ।

१२.

**ज्येष्ठे** मासि विरागो रागः, विरसा रसा दुनोति निदाघः ।
सरो हीनरुचि कर्दमनीरम्, नदी जहाति विदूरं तीरम् ।
तदपि मनो विरमति किमु चपलम्, यौवनदाहमाचरति सफलम् ।
अधुना प्रियो हरतु मम शोकम्, अथवा यमो नयतु निजलोकम् ।

# पूर्व-संस्कारः

मूल-लेखकः—
**श्री सदाशिव कृष्ण फडके**

—अनुवादकः
**श्री 'अज्ञारः'**

— २ —

विलक्षणयोगोऽयं परस्पर-विरुद्धसंस्कृतिविचार-वतोः स्त्रीपुंसोर्विवाहबन्धनं नाम। तर्ककुमारः किल परकीयसंस्कृत्युपनेत्राभ्यां पश्यति स्म, अन्ध-श्रद्धा च मनागपि आधुनिक-तार्किकदृष्ट्या असंस्पृष्टाऽऽसीत्। उभयोः पूर्वसंस्कारेषु कियन्महत्तर-मन्तरमासीत्? एकः पूर्वस्याम्, अपरश्च पश्चिम-स्याम्! तर्ककुमारस्य पिता ज्ञानेश्वरः पाखण्ड-वादेन सह इत्थं तदाकारतां गतो यद् युक्तिवादे बौद्धिकविजयलाभ एव तस्यैकं समुद्दिष्टमासीत्। बुद्धिवादस्य आवर्तेषु प्रतिपक्षिणमाकृष्य, स्वयञ्च नद्याः कस्यचन शिलाखण्ड इव पृथक् स्थित्वा दूरत एव विज्ञानानन्दस्य दुर्दशा-दर्शनात्मिका शुष्का बौद्धिकी वृत्तिरासीद् अहम्मन्यस्य ज्ञानेश्वरस्य। आनुवंशिकतया तस्याः कियानंशः पुत्रे तर्ककुमारेऽपि परिणत आसीत्।

वस्तूनां पुराऽऽनयनशुल्कग्रहीता अधिकारी तत्र विषये कठोरतया स्वाधिकारं समुपयुञ्जते। एवमेव तर्ककुमारस्य इन्द्रिय-बुद्धी अपि कस्यापि विषयस्य किमर्थम्, कथञ्चेत्यादिप्रश्नैः कठोरपरीक्षणमन्तरा तमग्रे गन्तुं नानुमन्वाते स्म। स हि इन्द्रियप्रत्यक्ष-मनुमानञ्चेति प्रमाणद्वयमेव मनुते स्म। आप्त-वचनानां स्वतःप्रामाण्यस्वीकारं तदीया बुद्धिः उपहासास्पदमपमानकरञ्च प्रतीयते स्म। 'पुराण-मित्येव साधु' इति सर्वथाऽसम्बद्धोक्तिरासीत् तद्दृष्ट्या। प्रत्युत स इदमेव युक्तिसङ्गतं मनुते स्म यद् यावत् प्राचीनतमं तावत् सर्वथा निरुपयोगीति।

ज्ञानविषये तस्यायं सिद्धान्त आसीद् यत् पूर्व-पूर्वकाले अधिकाधिको घोरतरश्च अज्ञानान्धकार आसीत्, ज्ञानस्य उत्तरोत्तरमसीमिता वृद्धिर्भवेत्, तेन चायम् अज्ञानान्धकारोऽपच्छिद्येत। ज्ञानस्येयम् उत्तरोत्तरा वृद्धिर्निरन्ता किल। अत एव सः प्राचीनग्रन्थानां सत्यान्वेषणं कुर्वन् 'ज्ञानेनैव ज्ञानस्य विकासः' इत्यैतिहासिकीं दृष्टिमेव निकष-रूपां मनुते स्म। व्यावहारिकोपयुक्ततावाद-निकषे वर्तमानकालीनविषयाणां सत्यान्वेषणं कुर्वन्नासीत्। आचार-विचारेषु स्वातन्त्र्यम्, ऐहिकः सुखवादः, साम्यवादश्चेति तस्य परैः सह चर्चायाः प्रियतरा विषया आसन्। तस्य बुद्धावेव नारोहति स्म यद् ईश्वर-धर्म-संस्कृति-परम्परा-कल्पनानां किन्नाम वास्तविकं महत्त्वमिति।

तस्य माता पण्डिता बहुभाषिणी चासीत्। किन्तु सांसारिक-सुख-स्वास्थ्यतो निष्क्रियाऽहम्मन्य-तातश्च परं तस्या गतिरेव नासीत्। तर्ककुमारे चेमे सर्वे गुणाः आनुवंशिकतया समागताः।

यदा स राजनगरे अध्ययनाय गतस्तदा तत्र तस्य प्रौढावस्थीयायाः यथार्थशिक्षाया आरम्भः

परकीयसंस्कृति-शिक्षयैव प्रारभत। शीघ्रमेव स तद्रङ्गेन रञ्जितश्चाभवत्। नागरिका आचार-विचारा रीति-नीतयश्च स्वल्पैरेवाहोभिस्तेन आत्म-सात्कृताः। तस्य दैनन्दिनः कार्यक्रम इत्थमासीत्—प्रातः प्रबोधसमकालमेव धूम्रपानम्। ततः परं चाय-पानं कृत्वा दैनिक-वृत्तपत्र-वाचनम्। ततो 'बैडमिण्टन-क्रीडोत्तरं स्वहस्तेन क्षौरकर्म। पश्चात् अध्ययनम्, भोजनम्, अन्यद्वाचनञ्च। सायङ्काले 'ब्रिज'-क्रीडा। रात्रौ च कस्मिंश्चिद्दिने चित्रपट-प्रेक्षणम्। तस्य सर्वाधिका रुचिः वाचने आसीत्, ततः परं चिन्तने।

तस्य धर्मपत्नीत्वं गताया अन्धश्रद्धायाः कृते तदीयेऽस्मिन् दैनिकजीवने सहयोगदानं कठिनतर-मभवत्। फलतस्तर्ककुमारोऽपि अन्तरा विचार-यन्नासीद् यद् व्यर्थमेव कर्तव्यबुद्धेर्वशंवदो भूत्वाऽहं निरर्थकमेव इमाम् (अन्धश्रद्धां) स्वगले बद्धवानिति। सामान्यतः प्रत्येकः पुमान् श्रद्धामयो भवति, परमनया सात्त्विकाऽन्धश्रद्धया समं तर्क-कुमारस्य प्राकृतिक्या रजोगुणमय्याः श्रद्धायाः सापत्न्येर्ष्या प्रारभत। तल्लक्षणानि च स्फुटं दृष्टि-पथमुपाययुः।

प्रतिबन्धकीभूतानां बाह्यदृष्टि-सुलभदृश्यानां सहजत एव निरोधेन अन्तर्मुखतायाश्चिन्तनं पुण्य-शीलपितृगृहस्य पूर्वस्मृतिभिः सह सुख-संवादाश्च अयमेव अन्धायाः श्रद्धाया एकान्तप्रियो व्यासङ्गो-ऽभवत्। तानि भक्तिगीतानि तया कण्ठस्थी-कृतान्यासन् यानि किल तस्याः पिता विज्ञानेश्वरः प्रतिदिनमुषसि प्रातःस्मरणरूपेण उच्चैर्गायति स्म। प्रभाते विज्ञानेश्वरो यदा भक्तिगीतानि गायन् भजनमकरोत्तदा तस्मिन् तेषां प्रासादिक-भक्ति-गीतानां शब्दार्थ-प्रत्यया यथा एकरूपतां प्रपद्यन्ते स्म, तत्सर्वमलौकिकं दृश्यं बाल्ये एव श्रद्धया महताऽवधानेन दृष्टमासीत्। पितुस्तान्यलौकिकानि आचरणानि मुहुर्मुहुः पश्यन्त्याः श्रद्धायाः कृते रहस्य-मिदं सहजतः सिद्धमासीद् यद् अन्तःस्फूर्त्यैव ईश्वरेण सह कथं स्वैरालापः क्रियते इति।

बाल्यावस्थायामेव श्रद्धा एतावज्ज्ञातुं प्रौढमति-रभवद् यत्तस्या माता सहजादेवी मन ईश्वरे तनूंश्च संसृतौ नियोज्य कथङ्कारं सहैव विद्याऽविद्ये सम-मेवानुतिष्ठन्ती आसीदिति। ऋतम्भरा, प्रज्ञा चेति अस्तिकयोः श्रद्धाया महत्प्रेम आदरश्चासीत्। तयोः केवलं सान्निध्येनैव महाभारत-भागवत-रामायण-महापुराणादीनां सर्वं ज्ञानं तया समधिगत-मासीत्। नैतावदेव, नैकानि संस्कृत-प्राकृत-स्तोत्राणि, भगवद्गीता, रामगीता-प्रभृतीनि प्राक-रणिकानि ग्रन्थान्यपि तस्याः कण्ठस्थान्यासन्। विवाहोत्तरं नियमतः सा प्रतिदिनं प्रहरैकरात्रि-शेषे एव प्रबुद्ध्यते स्म। प्रहरैकरात्रिकालात् पूर्वं कदापि न शेते स्म। अहोरात्रं षट्प्रहरास्तस्या महता आनन्देन व्यतीयन्ते स्म।

उपर्युक्तैः पूर्वसंस्कारैरेव श्रद्धायाः कृते तदीय-मन्धत्वमेकान्तवासश्च कदापि अरुचिकरौ न प्रतीयेते स्म। तस्याः द्रढीयात् विश्वास आसीद् यत् प्रेष्ठ-तमस्य भगवतः पितृ-मातृ-योगानन्दादि-विभूतिषु तर्ककुमारोऽप्येको विभूतिर्मया लब्ध इति। नूनं सा जानन्ती आसीद् यत् तर्ककुमारस्य प्राकृतिकी श्रद्धा मे सपत्नीभावं गताऽस्ति। परं तस्या अयं दृढविश्वास आसीत् यद् अविद्यात्मिका श्रद्धा कालेन अनुभवाऽनुतापाभ्यां नूनं मत्समरसतां यास्यतीति।

× × ×

एकदा नवदम्पत्योरनयोरित्थं वार्तालापो-ऽभवत्। बहुश्रुत-पाण्डित्यस्याभिनिवेशेन अन्ध-श्रद्धां तिरस्कुर्वन् तर्ककुमारः प्रावोचत्—"रे अन्धे!

तव प्रियेषु प्राचीनशास्त्रेष्वपि श्रद्धाया अर्थो विद्येति मन्यते। परं पश्याम्येतद् यत् शिक्षातस्ते महती घृणा वर्तते। केचन जमदग्नेः पत्नीं रेणुकामेव श्रद्धां मन्वते। साऽपि जमदग्नेः शरसन्धानाभ्यासे तेषां प्रहितान् बाणान् विचित्यानयति स्म। किन्तु 'वैडमिंग्टन'-'क्रीडायामपि मह्यं ते कियानपि उपयोगो न जायते। 'शतपथ-ब्राह्मणे' लिखितं यत् श्रद्धा किल सूर्यदुहिता। परं मद्दृष्ट्या तु त्वम् उलूकदुहिता प्रतीयसे। 'छान्दोग्योपनिषदि' उक्तं यत् पित्रा अग्निना मात्रा च श्रद्धया कश्यपस्य (अर्थात् शब्दविपरिणामेन पश्यकस्य, दिव्यदृष्टिसम्पन्नस्य) महामुनेर्जन्म अभवदिति। तदनुसारं मे तार्किकी बुद्धिस्तु वह्निना उपमातुं शक्या। परं त्वम् अन्धा श्रद्धा कथङ्कारं दिव्यदृष्टिसम्पन्नस्य कश्यपस्य माता भवितुं शक्नुयात्? अद्याऽऽहमनुभवामि यत्त्वया सह विवाहं कृत्वा सर्वथा अविचारस्यैव कार्यं कृतमि"ति।

अन्धश्रद्धया समुत्तरितम्—"आर्यपुत्र, किमपि कथयन्तु भवान्। अहं पुनरिदं प्रतीये यन्मम अन्धश्रद्धाया भवादृशा दृष्टिसम्पन्नाः पतिदेवा एव समुचित आधारः। नाहं कामये भवत्प्रदत्तेषु प्राचीनोदाहरणेषु कयाऽपि सह तुलामधिरोढुम्। तुलनैव करणीया चेत् केऽपि मां सत्यस्थां कथयिष्यन्ति। परं तदा भवतां स्थितिः त्रिशङ्कुवत् मन्तव्या भवेत्। अत एतानि उपमाद्यलङ्काराणि त्यक्त्वा 'आवामात्मनैव कथं स्वः' इत्यस्यैव अन्तर्दृशा विचारः समुचितो भवेत्। मुद्राया उभयोः पृष्ठयोः स्थिती कामं विभिन्नदिशोः स्याताम्, परमेकम् अपरस्य पूरकमेव भवति। एवमेव श्रद्धाविचारयोर्दम्पत्योरपि वस्तुत इयमेव स्थितिः। काममहं भवतां पूर्तिं न कुर्याम्, परं भवद्भ्य इदन्तु मन्तव्यमेव भवेद् यद् दृष्टिसम्पन्नः पतिः अन्धश्रद्धाया नूनं पूरक उपकारकश्चेति। यदि भवन्तो मन्वते यदत्रापि व्यर्थमेव मदर्थं स्वार्थत्यागो भवद्भ्यः करणीयो भवति, तथापि जानन्त्येव तत्र भवन्तो यत् त्यागः किल पुरुषस्य भूषणमेव। किमप्यस्तु, अहं तु भवन्तं स्वात्मनः पतिदेवमेव मन्ये। भवन्तो यथा वाञ्छन्ति, तथा वदन्तु। अहं किल भवतां छाया। भवच्चरणौ विहाय कुत्र यास्यामी"ति।

वार्तालापेनाऽनेन तर्ककुमारो विचार-सागरे ममज्ज। स हि स्वभावतो विचारवानासीत्। कदापि दुश्शीलोऽपि नासीत्। अत एव तद्रात्रौ स निद्रां न लेभे। विविधैस्तर्ककुतर्कैः तद्बुद्धिभ्रमणमभवत्। शल्यवदिदं तद्धृदयं विध्यन्नासीद् यन्मयि देववद् भक्तिमतिं सरलस्वभावाम् अन्धश्रद्धां व्यर्थमेवाहं दुःखितामकरोमिति। कथमस्य परिमार्जनं विधेयमित्यत्र स विचारमूढ इवाभवत्। स्वीयेषु असन्तुष्ट-कुतर्केषु साशङ्के स्वभावे च परां घृणामकरोत्। मनस इत्थमुद्विग्नावस्थायां उषसः कियत्पूर्वं स निद्रितोऽभवत्।

अत्रान्तरे तेन स्वप्नं दृष्टं यत् 'संशयात्मा विनश्यति' इति कठोरामाकाशवाणीं कृत्वा केनापि स भीमायां नद्यां प्रक्षिप्तः। यावदयं भूमौ पपात, तावत् कियत्कालं मूर्च्छितोऽभवत्। पुनः प्राप्तायां संज्ञायां तेनेदमनुभूतं यदहं योगानन्दस्य उटजाभ्याशे स्थितः, योगिराजाश्च उपांशुपाठमिदं कुर्वन्तो विराजन्ते—

श्रद्धयाऽग्निः समिध्यते श्रद्धया हूयते हविः।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि॥
प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः।
प्रियं भोजेषु यज्वस्विदं म उदितं कृधि॥
श्रद्धां देवा यजमाना वायुगोपा उपासते।
श्रद्धां हृदय्ययाऽऽकूत्या श्रद्धया विन्दते वसु॥

# मालापुरस्य पूर्वेतिवृत्तम्

—श्री शङ्करशुक्लाः—

विगत-सार्धैकशताब्द्यां नवसङ्घट्टितेऽस्मिन् मालापुर-मण्डलप्रदेशे निर्ममहत्यानाम् लुण्ठनानाम्, अग्निकाण्डानाञ्च नैके भीषणतराः उत्पाताः सम्पन्नाः। एतेषामुत्पातानां पृष्ठभागे सङ्घटीभूतोपद्रवः कारिणां समूहाः सक्रिया आसन्, यैः किल आंग्लशासनकाले एव नक्सलवादिभिः समादृतानां उत्प्लुतियुद्धानां ( छापामार लड़ाई ) प्रयोगाः प्रारब्धाः। अत्र नैकवारं महत्परिमाणेन महाभियानानि ( आन्दोलन ) अशान्ति - निर्माण-योजनाश्च कार्यान्विता अभवन्। परिसरवर्तिषु अरण्येषु प्रकाशचौराणां भूमिष्ठा सम्पत् संगोपिता वर्तते। पूर्वं कृषियोग्या भूमिः महत्तराणां भूस्वामिनामेव अधीनाऽऽसीत्। पार्वतक्षेत्रीयाश्च प्रजाः वनसम्बद्धव्यवसायेष्वेव संलग्नाऽऽसीत्। कृषक-श्रमिकेषु मलाबारप्रदेशीयानां यवनानाम्, ये च 'मोपला' - नाम्नाऽभिधीयन्ते, प्रतिशतं भूयसी संख्या वर्तते। १८३२ मितेशवीयवत्सरे अन्नोत्पादनमूल्येषु वृद्धया भूस्वामि-कृषकयोः प्रतिस्पर्धा प्रारभत यत्र आंग्ल-शासनेन भूस्वामिनामेव पक्षः समर्थितः, बलाच्च क्षेत्राधिकारहरणानि ( बेदखलियाँ ) समारब्धानि येन सर्वप्रथमं सामान्यकृषकेषु व्यापकोऽसन्तोषः प्रादुरभूत्। यतः कृषकेषु मोपलाजातीयानामेव बाहुल्यमासीत्, अतोऽसन्तोषोऽयं तथाकथित-साम्प्रदायिकतारूपतां परिणतोऽभवत्। १८३६ मितेशवीयवत्सरतो दशवर्षाणि यावत् मोपला-कृषकैः नैकानि हत्याकाण्डानि

---

श्रद्धां प्रातर्हवामहे श्रद्धां मध्यन्दिनं परि।
श्रद्धा सूर्यस्य विम्रुचि श्रद्धे श्रद्धापयेह नः॥
( ऋ० १०.१५१ )

योगिराजैः योगानन्दैः पठितस्यास्य सूक्तस्य तर्ककुमारस्य मनसि एतावान् विलक्षणः प्रभावः समभवद् यत् स तस्य महापुरुषस्य चरणयोः मस्तकं समर्प्य साष्टाङ्गं प्रणनाम। ततश्च स्वप्ने एव उत्थाय अञ्जलिं बद्ध्वा तेषां पुर उपतस्थे।

दृष्ट्वेदं योगानन्दास्तं भर्त्सयन् ऊचुः—"तर्ककुमार! श्रद्धेयं मया तुभ्यं समर्पिता। नूनमवधेहि यदिमां त्यक्षसि चेत् ते सर्वनाशो भवेत्। इदमपि अवधारय यत् शुद्धश्रद्धामन्तरा संसृतौ ते न काऽपि प्रतिष्ठा। स्वहितस्यैव त्वमस्या अवमाननं मा कुरु। एतद्विपरीतं सा त्वामीश्वरवत् सेवते, अतस्त्वमपि इमां देवीवत् सेवस्व। त्वां सन्मार्गे आरोहयितुं सा हेतुर्भवेत्। यदा ते विचाराणां गतिः कुण्ठिता भवेत्तदा इयमेव ते मार्गदर्शनं विधास्यति। गच्छ, इतः परं कदापि मे आज्ञाया उल्लङ्घनं मा कुरु" इति।

सहसैव योगानन्दानां दिव्यं तेजो लुप्तम्, तर्ककुमारश्च प्रबोधं गतः।

बुद्धिवादिनि तर्ककुमारे अद्भुतस्यास्य स्वप्नस्य विचित्रः परिणामोऽभवत्। तस्य प्रबोधात्पूर्वमेव श्रद्धा प्रबुद्धा भूत्वा नित्यनियमानुसारं मञ्जुलेन स्वरेण प्राभातिके रागे भगवत्पादानां शङ्कराचार्याणां सुप्रसिद्धं स्तोत्रमिद गायन्ती आसीत्—

भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढमते!

उद्बोधकं स्तोत्रं श्रुत्वा तर्ककुमारः कियत्कालं तत्र तन्मयोऽभूत्।

कृतानि, अनेकानि हिन्दूमन्दिराणि दग्धानि। एकोऽरबदेशीयो यवन एतान् उत्तेजितान् कुर्वन्नासीत्। मरणोत्तरं यदा तस्य शवो मामग्राम-समाधिस्थले समापूरितः, ततः परं समाधिस्थलमिदं विद्रोहिणां यवनानां तीर्थमेव सम्पन्नम्। कस्याप्युपद्रवस्य प्रारम्भे एते अनिवार्यतः समाधिस्थलस्यास्य पूजनं कुर्वन्ति स्म।

ततः परं मोइदीन-नामकेनापरेण यवनेन मोपलानां नेतृत्वं गृहीतम्। तेन 'हाल इल्लकम' नाम्ना धर्मोन्मादस्य नवं महाभियानं प्रारब्धम्। महाभियानेऽस्मिन् नैकेषां हिन्दूनां वधोऽक्रियत। नैकानि च मन्दिराणि भस्मसात्कृतानि। राजपुरुषा महाभियानममुं निरोद्धुमक्षमा अभवन्। अन्ततः १८४९ मितेशवीयवत्सरस्य अगस्तमासि कन्नानोर-पालघाट-मैसूरस्थानेभ्यः सैनिकयूथानि समाहूतानि, तदा किल कथञ्चन उपद्रवकारिणामेषां नियन्त्रणमभूत्। उपद्रवकारिभिः सह सङ्घर्षे एको यूरोपीय-सेनानायकः (कमाण्डर) पञ्चत्वमापन्नः। ६४ विद्रोहिणो मोपला हताः। विद्रोहिणः तिरुमन्धम-कुन्नू-नगरस्य प्रसिद्धे मन्दिरे गुप्ता आसन्। अन्ततश्च तैस्तन्मन्दिरं भग्नं दग्धञ्च। १८५१ मितेशवीयवत्सरस्य उत्तरार्धे हत्यानामेषां द्वितीयः क्रमः प्रादुरभूत्। अस्मिन् सङ्घर्षे मोपलाविद्रोहिभिः असङ्ख्यातानि गृहाणि दग्धानि रक्षाशेषताश्च प्रापितानि। हत्यानां क्रमस्तु एतावानासीत् यदेकस्य परिवारस्य सर्वे सदस्याः, येषां सङ्ख्या १८ अष्टादश आसीत्, मृत्युमुखं पातिताः।

महत्तरस्यास्य हत्याकाण्डस्य पश्चात् मण्डलाधीशेन (मजिस्ट्रेट) कोनोली-महाशयेन मोपलोपद्रवाणां परीक्षणाय एक आयोगः सङ्घटितः। आयोगाध्यक्षेण टो० एल्० स्ट्रेंज महाशयेन स्वीये प्रतिवेदने मोपलानां धर्मोन्मादमेव हत्यानां कारणं संघुष्य तेषां दमनाय विशेषसेनायाः सङ्घटनस्य प्रस्तावः कृतः। फलतः 'मोपलोपद्रव-निरोधका'-धिनियमेन मोपलाजातीया निरस्त्रीकृताः। सहस्रशो मोपलासदस्यैः सेनायाः पुरत शस्त्राणि समर्पितानि। शासकीयसूचनानुसारं तदा सैयद फजल नामको व्यक्तिः मोपलाजनेभ्यो उपद्रवाय प्रेरयन्नासीत्। यद्यप्यनेन आरोपोऽयं न स्वीकृतः, उपद्रवकारिणां निन्दा च कृता, किन्तु अन्ततः सः १८५२ मितेशवीयवत्सरस्य मार्चमासे अरबदेशं प्रत्यावर्तत।

१८५५ मितेशवीयवत्सरस्य सितम्बरमासि मोपलाजनानामेकेन सङ्घटनेन मण्डलाधीशस्य कोनोली-महाशयस्य हत्या कृता। उपद्रवग्रस्तक्षेत्रेषु सामूहिकोऽर्थदण्डो नियोजितः, उपद्रवकारिणां दमनस्य कठोरव्यवस्था चाभवत्। किन्त्वतेनापि पूर्णा सफलता नाधिगता शासनेन। लुण्ठनानां हत्यानाञ्च पुनर्नवः क्रमः प्रारभत। १८८० वत्सरस्य अक्तूबरमासे एकः 'पत्तरः' ऐकश्च 'पिशरोदी' हतः। शासनायाऽपि नैकानि भयसूचकानि अनामानि पत्राणि प्रतिहतानि उपद्रवकारिभिः। मण्डलाधीशो विलियम लोगन-महोदयः प्रकरणस्यास्य परीक्षणाय नियुक्तोऽभवत्। तेन सर्वप्रथमं स्वीये प्रतिवेदने स्थानीय-कृषकानां भूयसीम् ऋणग्रस्ततां भूस्वामिनामत्याचारांश्च प्रति शासस्य ध्यानं समाकृष्टम्। स्थितेरस्याः परिष्करणस्य च प्रस्तावः समुपस्थापितः।

ततः परं वर्षद्वयं यावत् साधारणी शान्तिरासीत्। मोपलाजनैः तिरुक्कल्लूर-मन्दिरमधिकृतम्। दीर्घसङ्घर्षानन्तरं मन्दिरस्यास्य विस्फोटक-द्रव्यः विध्वस्तकरणमनिवार्यमभूत्। मण्डलं चेदं तत्क्षणं निश्शस्त्रीकृतम्।

१८९८ तः १९१५ वत्सरयोरन्तराले धर्मोन्माद-

मर्यरुपद्रवैः क्षेत्रमिदं मुक्तमासीत्। नैके मोपला-सदस्याः लघुषु व्यवसायोद्योगेषु संलग्नाः। केचन सेनायां प्रविष्टाः, केचन सेवालाभाय मलय-सिंगापुरदेशेषु गताः। १९१५ तमे वत्सरे पुनरुपद्रवः प्रारभत। उपद्रवकारिणां नैकानि गुप्तसङ्घटनानि आबद्ध्य गोलिकालक्ष्यतां नीतानि। यद्यपि प्रथमं विश्वयुद्धं १९१८ वत्सरे परिसमाप्तम्, परं 'खिलाफत'-महाभियानेन निःसृता रोषभावना १९२०-२१ वत्सरीयेण असहयोग-महाभियानेन अधिकमुग्रतां प्राप। कालीकट-नगरे गान्धिभिः शौकत—अलिभिश्च भाषणे कृते। तत्र सभासु मोपलजनाः भूयसा समुपस्थिताः। तेन समस्तजनवर्गे महाभियानस्य अनियन्त्रितोत्साहः प्रसृतः। तन्निरोधे नैके राजपुरुषा हताः, अन्ततश्च सेनया तन्नियन्त्रितम्। उत्पातकारिभिः धूमशकटीमार्गाः भग्नाः, दूरभाष-सूत्राणि छिन्नानि, सेतवश्च खण्डिताः। पूर्णस्य मण्डलस्य देशतः सम्बन्धविच्छेदोऽभवत्। मालापुर-सुरक्षायै प्रेषितायाः सेनाया उपर्यपि पुकोत्तुरे सहस्रमितैरुत्पातकर्तृभिः आक्रमणं कृतम्। सेनया च प्रत्युत्तररूपेण मोपलाजनानां शतचतुष्टयं हतम्। तदा सेना कथमपि मालापुरं प्राप।

१९२१ वत्सरस्य २५ अगस्तदिनाङ्के नैकानि सैन्यपथकानि लङ्का-बैङ्गलोरतो मालापुरं समागताः। कुत्तीपुरतः समागच्छन्त्याः सेनायाः तिरूरागमनात् पूर्वमेव मार्गे विद्रोहिभिः सह कठोरः सङ्घर्षोऽभवत्। फलत आत्मानं तिरूर-राज्यशासकम्मन्येन मोपलानेत्रा अलीमुसलियारेण आत्मसमर्पणं कृतम्।

सशस्त्रविद्रोहिणां संख्या प्रायो दशसहस्रमिता आसीत्। ते अरण्येषु विशकलिता भूत्वा 'छापामार'युद्धं सेनया सह कुर्वन्त आसन्। नैकानि सैनिकपथकानि प्रच्छन्नरूपेण आक्रम्य वन-जनानां महता-आवेशेन त्रस्तीकृतानि। चतुर्दिक्प्रसरणेन तेऽत्यन्तं नृशंसा अभवन्। सम्पूर्णे क्षेत्रे प्रकाशचौर्यस्य, हत्यायाः बलाद्धर्मपरिवर्तनस्य च नग्नताण्डवं तैः समारब्धम्।

मालापुरस्य धनानि वनानि विद्रोहिणां स्थाय्याश्रयस्थलान्यभूवन्। तेषां दमनाय वनयुद्ध—विशेषज्ञानि बर्मा-राइफल्स-गुरखादलानि समाहूतानि। मेलमुरी प्रभृतिस्थानेषु युद्धे पार्वतास्त्राणां सकवचवाहनानांचोपयोगोऽभवत्। मेलमुरी - समाक्रमणे २४६ विद्रोहिणो हताः। तेन तेषां मनोबलं भग्नम्, भूयस्या संख्यया विद्रोहिभिरात्मसमर्पणं च कृतम्। तथापि प्रच्छन्नाक्रमणानि न रुद्धानि। प्रत्येकसैनिकशिविरं शरणार्थि-शिविरमभवत्। सैनिकाक्रमणनिरोधेन सह प्रत्यात्मसमर्पणं कर्तुं सेनया घोषितम्। तथापि विद्रोहिभिरात्मसमर्पणं न कृतमिति दृष्ट्वा गोरखा-पथकेन वनं गत्वा सीठी कोया बंगल नामकस्तेषां नेता समाबद्धः। तदा अन्यैर्नेतृभिरात्मसमर्पणं कृतम्।

सैनिक - विवरणेन ज्ञायते यदत्र सर्वसाधन सम्पन्नाया पदवर-सेनाया बटालियन-द्वयं ७०० विशेषराजपुरुषाश्च विद्रोहिणां दमनाय नियुक्ता आसन्। मोपला-स्त्रियोऽपि विद्रोहिणः समुत्तेजयन्त्य आसन्। अन्ततः बलात्सेनया सर्वेषां नियन्त्रणं महता यत्नेन कृतम्।

१९२१ वत्सरीयोपद्रवे ४६८ हत्याः, ५९४१ प्रकाशचौर्याणि ३५ अग्निकाण्डानि च समभवन्। एर्नाड-तालुकास्थाने ३२० संख्यातोऽधिकानि हिन्दू-मन्दिराणि ध्वस्तानि। ९०० संख्यातोऽधिका हिन्दवश्च बलाद् विधर्मीकृताः।

सम्प्रति मालापुरेऽस्मिन् न भूस्वामिनामत्याचाराः, नापि विदेशीय-शासनविरुद्धं सङ्घर्षस्य काऽपि समस्या। तथापि मुसलिमलीगस्य प्रार्थनयेदं पृथक् मण्डलं सङ्घट्टितमस्ति। केरलस्था नक्सलवादिनः किमिदं नवसङ्घटितं मण्डलमिदं स्वाक्रमण स्थायि आश्रयपदं न विधास्यन्ति ?

पञ्जीकृत संख्या – एल० १८९७

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगत्गंज, वाराणसी।**

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य
मासिकं मुखपत्रम्

वर्षम् ४५

अङ्कः ८

सम्पादकः
गो० न० नैजापुरकरः

अगस्त
१९६९

वार्षिक-मूल्यम्
५) रूप्यकाणि

प्रत्यङ्क-मूल्यम्
अर्धरूप्यकम्



## संस्कृत-गीतिः

★

संस्कृतेऽस्तु सदाऽनुरागः !
वेदपारङ्गतैर्विप्रै - र्गीयतां मृदु सामरागः ।
संस्कृतौ हि विदेशजायां जायतां तरसा विरागः ॥
पुनर्ज्ञान - विवेकभक्ते - रुल्लसेज्जगति प्रयागः ।
भावनाभरितेन मनसा पुनः क्रियतां सोमयागः ॥
विधीयेत सुखाय लोके स्वर्गतोऽभिनवो विभागः ।
नैव कश्चित् पीडयेदिह मानवीयं किञ्चिद्रागः ॥
प्रीणयेज्जनमानसं बुधवचनकुसुमोद्भवपरागः ।
भवे भूयो भवतु भव्यो भारती-भव-भूरि-भागः ॥

—श्री ओङ्कारप्रसाद त्रिपाठी

# संस्कृत-दिवसः

संसदीय संस्कृतपरिषदोऽध्यक्षाणां डॉ० कर्णसिंह महाभागानां (केन्द्रीय-पर्यटन-नागरिको ड्डयन-मन्त्रिणाम्) साभापत्ये विगत-सप्तमाप्रैलदिनाङ्के सम्पन्नेऽधिवेशने निर्धारितमभवत् यत् श्रावणपूर्णिमा-दिने (२७ अगस्त, १९६९) अखिले भारते संस्कृत-दिवसस्य समायोजनं विधीयेत। प्राचीनकाले वेदाध्ययनारम्भरूपेणायं दिवसः समायोज्यते स्म। संस्कृत-प्रचार-दृष्ट्या इदमायोजनं सर्वस्य कर्तव्यमिति परिषन्मन्त्रिणा साग्रह सूचितम्। तदनुसारमस्मिन् वर्षे नवेन भारते दिवसोऽयं महता समारोहेण समायोजितोऽभवत्।



# अनुक्रमः





# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षे ] वाराणसी, श्रावणः २०२६ : अगस्त १९६९ ई० [ ८ अङ्कः


## कवीन्द्र-कुलदैवत-स्तुतिः

उदार-करपल्लवोल्ललित-वल्लकीवेल्लितैः, स्वरैर्जनमनोहरैः सपदि काञ्चिदुच्चावचाम् ।
चमत्कृतिरसाञ्चितां मुदमुदञ्चयन्मानसीं, कवीन्द्रकुलदैवतं हृदि चकास्तु दिव्यं महः ॥ १ ॥

विदेकरसपुस्तक-स्फटिकमाल्यपाशाङ्कुशान्, दधत्करतलैः शरच्छशधर - प्रभा - भासुरम् ।
अवाङ्मनसगोचराऽनुपमवैभवं चिन्मयं, कवीन्द्रकुलदैवतं हृदि चकास्तु दिव्यं महः ॥ २ ॥

मतिं विमलयन् मनोमलिनिमानमुन्मूलयन्नतिं कलयतां कलाकुशलतां समुन्मीलयत् ।
कवित्वपदवीं भृशं विशदयत् पुमर्थान् दिशत्, कवीन्द्रकुलदैवतं हृदि चकास्तु दिव्यं महः ॥ ३ ॥

प्रकल्प्य हृदयान्तरे विषयसन्निवृत्तं मनो यदत्र विरला नरा नयनगोचरं तन्वते ।
महामहिमसद्म तत् सहजसौभगोद्भासितं कवीन्द्रकुलदैवतं हृदि चकास्तु दिव्यं महः ॥ ४ ॥

ध्रुवं सुकृतवैभवात् सरसमास्यरङ्गे सतां पदक्रममनोहरं किमपि लास्यमत्यद्भुतम् ।
ततं यदिह सन्तनोत्यतितरां गिरां धाम तत् कवीन्द्रकुलवैभवं हृदि चकास्तु दिव्यं महः ॥ ५ ॥

यदीयकरुणोन्मिषद्-विशदशेमुषीभूषिताः, सुखेन कथयन्ति ते सरसरीतिमन्दा अपि ।
अमन्दरसतुन्दिलं किमपि तन्मुदां मन्दिरं कवीन्द्रकुलदैवतं हृदि चकास्तु दिव्यं महः ॥ ६ ॥

सुधामधुरिमा - ऽधरीकरणधुर्य - सारस्वत - प्रवाहपरिवाहितै - र्नवनवै रसैः संभृतम् ।
विपश्चिदभिवन्दितं सहृदयैश्च सम्मानितं कवीन्द्रकुलवैभवं हृदि चकास्तु दिव्यं महः ॥ ७ ॥

प्रगल्भरचनागुणै - रुपचितै - र्वचोभूषणैर्भृतं विरहितं रसापहृतिकारणैर्दूषणैः ।
परामृतरसास्पदं सुकृतिमात्रलभ्यं पुनः कवीन्द्रकुलदैवतं हृदि चकास्तु दिव्यं महः ॥ ८ ॥

—स्वर्गीयाः श्री अनन्तरामशास्त्रि वेतालाः—

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

—स्वर्गीयाः श्री विन्ध्येश्वरीप्रसाद शास्त्रिणः—

सज्जनाश्च सुधियः पुरस्कृता दुर्जनास्तु कुधिय-स्तिरस्कृताः ।
सम्भवेयुरिह भारते यदा स्यात् समाजबलवर्धनं तदा ॥ ६१ ॥

६२. दण्डनीतिमनुसृत्य चाधमा
मध्यमास्तु परितोषलोभतः ।
पालयन्ति विधिमुत्तमं नराः
शास्त्रदर्शितपथेन यान्ति च ॥

६३. उत्तमाः कमपि हेतुमन्तरा
धर्म-मार्ग-निरताः स्वभावतः ।
सम्भवन्ति परमार्थ-साधका-
स्ते समेऽपि समयन्ति सत्पथे ॥

६४. अन्नसत्र - सुरमन्दिरालय-
स्तीर्थ-धर्म - मठ-पाठनालयाः ।
भारतेऽत्र विलसन्त्यसंख्यका-
स्तन्नियन्त्रणमरं विधीयताम् ॥

६५. चेतसां तु सदसत्प्रभावतो
मन्दिर-स्थित - सुपर्वसेविनाम् ।
वर्धते हसति चापि दैविकी
शक्तिरेव किल शास्त्रनिर्णयः ॥

६६. तत्समस्त-सुरपूजकैः सदा
भाव्यमत्र भुवि सत्त्ववृत्तिभिः ।
पारमेश्वर-दया तदैव भोः
भारतीय-जनतासु सम्भवेत् ॥

६७. धर्मपीठ-शत-संस्थिता ध्रुवं
साधवः परमधार्मिकाः सदा ।
भारतीय - नगरेष्वटाटचया
वर्धयन्तु नरधर्म-भावनाम् ॥

६८. धर्मरक्षणकृते तु भूसुरैः
साधुभिश्च दययाऽन्वितैरपि ।
धार्यतां विपुलमास्त्रिकं बल-
मित्युवाच भगवान् मनुः स्वयम् ॥

६९. आर्यजाति-वनितासु वर्ण्यतां
सत्पतिव्रतपरा शुभा रुचिः ।
यत्कृपां समधिगत्य सर्वदा
हिन्दुजाति-रियमत्र जीवति ॥

७०. यत्यतां निजसमाज-सङ्कटे
पत्यतां भरतभूमि - रक्षणे ।
नीयतां सुरगवी - समुन्नतिं
हीयतामसुर - सङ्गतिः सदा ॥

७१. चाल्यतां प्रबल-पञ्चकायता-
रीति-रद्भुततमाऽद्य भारते ।
पाल्यतां स्वविहिता प्रतिश्रुति-
र्लल्यतां दलित-देशबन्धुता ॥

पञ्चायतेन विधिना समनुष्ठितेन सम्मेलनेन निजधर्म-महासभायाः ।
संस्थापनं प्रतिविधेः सकलार्यजातेरावश्यकं हितमुदीर्य यतिर्व्यरंसीत् ॥ ७२ ॥

॥ इति श्री महर्षि-ज्ञानानन्दचरिते चतुर्दशः सर्गः ॥

कामराज-योजनया तेषां प्रतीपता नियन्त्रिता। श्री कामराजेन स्वोन्नमयितुः कथमपि प्रत्युपकृतिः प्रदर्शिता। सम्प्रति श्री निजलिङ्गप्पा महोदयाः कांग्रेसाध्यक्षपदमलङ्कुर्वन्ति। तथाकथित-विप्रतीपा नेतारश्च सक्रियाः। स्वयमपि ते कृतकृत्याः परिष्कृताश्च राजनयिका वर्तन्ते। प्रधानमन्त्रिणोऽपि स्वीयपितृवत् निर्नियन्त्रितं प्रभुत्वं वाञ्छन्ति। सर्वेषामेषां दुश्चक्राणामेकत्र सङ्गमनेनैव देशस्य साम्प्रतिकी राजनैतिकी स्थितिः प्रतिफलिता।

प्रधानमन्त्रिणामेतादृशी एव निर्नियन्त्रिता महत्त्वाकाङ्क्षा चेत्, तासां कर्तव्यमासीत् यत्पूर्वं कांग्रेसाध्यक्षा एव स्वपदात् च्यावनीयाः, स्वपक्षीयं स्वयमात्मानं वा तत्पदे नियोजनीयम्। ततः परं पूर्वमनोनीतस्य कांग्रेसीय - राष्ट्रपतेरन्यथाकरणेन नवीन - मनोनीत - राष्ट्रपतेः घोषणं भाव्यम्, स च विजयाश्रिया समलङ्करणीयश्च। किन्तु वैधानिकममुं पन्थानं परित्यज्य तैरद्य यः पन्थाः समाश्रितः, स कथमपि वैधानिको दलीयप्रतिष्ठाकरो वा न वक्तुं शक्यः। नूनमत्र विषये प्रधानमन्त्रिभिरविवेकपूर्णमेव पदं न्यस्तम्।

यत्किमप्यस्तु। वर्ततेऽयं सकृद्दर्शने दलगतः प्रश्नः। अस्माकं पुनः सर्वथा सांस्कृतिकमेव लक्ष्यम्, न राजनीतिः। तथापि यदा शासनं वैधानिकतां परित्यज्य अवैधानिके पथि दत्तपदं भवति, तेन च बहु अनर्थजातं संभाव्यते, कामं केनापि ऐन्द्रजालिकेन समागत्य गतिरोधोऽयं कथञ्चन दूरीक्रियेत नाम (यद्धि अघटितघटनापटीयसो विश्वेशितुः इच्छया कथमपि असम्भवं न वक्तुं शक्यम्)—सर्वमेतत् अनादिकालतः आदर्शराष्ट्रायितस्य भारतराष्ट्रस्य कृते परं खेदास्पदम्, प्रतिष्ठाहानिकरञ्च। प्रतिवेशिनां राष्ट्रद्वेषिणां च कृते प्रवेशावसराधायकम्। अत एव भारतराष्ट्रस्य विशुद्ध-तटस्थनागरिकस्य प्रत्येकस्य कर्तव्यं यदियं दुस्थितिर्यथा अविलम्बं परिह्रीयते, तथा प्रयतनीयं विचारणीयञ्च। अतो वयं नवनिर्वाचित-भारतराष्ट्रपतीन् सादरं प्रार्थयामो यद् भवद्भिरस्य सङ्कटस्य निवारणाय स्वीयदीर्घानुभवेन प्रयतनीयम्। अवसरस्यास्य लाभं गृहीत्वा भारते दलनिरपेक्षं सुयोग्य-समुदार-राष्ट्रभक्तजनैः सञ्चालितं च शासनं स्थापनीयम्। तेषां विशेषाधिकारस्यायं सर्वथा समुचितोऽवसरः। संविधानदृष्ट्या तदधिकारनियोजनेन भवन्तो भारतीयं शासनं सर्वथा संवैधानिकं विदधतु। वयं सर्वे भारतीयाः संविधानचरणेषु विनम्रा इति च सर्वेभ्यो विश्वराष्ट्रेभ्यः प्रदर्शयन्त्विति तेभ्यः साग्रहं निवेदनम्। अन्ते भगवन्तं सान्नपूर्णा-गणेश्वरं विश्वेश्वरं प्रार्थयामो यदस्माकं राष्ट्रे समापतितां विपत्तिं दूरीकर्तुं राष्ट्राध्यक्षान् राष्ट्रजनांश्च सद्बुद्ध्या योजयन्त्विति।

लेखसमाप्तेः परं नवनिर्वाचित - राष्ट्रपतिभिः पदग्रहणं कृतम्। तेषां राष्ट्रसन्देशेऽपि अनुशासनपालने एव सर्वथा भर आसीत्, राष्ट्रसेवकरूपेण तन्निर्वहणाय तैः प्रतिज्ञातमपि। एवं यथाऽस्माभिः पूर्वं शङ्का प्रकटीकृता, भगवतः कृपया केनापि ऐन्द्रजालिकेनाऽऽगत्य साम्प्रतिको गतिरोधः कथञ्चन दूरीकृतः। सन्तोषास्पदमेतत्, तथापि एतत्सर्वं न सर्वथा परस्पर-स्वार्थप्रेरणाविहीनम्, ऐकान्तात्यन्तिकं राष्ट्रहितभावनाप्रसूतञ्च। तथा स्थितिस्तु दलनिरपेक्षशासनेनैवात्र प्रभवेदित्यस्माकं द्रढीयान् विश्वासः। अतः पुनरपि नव-राष्ट्रपतीनत्रावधातुं सप्रश्रयं निवेद्यते।

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

आत्मसृष्टौ तु तदात्मानं स्वयमकुरुते इत्यादि-श्रुतिरीत्या परमानन्दघनस्य भगवत एव रस-तदालम्बनद्वय-तदुपकरण-तदधिष्ठान-दिव्यधामादि-रूपेण प्रादुर्भावः। तत्र सामान्यसृष्टाविव मायावरणं न भवति। तेन आत्मसृष्टौ सर्वस्यैव परमानन्दरूपता, तथापि रसशास्त्रमर्यादया रसपोषणार्थं योगमाया-मयमावरणं स्वेच्छया उररीक्रियते, यथा भङ्गादि-पानेन विनोदार्थं स्वेच्छया स्वात्मविस्मृतिरिष्यते तद्वत्। अन्यथा भगवतः स्वामिनीनाञ्च सर्वनैर-पेक्ष्येण स्वात्मतृप्तौ परस्परापेक्षानुपपत्तौ लीला-सौरस्यानुपपत्तिश्च स्यात्। अत एव व्यतनोद् **वैष्णवीं मायां पुत्रस्नेहमयीं विभुः** इत्यत्रापि स्वेच्छामय्या वैष्णव्या मायया स्वभक्तानां स्वरूपादि-विषये रसविशेषानुभवार्थं व्यामोहवितानम्।

भगवान् सर्वाधारः सर्वप्रकाशकः सर्वहेतुश्च स्वप्रतिष्ठित एव, सर्वाधारस्य अन्याधारत्वानुपपत्तेः। अत एव पूर्वोक्तरीत्या भगवद्धाम्नो व्रजस्य पूर्णा-नुराग-रससार-सरोजरूपत्वमुक्तम्। तत्रापि योग-मायामय-प्रावरणाङ्गीकारेण सम्भोग-विप्रलम्भादि-रसादिभेदोपपत्तिः।

स्वात्मसृष्टावपि व्रजस्थ-सरित्-सरो-महीधर-सरोज-वनराजि-मृग-विहङ्गादिषु भगवत्सङ्गेन देव-भोग्य-तदधरामृतादिसंसर्गेण च दिव्यरसात्मभावः। व्रजभक्तेषु भगवद्भोग्याऽधरामृतसञ्चारादिना च दिव्यस्त्रीभावः। अत्र सर्वत्र निखिलरसामृतमूर्तौ भगवति रसात्मकेषु भक्तेषु तदुपकरणेषु रसात्म-केष्वेव रसाविर्भावः। उद्बुद्धोद्वेलित-सम्प्रयोग-विप्रयोगात्मकोभयविध-शृङ्गाररस-सारसर्वस्वभूते भगवति च तदुभयविधशृङ्गारस्य उद्बोधः।

तत्र तादृशो भगवान् धर्मिरूपो धर्मसहितश्च। केवलो विप्रलम्भ-रसभावरूपो द्वितीयश्च संभोग-शृङ्गार-रसभावरूपः। उभयत्रापि आलम्बनविभाव-द्वयोद्दीपनानुभावसञ्चारिभावादिसर्वोपकरणविशिष्टो रसरूपो भगवान् व्यज्यते। पूर्वत्र भाव्यमानविशेषणः, अपरत्र च सुव्यक्तविशेषणः। तादृशो भगवान् तादृश-श्रीकृष्ण-रूपेण कारणेन स्वामिनीषु उद्बुद्धः तद्वि-षयो रत्यादिस्थायीभावः, चन्द्रिका-वंशीनिनादादि-भिरुद्दीपितः, अश्रुपातादिभिः कार्यैरनुभावैः प्रत्या-यितः, व्यभिचारिभिरुत्कण्ठादिभिः पोषितश्च व्यज्यते। अस्य लौकिकत्वेऽपि नाटचकाव्यादिदृष्ट्या विभावादीनामलौकिकत्वाद् अलौकिकत्वमेव। अभिनेय-श्रोतव्य-सभ्य-श्रोत्रभेदानुसन्धानेन तद्भि-भेदतिरोधानेन वा सभ्यादिगतः साश्चर्यमनुभूयते। यद्वा—तैरेव संभूय प्रादुर्भावितेन अलौकिकेन साधारणीकरणादिव्यापारेण तत्कालनिर्वर्तिता-ऽऽनन्दांशावरणाज्ञानेन प्रमुष्टप्रमातृत्वादिनिजधर्मेण स्वप्रकाशतया परमानन्दरूपेण साक्षात्क्रियते।

एवमेव श्रीकृष्णे स्वामिनीविषयको रत्यादिः पूज्यत्वातिशयात् निषेधविषयत्वाच्च असाधारणी-करणाद्यभावेन श्रोत्रादिषु भावरूपो रत्यादिरेव व्यज्यते। प्रपञ्चसृष्टौ वासनादिरूपो रत्यादिको विभावादिभिः स्वप्रकाशरसवैशिष्ट्यरूपेण स्वप्रकाश-परमानन्द एव वा विभावादिसंवलितत्वेन भासते। स्वात्मसृष्टौ तु उभयनिष्ठा वासनाऽपि रसस्वरूपैव। रससारसर्वस्वरूपे भगवति स्वामिनीषु चान्यादृशस्य वासनापदार्थस्यासत्त्वात्।

(क्रमशः)

# वैदिकाऽवैदिक-दर्शन-मीमांसा

**—श्री जगन्नाथ श्रीधरशास्त्री पदे—**

एवञ्च आर्तो नाम विज्ञानमयकोशस्थो नित्यसत्त्वस्थः सिद्ध्यति। **सत्त्वात् सञ्जायते ज्ञानम्** (गी० १४. १७) इति सञ्जातात्मतत्त्वज्ञान इति यावत्। आत्मैकत्वज्ञानस्य दृढीकरणार्थमेव विज्ञानमय-कोशस्थानां महत्तत्त्वम्, अहङ्कारः, तन्मात्रपञ्चकं चेति सप्तपदार्थानां त्रैगुण्येन साकमात्मनोऽन्यताख्यातिप्रख्यापनार्थं सर्वैः कल्पसूत्रकारैः एकविंशतिसंस्कारा उक्ताः। तत्र तमोगुणापवर्जनाय अष्टका, पार्वणः, श्राद्धं चेत्यादि-सप्तपाकसंस्थाः। रजोगुणापवर्जनाय अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चेत्यादि सप्तहविर्यज्ञसंस्थाः। सत्त्वगुणापवर्जनाय अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः इत्यादि-सप्तसोमसंस्थाः। एवमत्र एकविंशतिसंस्कारैः विज्ञानमयकोशात् आऽऽनन्दमयकोशम् आर्त उपसङ्क्रामति।

आत्मज्ञानेन साकमेव अन्तर्यामित्वेनावस्थितस्य चोदनालक्षणस्य परमात्मनो ज्ञानमनुमानेन भवतीति आर्तोऽपि परमात्मानं भजते। महायज्ञैश्च यज्ञैश्च परमात्मानं सन्तर्पयति। तथा चोक्तं मनुना—

**स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।**
**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥**
(मनु० २.२८)

गुणातीतानामेव अन्तर्यामित्वेन परमात्मदर्शनं सम्पद्यत इति दर्शनानन्तरमेव तस्य लक्षणं सामान्यधर्मान् विशेषधर्मांश्च ज्ञातुं साधकः प्रवर्तते इत्यत्रैव ब्रह्मजिज्ञासोदय इति जिज्ञासुरयम्। तथा च श्रुतिः—

**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो**
**मन्तव्यो निदिध्यासितव्यः।**
(बृह० उ० २.४.५)

इति आत्मदर्शनानन्तरमेव तस्य तत्त्वज्ञानार्थं श्रवणं मननं निदिध्यासनं च श्रुतिर्विदधाति। धर्मिज्ञानात् प्राक् तस्य धर्मजिज्ञासाऽशक्यप्रायैव।

अस्य जिज्ञासोरन्तर्यामिणः चोदनानुसरणमेव धर्मः। कामचाराभावाद् ईश्वरेच्छानुसारमेव क्रियासु प्रवृत्तिरित्यत्र कर्मसंन्यासः। स्वेच्छया क्रियाप्रवृत्तेरभावात् **करिष्ये वचनं तव** (गी० १८.७३) इत्येवात्र भूमिका। अयमेव भक्तियोगः सप्तमाध्यायमारभ्य द्वादशाध्यायपर्यन्तमुक्तः। सर्वभावेनात्र शरणं गच्छति योगी। तथा हि—

**तमेव शरणं गच्छ सर्वभावेन भारत।**
**तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥**
(गी० १७.६२)

एवञ्च आर्तो विज्ञानमयः, जिज्ञासुः पुनश्चिन्मयः।

जिज्ञासोर्जिज्ञासाविषय एवार्थो भवतीति ब्रह्मैवार्थः। तस्मादर्थार्थी ब्रह्मार्थी भवति। सगुणेन ब्रह्मणा साकमेकत्वं गच्छति। आनन्दमयः सम्पद्यते। अस्यां भूमिकायां धर्मस्थापनमेव धर्मः। अयमेव कर्मयोगः षष्ठाध्यायपर्यन्तमुक्तः। उच्चयोगी **सर्वभूतानि चात्मनि** (गी० ६.२९) पश्यति, विश्वरूप ईश्वरो भवति।

एकत्वं गतो योगेश्वरः समाधौ निरुपाधिकेन ब्रह्मणा एकत्वं गच्छति तदाऽद्वितीयत्वं प्राप्नोति, ब्रह्ममयः सम्पद्यते। व्युत्थाने पुनरेकत्वमाप्नोति।

(शेषांशः १८० पृष्ठे)

# महाकवेः श्रीहर्षस्य कालनिर्णय-विषये किञ्चित्

—श्री व्रजवल्लभद्विवेदो दर्शनाचार्यः—

[ व्याख्याता—योग-तन्त्रविभागस्य, वा० सं० वि० वि० वाराणसी ]

श्रीमतो डाक्टर गजाननशास्त्रि मुसलगांवकरस्य "महाकवेः श्रीहर्षस्य कालनिर्णयः" इति शीर्षको निबन्धः 'सूर्योदय'पत्रस्य विगतेऽङ्के प्रकाशितः सावधानमधीतोऽस्माभिः। न वयम् इतिहासचणा इति कस्य नृपतेः समसामयिकः श्रीहर्ष इत्यत्र न किमपि वक्तव्यमस्माकम्। किन्तु निबन्धेऽस्मिन् काश्चन असङ्गतय इव प्रतीयन्ते। तत्परिहारायैव समुद्यमोऽयमस्माकम्। क्षमापनपुरस्सरं लेखक-महोदया विद्वांसश्च प्रार्थ्यन्ते याथातथ्य-विवेचनाय।

वयमत्र नैषधटीकाकारस्य चाण्डुपण्डितस्य टीकारम्भे—"प्रथमं तावत् कविर्विजिगीषुकथाभिः स्वपितृपरिभावकम् उदयनमत्यमर्षणतया कटाक्षयं-स्तद्ग्रन्थग्रन्थीनुद्ग्रथयितुं खण्डनं प्रारिप्सुश्चतुर्विध-पुरुषार्थैरभिमानमवधीर्य मानसमेकतानतां निनाय" इमामुक्तिम्, राजशेखरस्य च "श्रीहर्षः शास्त्रार्थे स्वपितुर्हीरस्य विजेतारं पण्डितं पुनः स्वयं शास्त्रविचारे स्वबुद्धिविभवेन जित्वा स्वपितुर्वैरं निरयाययत्" इत्युक्तिं च लेखकमहोदयैः प्रमाणत्वेन समुद्धृतामङ्गीकृत्यैवात्र प्रवर्तामहे।

चाण्डुपण्डितस्य राजशेखरस्य चात्रोद्धृताभ्यां वचनाभ्यां श्रीहर्षापेक्षया उदयनाचार्यस्य वृद्धत्वं निर्विवादतया सिद्ध्यति। उदयनाचार्येण च वाच-स्पतेस्तात्पर्यटीकायाः परिशुद्धिनाम्नी टीका निर-मीयत। अतो वाचस्पतेस्ततोऽपि वृद्धत्वमायाति। अत्र च लेखकमहोदयेन "श्रीहर्षप्रणीत-खण्डन-खण्डखाद्यस्य खण्डनरूपस्य खण्डनोद्धारग्रन्थस्य रचयिता वस्तुतः षड्दर्शनटीकाकारो वाचस्पति-मिश्रश्चेत् तेनापि स्वरचिते 'न्यायसूचीनिबन्ध'ग्रन्थे कथं तद्रचनाकालः ( शक ८९८, सं० १०३३, सन् ९७६ ) स्वयमङ्कितः, प्रश्नोऽयं स्फुटं जागर्ति। तथा हि—

> न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे।
> श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे॥

एवञ्च एतत्पूर्वकालवर्तित्वस्य अवश्यमभ्युपेयत्वेन नवम-दशमशताब्द्योरान्तरालिकः श्रीहर्ष इति निश्चिनुमो वयम्" ( पृ० १६०-१७१ ) इत्येवं श्रीहर्षस्य वाचस्पत्यपेक्षयाऽपि प्राचीनत्वं समसाधि। तन्न रोचतेऽस्मभ्यम्; यतो हि षड्दर्शनटीकाकारो वाचस्पतिर्नहि खण्डनोद्धारग्रन्थस्य रचयिता, अन्य एव पञ्चदशशताब्दीभवो वाचस्पतिमिश्रः खण्डनोद्धारग्रन्थं निर्मिमायेति जानन्त्येव विद्वांसः। 'चेत्'-पदेन निबन्धकारस्यापि अस्वारस्यमिव तत्र प्रतीयत एव। अतो न खण्डनोद्धार-प्रामाण्येन श्रीहर्षस्य भामतीकारवाचस्पतिमिश्रापेक्षया प्राची-नत्वं संसाधनीयम्। अपि च, न्यायसूचीनिबन्ध-रचनाकालो वाचस्पतिमिश्रेण शकसंवत्सरेषु विक्रम-संवत्सरेषु वा सूचित इति विषये विवदन्ते इति-हासविदः। अप्रासङ्गिकतया तद्विषये नात्र किमपि वदामः।

उदयनाचार्यकृत-लक्षणावलीस्थेन—

> तर्काम्बरार्कप्रमितेष्वतीतेषु शकान्ततः।
> वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्॥

अनेन पद्येन लेखकमहोदयस्य उदयन-वाच-स्पत्योः समसामयिकत्वं सिसाधयिषितमिव प्रति-भाति। अत्र स्पष्टं शकसंवत्सरेषु लक्षणावली-रचनाकालः प्रदर्शितः। न्यायसूचीनिबन्ध-रचना-

वा त्वचो निष्कास्य बालकाय सारतत्त्वं भोजयति। परं गूढमिदं श्रवणरहस्यं तर्ककुमारस्य बुद्धौ समारोढुमशक्यमेव। अत एव स मनुते स्म यत् श्रद्धायां दृश्यमाण: श्रवणानन्दो नूनमज्ञानजन्य एव। तथापि तन्मन इदमपि विचारयन्नासीत् यत्काम श्रद्धाया अयमानन्दः अज्ञानजन्य एव स्यात्, यदि शुद्धानन्दो मिलति चेन्मम ग्रन्थीयज्ञानापेक्षया इदमशिक्षितमज्ञानमेव किमनुचितम्? किन्तु विचारोऽयं कदापि स्थैर्यं न भजति स्म, नापि च बुद्धौ सर्वथा आरोहणमाप्तवान्।

एकदा तेनोक्तम्—"श्रद्धा देवि! ये ग्रन्थास्त्वं वाचयितुं कथयसि, बहुश्रुतं सुशिक्षितं चापि मां तेऽतितरां रूक्षाः प्रतीयन्ते। सत्येवं सर्वथाऽशिक्षिता त्वं तान् कथमवगच्छसि, कथञ्च तैस्ते एतावानानन्दो जायते?" इति।

श्रद्धया समाहितेन चेतसा समुत्तरितम्—"नाथ! सत्यमेव वक्तव्यं चेन्मम कृते इदानीं किमपि नव्यं ज्ञातव्यं नावशिष्यते। यथा अन्धत्वेन मे दर्शनविषयः समाप्तस्तथैव वस्तुतः श्रावणविषयोऽपि परिसमाप्त एव। बाल्ये तातपादानां श्रीमुखाद् यन्नैकवर्षाणि यावत् श्रुतम्, तदधिकं श्रोतव्यं नावशिष्यते। मदीये बालभावे महतां कृपया य आनन्दलाभो जातः, स एव श्रवणकाले विभिन्नग्रन्थानां गूढसङ्केतैः द्विगुण इव जायमानः प्रतिभाति। किन्तु आनन्दोऽयं श्रवणेन बाह्यत अन्तर्नायाति, प्रत्युत आन्तरिकमेव आनन्दं समुद्वेलयितुं श्रवणमिदं जलतरङ्गान् प्रेरयितुर्वायोरिव निमित्तमात्रं जायते। एतावदेव तत्त्वम्!"

श्रद्धयाऽग्रे उक्तम्—"आर्यपुत्र! मे पुण्यस्मरणीयास्तातपादाः सदैव विषयेऽस्मिन् महाराष्ट्रीयसन्तशिरोमणीनां श्री ज्ञानेश्वर महाभागानां कतिपयानि पद्यानि गायन्ति स्म। तानि च मयाऽपि कण्ठस्थीकृतानि। श्रूयताम्, नूनं भवतामपि तोषाय भवेयुः—

हें असो तथां बोलांचीं ताटें भलीं। वरी कैवल्य-रसें वोगरलीं॥
हो प्रतिपत्ति मियां केली। निष्कामासी॥
आतां आत्मप्रभा नित्य नवी। तेचि करोनि ठाणदिवी॥
जो इन्द्रियांतें चोरूनि जेवी। तयासीचि फावे॥
तेथ श्रवणाचेनि पांगें। वीण श्रोतया व्हावें लागे॥
हे मनाचेनि निजांगें। भोगिजे गा॥
अहाच बोलाची वालीफ फेडिजे। आणि ब्रह्माचियाचि आंगा घडिजे॥
मग सुखेंसी सुरवाडिजे। सुखाचिमाजि॥
ऐसें हळुवारपण जरी येईल। तरीच उपेगा जाइल॥
येन्हवीं आघवी गोष्टी होइल। मुकया बहिरयाची॥

(ज्ञानेश्वरी, अ० ६, ओवी २२–२६)

(अर्थात् 'उक्तीनामासां महत्तराः स्थालीः प्रकल्प्य तासु मोक्षरसं परिवेश्य निष्कामजनेभ्यो ग्रन्थरूपमिदं महद्भोजनं दीयते। महाभोजनेऽस्मिन् प्रकाशाय नित्यं नवामात्मज्योतिं दीपकत्वेन परिकल्प्य तत्प्रकाशे इन्द्रियैः संगोप्य यो भोजनमिदं भोक्ष्यति, तस्मै एव तल्लभ्यं भवेत्। अत्र श्रोतृभिः श्रवणकरणभूतान् कर्णान् परिवर्ज्य मनसैव तदुपयोगः कार्यः। वचनरूपां त्वचमादौ निष्कास्य उक्तेर्लक्ष्ये ब्रह्मणि तद्रूपो भूत्वा, पुनः सुखेनैव सुखस्य माधुर्यमनुभवनीयम्। यदा मन एतावत् सूक्ष्मं स्यात्तदैव समुपयोगो भवेत्। अन्यथा सर्वा वार्ता मूकेन प्रोक्ता बधिरेण च श्रुतेव भवेत्।')

श्रवण-रहस्यविषयकम् अन्धश्रद्धाया इदं संक्षिप्तं निरूपणं तर्ककुमाराय निर्युक्तिकम् असम्बद्धप्रायमिव च प्रतीतम्। 'छाया-प्रकाशवत् अन्धश्रद्धा-समञ्जसतयोश्च विरुद्धयोरेकत्र समावेशः कथङ्कारं स्यात्? यद्धि वस्तु मम बुद्धावपि नारोहति, तदिदं सर्वथा अज्ञा भावुका अन्धश्रद्धा कथं जानीयात्?' इत्यनया पूर्वधारणयाऽभिभूतस्तर्क

पूर्वतोऽनुवृत्तम्—५०

# क्षत्रपति-महाकाव्यम्

## —श्री उमाशङ्करशर्मा त्रिपाठी—

।। अथ एकोनविंशः सर्गः ।।

[ अस्मिन्नन्तिमे सर्गे शिवनृपस्य लोकशासन-व्यवहारविधिः, अनुशासन-रक्षा, न्यायविवेकः, पराक्रमः, समुद्योगादयो वर्णिताः । नेतिहासघटनामतिक्राम्यति, अपलपति, अन्यथा वा प्रस्तौति काव्यमिदम् ।—लेखकः ]

नित्यसेवाव्रतस्थस्य लोकानिव वनस्पतीन् ।
बिभ्रतो भूभृतस्तस्य गुरुतामाप लाघवम् ॥ १ ॥

योषिते शूरनारीत्वं मात्रे वीरप्रसूपदम् ।
भियोऽरये ऽभयं भूम्यै तद्भटो निहतोऽप्यदात् ॥ २ ॥

यदौरसेऽप्यवर्त्मनि प्राभवत् तन्नयाऽऽग्रहः ।
तदुद्घोष इवाऽन्येषामक्षताऽऽजीववर्तने ॥ ३ ॥

निर्विशेषाऽऽत्मसम्भारमनुषङ्गश्रियैव तम् ।
प्रजानाथं प्रजाः सर्वाः विदुस्तारा: विधुं यथा ॥ ४ ॥

कोशदोषावलेपान्धदर्शनान् मूढचेतसः ।
नृपान् भानुरिवैकोऽसौ दर्शयामास पद्धतिम् ॥ ५ ॥

प्रजाकरग्रहस्तस्मिन् धुरं वोढुं महीयसीम् ।
त्रिवर्गपरिपोषाय तेने नवमनोबलम् ॥ ६ ॥

तुरुष्काधिपतेश्चित्ते दिशताऽधिनवोदयम् ।
येन मूर्ध्नीव हस्ताहेः हठमारोपितं पदम् ॥ ७ ॥

सः प्रमादमनभ्यासात् तन्द्रारागं वपुश्श्रमात् ।
स्वदेशाराधनाद् दैन्यमपानयदहर्निशम् ॥ ८ ॥

विभवं श्लाघ्यदानेन धर्मरागेण यौवनम् ।
प्रभुतामार्जवेनार्यो युक्तधीः समसेवत ॥ ९ ॥

दण्डयन्नपि निर्वैरो मानयन्नपि निस्स्पृहः ।
स्वस्थो हि निर्जितोऽप्याजौ नोन्ममाद जयन्नपि ॥ १० ॥

संस्पृशन्नेव यः पूर्वं दासप्रायान् मिथोऽसहान् ।
संश्चकार महाराष्ट्रान् रक्षितुं देशगौरवम् ॥ ११ ॥

राजस्थाने सशक्तेऽपि दिल्लीशपदचुम्बिनि ।
सिंहसूनुरिवैको यः साधिक्षेपमुदैक्षत ॥ १२ ॥

दिल्लीपतियशोध्वानमात्र - सम्पूरितश्रुतिः ।
यस्य मेघस्वनारम्भे दिङ् मयूरीव नर्तिता ॥ १३ ॥

आर्यजातिचिताभस्मपूरितं विन्दतां नभः ।
केवलं यज्जयोद्घोषैर्मनो विस्मापितं हठात् ॥ १४ ॥

विमुक्ताऽऽजीवचिन्तानां ब्रह्मणामभितो गृहम् ।
अपि मन्दाः श्रुतज्ञेषु तेनुरभ्यासविस्मयम् ॥ १५ ॥

सर्वशास्त्रेषु शस्त्रेषु सहजालोकचक्षुषः ।
अग्रजन्मप्रथां निन्युः द्विजाश्चारित्र्यजीविनः ॥ १६ ॥

तिमिराच्छन्नवपुषां स्वभावाविष्करं महः ।
तेनतुः सर्वलोकानां दिवि भानुर्नृपोऽवनौ ॥ १७ ॥

गुणकर्मप्रतिष्ठेन वर्त्मना भावयन् प्रजाः ।
विधिकल्पो विधिज्ञोऽसौ महीं चक्रे महीयसीम् ॥ १८ ॥

अतिक्रान्तसदाचाराः तन्मुखावेक्षणाक्षमाः ।
प्रायशो ह्रीहतात्मानो जहुराशु धरां स्वयम् ॥ १९ ॥

अभीतमनसोऽपश्यन् स्त्रियः शीलव्रतोद्यमाः ।
अनन्तरायभूयिष्ठाः दिशः सर्वाः शिवाऽवनौ ॥ २० ॥

आतिथ्यमातिथेयस्य निगडार्हानरीनपि ।
वृतसन्धानिव प्राणैराग्रहीत तन्निषेवितुम् ॥ २१ ॥

वर्तमानः स्वधर्मेषु साधुचेताः परेष्वपि ।
अनेकपथनिर्दिष्टं तमेकमविदन्नृपः ॥ २२ ॥

---

कुमार इदमेव भावयन्नासीत् यदन्धश्रद्धाया अयमात्मविश्वासोऽनुभवश्च अज्ञानस्य सुखावहा मूढतैव ।

किमप्यस्तु, नैकानि वर्षाणि यावत् सहस्रशो ग्रन्थानां वाचनेनापि किमिति मे समाधानं न जायते ?' अस्वास्थ्यकरोऽयं प्रश्न एकवारं श्री योगानन्दपादेभ्यः प्रष्टव्य एवेति विचारोऽकस्मादेव तर्ककुमारस्य प्रारब्धेनैव तन्मनसि समुद्भावितः ।

परवक्रजुषः प्रायो जनानपि शिवप्रजाः ।
अभीष्टविधिवर्तिन्यो विस्मयं समुपादिशन् ॥२३॥

कषायमपि संसेव्य शिवोद्यामरसायनम् ।
बलाजीर्णवती दिल्ली प्रकृतिं प्रत्यपद्यत ॥२४॥

शिवाशनिपरिच्छिन्नपक्षदर्पस्य भूभृतः ।
विपक्षतासमारम्भः सर्वदिक्को व्यवर्धत ॥२५॥

शिवपक्षास्यसंरम्भरक्षितासोरपि स्थितिः ।
ह्रिये लूनकरस्येव करिणो देहलीपतेः ॥२६॥

स राजपुरुषान् देवः प्रजाराधनवर्त्मनि ।
विवेकः श्रेयसि स्वस्थो विधीनिव न्ययोजयत् ॥२७॥

प्रतापबलमाकृष्य मेघालोके महीपतिः ।
अन्तर्लीन इवाऽऽदित्यो दुर्गलक्ष्मीमनन्दयत् ॥२८॥

शारदाम्बरसंक्लृप्तो नवदीप्तिकरः शिवः ।
सवितेवाऽजयच्छुद्ध्यै पृथिवीं पङ्कदूषिताम् ॥२९॥

योषितो बालकाः गावो द्विजा[1] देवालयानि च ।
नैव म्लेच्छबलोत्पातविदस्तद्राज्यमण्डले ॥३०॥

निषिद्धाचारवर्त्मानः सैन्यादर्शमलीमसाः ।
मन्तुशुल्कैरिव प्राणैरात्मशोधं व्यधुर्भटाः ॥३१॥

अष्टप्रधानयशसो मघोनः सवसोरिव ।
अष्टमूर्तेरिव स्निग्धाः वशगास्तस्य सम्पदः ॥३२॥

उभौ भिक्षु-धनाधीशौ पृथङ्मार्गजुषावपि ।
समन्यायतुलारूढौ शिवे शासति मेदिनीम् ॥३३॥

सामन्तकक्षमुच्छिद्य व्यवधानसमुच्छ्रितम् ।
प्रजालोकं प्रजानाथो निर्बाधमभजत् सदा ॥३४॥

न जातु हसितं हेम्ना भैक्ष्यं तद्राज्यमण्डले ।
भैक्ष्येनापि न तद्धेम साभ्यसूयमवेक्षितम् ॥३५॥

राष्ट्रोदयं यतन्ते स्म लोकोन्नतिमनोरथाः ।
शिवराज्ये प्रजाः सर्वाः निर्विरोधात्मवृत्तयः ॥३६॥

न केवलं बले वाचि भूम्नि वा तदवस्थितिः ।
प्रातिष्ठतार्यराष्ट्रस्तु प्रत्यात्मप्रतिमानसम् ॥३७॥

समर्थो वा विपन्नो वा सानुगो वैकलोऽपि वा ।
राष्ट्रकीर्तिं महाराष्ट्रो जुगोप जीवितैरपि ॥३८॥

समारूढे तमोव्यूहे रवावप्यस्तमायति ।
सुष्वाप निर्भयं लोकः शिवे जाग्रति रक्षके ॥३९॥

तमरागं प्रजाबन्धुं सेवितुं पार्थिवश्रियः ।
प्रजास्वेव निजोत्कर्षं वितेनुर्बृंहितोदयाः ॥४०॥

विभातः सत्प्रबन्धानां कालरात्रिः कदध्वनाम् ।
प्रभवः सर्वसिद्धिनामापदामन्तकाशनिः ॥४१॥

चैतन्यमिव देहेषु भूतलेषु नवाङ्कुरः ।
विकास इव सर्गेषु विवेको मनुसूतिषु ॥४२॥

हृदि कीलः सपत्नानामुद्बोधो विजितोरसाम् ।
शिवराष्ट्रः सतां तीर्थं विद्यापीठं विपश्चिताम् ॥४३॥

शीलं शालीनतागुप्तौ नयो यथार्थ्यनिर्णये ।
निर्बाधपदविन्यासौ तद्राज्यं बिभ्रतोऽनिशम् ॥४४॥

स्वभावं वर्तयन् देवो ववर्ष ववृधे मही ।
प्रकृतीर्नन्दयामास तथाऽसौ पालयन् नृपः ॥४५॥

अकिञ्चनोऽपि कल्पद्रुःसमाधिस्थोऽपि सर्वदृक् ।
सविषादोऽपि लोकानाममृतांशुः शिवः शिवः ॥४६॥

व्यसनानां विघाताय सम्पदामिष्टतृप्तये ।
चारित्र्याय जनैः पुंसां यतन्ते स्म शिवप्रजाः ॥४७॥

सुखदुःखात्मके द्वन्द्वे वसत्यपि शिवोरसः ।
सदुत्साहभरश्लाघ्यमन्वभूवन् स्वजीवितम् ॥४८॥

परप्रतापसंप्लुष्टे विरागः क्षेमजीविते ।
देहिनामगलन्नूनं शिवाद्वं वीक्ष्य निर्भरम् ॥४९॥

विस्मरन्ति जनाः प्रायः तद्धेतुं लब्धसिद्धयः ।
अट्टस्थाः नैव जानन्ति शिल्पिनस्तद्विधिक्षमान् ॥५०

( क्रमशः )

---

१. 'सन्मार्गभूमयः' इति पाठान्तरम् । २. अष्टप्रधानम्—सचिवमण्डलं राज्ञः, तेषु प्रधानामात्यः 'पेशवा' इति संज्ञकः ।

३. सामन्तप्रथा—'जागीरदारी'-प्रथा शासनसूत्रघातिनी समुन्मूलिता नृपेण ।

# मानस-भारती--देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए० साहित्याचार्यः—

बद्धाञ्जलिः स्थिताग्रे सा देवं दृष्ट्वाऽतिमुद्युता ।
ऊचे तं त्वां कथं स्तौमि नीचा जडमतिस्त्वहम् ॥
निम्ननिम्नतरेष्वत्र नार्यो निम्नतमा मताः ।
तास्वप्यहं मन्दबुद्धिः संस्थिता पापनाशन ॥
ऊचे रामो देवि मन्ये भक्तिसम्बन्धमात्रकम् ।
धर्मो जातिः कुलं द्रव्यं प्रतिष्ठा स्वजनो गुणः ॥
चातुर्यञ्चेति सर्वेषु वैशिष्ट्येषु स्थितेष्वपि ।
भक्त्या हीनो नरो भाति जलहीनो घनो यथा ॥
वच्मि त्वां नवधा भक्तिं सावधानतया शृणु ।
प्रथमा तु सतां सङ्गो द्वितीया मत्कथारतिः ॥

गुर्वङ्घ्रिपादाम्बुज-युग्मसेवा
त्यक्त्वाभिमानं तु मता तृतीया ।
सदैव गानं मम सद्गुणानां
छलं विहायेति मता चतुर्थी ॥ ३५ ॥

जपो नाम्नोऽति विश्वासो वेदोक्ता सा तु पञ्चमी ।
दमः शीलं निवृत्तिश्च सदाचारे रतिः सदा ॥
सप्तमी मन्मयी दृष्टिः समा सत्स्वधिकाऽऽदरः ।
यदृच्छालाभसन्तोषः स्वप्नेऽपि न च दोषदृक् ॥
इयं पूर्वप्रकारोक्ता सन्मान्या भक्तिरष्टमी ।
नवमी निश्छला वृत्तिः सर्वैरेव सहोत्तमा ॥
धृतिर्मे सुदृढा चित्ते न हर्षो न च दीनता ।
नवास्वेकाऽपि यस्य स्यात् स ना स्त्री वा चरोऽचरः ॥
स एव मे प्रियतमस्त्वस्ति सा सकला त्वयि ।
तत् तेऽद्य सुलभा सैव गतिर्या योगिदुर्लभा ॥

मम दर्शनतोऽतुल्यं परमं फलमस्ति यत् ।
जीवः स्वरूपमाप्नोति विनाऽऽयासेन भामिनि ॥
जानक्या गजगामिन्या वार्तां जानासि चेद् वद ।
सा राममूचे पम्पायास्तीरं याहि रघूत्तम ॥
मैत्री सुग्रीवेण साकं रघुवीर भविष्यति ।
स त्वां प्रारम्भतो वृत्तं सकलं कथयिष्यति ॥
जानन्नपि पृच्छसि त्वं सर्वं मां धीरशेमुषे ।
सोऽपि रामं मुहुर्नत्वाऽऽश्रावयत् सकलां कथाम् ॥

× × ×

कथां निरूप्य सा समां मुखं हरेर्विलोक्य च ।
निधाय पादपङ्कजे स्वमानसालये तदा ॥
विहाय योगपावके तपस्विनी निजां तनुम् ।
ययौ हरेः पदं यतो निवर्तते न कोऽप्यदः ॥
नरांस्तुलस्यनन्यदास ईरयत्यहो जनाः ।
अधर्मकर्म दुर्मतं विहाय शोकमोहदम् ।
रता भवन्तु भावतो रघूत्तमाङ्घ्रिपद्मयोः ॥

× × ×

यो निम्नजातिं वनितामनेक-
पापप्रयुक्तां सहसोद्दधार ।
हे चित्त तं राघववंशदीपं
विहाय रामं सुखमीहसे किम् ॥ ३६ ॥

[ क्रमशः ]

सम्पादकीयम्

# राष्ट्रपतीनां श्री गिरिणां स्वागतमभ्यर्थनं च

महत्प्रमोदास्पदमेतद्यद् भारतसङ्घशासनस्य तुरीय-राष्ट्रपतिरूपेण श्रीमन्तो वराहगिरि व्यङ्कट-गिरि महाभागा बहुमतेन निर्वाचिताः। शुभेऽस्मिन्नवसरे 'सूर्योदय'-परिवारस्तेषां हार्दिकमभिनन्दनं समाचरति। नूनं गिरि-महोदयानामयं विजयो विश्वस्य सर्वाधिक - महत्तर-लोकतान्त्रिकदेशस्य जाग्रतो विवेकशीलस्य लोकमतस्य विजयो नाम। सन्तु नाम नैकानि कारणानि संभूयाऽत्र आमिलितानि, कथमप्येतद् विस्मर्तुमशक्यं यन्मूलतो गिरि-महाभागानां व्यक्तित्वमेव भीषणेऽस्मिन् निर्णायक-सङ्ग्रामे भारतीयजनमतं स्वात्मनि आचकर्षेति।

श्री गिरिमहाभागानाम् अद्यावधिकी राष्ट्रसेवा सर्वथा पक्षातीता प्रामाणिकी चास्ते। कदापि तैरन्यायो न समर्थितो नापि कीदृश्यपि पदलोलुपता प्रदर्शिता। राष्ट्रद्वारा प्रदत्तानां नैकेषां पदानामुत्तरदायित्वं तैरशेषतः प्रामाणिकतया च निर्व्यूढम्। तत्र सैद्धान्तिके नैतिके च मतभेदे समुपस्थिते तत्पदं त्यक्तुमपि कीदृग्विधः सङ्कोचो न कृतः। भारतस्य राष्ट्रपति-निर्वाचन-सङ्ग्रामाय तेषां कृते तत्कालीनोपराष्ट्रपतिपदं कार्यकारिराष्ट्र-पतिपदं वा त्यक्तुं संविधानतः काऽपि बाध्यता नासीत्। तथापि यतः स देशस्य सर्वोच्चपदस्य विषय आसीत्, तत्र कीदृशोऽपि पदकृतोऽनुचितः प्रभावो नामाऽऽपतेदिति हेतोस्तैः तत्पदं परित्यज्यैव निर्वाचनयुद्धमिदं प्रारब्धम्। अन्यच्च, राष्ट्रपतिः सर्वथा राष्ट्रस्य प्रतिनिधिर्भाव्यः, स हि पक्ष-विशेषस्य व्यक्तिः कथमपि न स्यादिति तैः निर्दलीय-प्रत्याशिरूपेणैव निर्वाचनाय समुद्युक्तम्।

निर्वाचनात् पूर्वं स्वयमेव समग्रस्य देशस्य यात्रां विधाय भारतीया जनता (तत्प्रतिनिधयश्च) तैः सादरमभ्यर्थिताः। स्वीयनिर्वाचनाभियान-प्रचारे सर्वथा संयमः, शिष्टता सौमनस्यञ्च प्रदर्शितम्। अधिकोषाणां राष्ट्रीकरणप्रस्तावे कार्यकारि-राष्ट्र-पतिपदत्यागात् पूर्वं रात्रावेव त्वरया हस्ताक्षर-करणे आक्षेप्स्यमाणानाम् अपवादानां निराकरणं कुर्वद्भिस्तैः स्पष्टमेवोक्तं यदयं विषयः सर्वथा राष्ट्र-हिताय आसीत्, अन्ततश्च करणीय एव स्यादिति विचार्यैव मया तथा समाचरितम्। प्रसङ्गेऽस्मिन् इतः पूर्वं केन्द्रीयश्रममन्त्रिपदम् अधिकोषीय-कर्मकर-विवादप्रसङ्गे तैस्त्यक्तमासीदित्यपि अविस्मरणीय-मेव। स्वस्य प्रधानमन्त्रिणां मात्रमुद्रारूपताऽपवादं निरसितुं प्रवृत्तैस्तैः स्पष्टमेवोक्तं यद् 'राष्ट्रहित-विषये स्वविवेकनिर्णीतपक्षे एव मम मुद्रा स्यात्। तद्विपरीतं प्रधानमन्त्री एव किम्, साक्षादीश्वरोऽपि समागच्छेत्, तथापि तस्य मुद्रारूपतां नाधिगमिष्यामी'ति।

एते हि महात्मगान्धीनां सक्रियमनुयायिनः सन्तोऽपि (यावदस्माकं परिचयस्तदनुसारम्) कांग्रेस-महासभायाः सदस्यत्वं स्वीकृत्य स्वात्मानं सीमितं न कृतवन्तः। भारतीय-श्रमिक-सङ्घटना-दीनाम् (ट्रेडयूनियन-कांग्रेसादि - संस्थानाम्) आध्यक्षं स्वीकृत्य श्रम-निष्ठाया भक्तिरपि यावज्जीवं

तैः प्रदर्शिता। इत्थं ते संशोध्य विषं समुपयुञ्जानो भिषग्वरा राष्ट्रेण अवगताः। अन्ततश्च राष्ट्रपति-निर्वाचनविषये स्वतन्त्रभारते प्रचलितां स्वस्थां परम्परामुज्जिहीर्षूणां स्वार्थप्रेरितानां मनोरथानुन्मूल्य परम्परारक्षकत्वेनापि तेऽस्माकं राष्ट्रस्य पुरतः समुपस्थिताः। तेषां निर्वाचनमपि, कामं केनापि हेतुना स्यात्, सर्वथा सुबुद्धजनप्रतिनिधीनां दलप्रभावानभिभूतं स्वविवेकप्रभवमभूदिति सर्वथा ते विशुद्ध-लोकतन्त्रपद्धत्यनुगृहीताः अनन्यपूर्वा अस्माकं राष्ट्राध्यक्षाः संवृत्ताः। दृष्ट्वेदं को नाम तटस्थो विवेकशीलो राष्ट्रभक्तस्तेषां हार्दिकमभिनन्दनं न विदध्यात्?

किन्तु इतः परं तेषु उत्तरदायित्वमपि अभूतपूर्वं समापतितमास्ते। द्रष्टव्यमेतद्यत् तन्निर्वहणनिकषे ते कियन्तः शुद्धा बहुमूल्याश्च सिद्ध्यन्तीति। यदि नाम तेऽत्रापि स्वीयपूर्वचरित्रवत् जाज्वलमान-शातकुम्भकल्पाः सिद्ध्येयुस्तदा सुनिश्चितं भवेद्यत् लोकतान्त्रिकं शासनं सर्वाणि शासनान्यतिशेते, भारतस्य च राष्ट्रस्य कृते तदेवाऽन्ततो हितावहम्। किन्तु यदि तेऽत्र दौर्भाग्यादसाफल्यं कथमपि भजेयुस्तदा विश्वस्मात् लोकतन्त्रं नाम महाकालस्य करालदंष्ट्रायामेव गतमित्येव वक्तव्यं भवेत्।

उच्यते यद् भारतस्य राष्ट्रपतिः किल वैधानिकः शासकः। सर्वा शासनसत्ता संसदि मन्त्रिमण्डले च निहिता। स किमपि स्वविवेकेन कर्तुं न क्षमः। विगत-राष्ट्रपतीनां चरित्रमपि एतादृशमेवाऽभवत्। तत्र कारणं व्यक्तिशस्तेषामसामर्थ्यम्, अप्रत्यक्षतः स्वीयसङ्घटनीयाऽनुशासनशृङ्खला, तदीयं सौमनस्यम्, तत्कालीन-प्रधानमन्त्रिणामनन्यसाधारणी प्रभुसत्ता वा यत्किमपि स्यात्, आसीत्तत्र किमपि कारणमिति तु निश्चप्रचमेव। कथमन्यथा सर्वथा राष्ट्रहितकरः पूर्णतो गोवधनिरोधप्रस्तावो पूर्वराष्ट्रपतिभिः न स्वीकृतः, अधिकोषाणां राष्ट्रीकरणनियमवत्? कथञ्च स्वतन्त्रराष्ट्र-श्रद्धाकेन्द्रबिन्दुभूता हिन्दी भारतीयसंविधानानुमोदिता कैरपि अद्यावधिकराष्ट्रपतिभिः पूर्णतो राष्ट्रभाषापदे न समभिषिक्ता द्वाविंशतिवर्षाणि यावत्? कथं वा व्यापकभारतीयजनमतेन तिरस्कृतं 'हिन्दूकोड-बिलं' नामकं सर्वथा सम्प्रदायविशेष-प्रभावकरं नियमं खण्डशः पारयन्तं स्वं शासनं कोऽपि अद्यावधिको राष्ट्रपतिर्निरोद्धुं नाशक्नोत्? मन्यामहे, विश्वस्य न्यायपीठे एते प्रश्नाः सर्वथा अनुत्तरणीया भूत्वा भारतीयराष्ट्रपतेः सर्वोच्चसत्तां नूनमाह्वयन्ति।

किन्तु भारतीय-संविधानेन राष्ट्रपतेः कृते विशेषाधिकारस्यापि काचिद् व्यवस्था कृताऽस्ति, यश्च स प्रसङ्गविशेषे संवैधानिकदृष्ट्या प्रयोक्तुं निर्विशेषतया प्रभवति। भारतराष्ट्रस्य साम्प्रतिकीं राजनयिकीं गतिविधिं पश्यतां तटस्थानां विवेकशीलानां दृष्ट्या किमद्य तादृशी परिस्थितिर्न सम्प्राप्ता? यदि नामेमां परिस्थितिं राष्ट्रपतिर्मूकीभूय केनापि प्रभावविशेषेण प्रभावितो केवलं द्रष्टृभावं स्वीकरिष्यति, तदाऽशरणशरण्यो भगवानेव राष्ट्रस्यास्य एकमात्ररक्षको वक्तव्यो भवेत्। राष्ट्रपतेर्व्यक्तित्वं पुनः सर्वथा विलयं गच्छेदिति पृथक् वक्तव्यं नावशिष्यते।

केनापि पक्षविशेषेण अनभिभूताः केवलभारतराष्ट्रभक्तिमेव नम्रीभूय समुपासयन्तो वयं सुदृढं भावयामो यदद्य भारते सर्वत्र अराजकताऽसंवैधानिकतायाः अधिनायकवादकल्पस्य स्वेच्छावादस्य च नग्नताण्डवं प्रचलतीति। सुनिर्धारितमेतत्, लोकतन्त्रे जनताया एव प्रभुत्वम्। प्रभुशक्तिः किल तत्रैव सुप्रतिष्ठिता, न दलविशेषे। अतो भारतीयं शासनमादर्शमयं विधातुं तस्य दलनिरपेक्षीकरणं

सर्वथा आवश्यकम् । दौर्भाग्यादद्यावधि तथा नाभवत्, दलविशेषस्यैव प्रभुत्वं वरीवर्ति । तदपि अस्माभिरापातकालीनतया समर्थितम् । प्रबल-विरोधिपक्ष-सङ्घटनेन तन्नियन्त्रितमपि । किन्त्वद्य तादृगपि स्थितिर्न वर्तते । वस्तुतोऽद्य किमपि दलं बहुमतं नास्ति । राष्ट्रपति-निर्वाचनं स्वीय-बहुमतस्य निकषायितं वक्तुं यदि नाम किञ्चिद्दलं वाञ्छेत्, तत्सर्वथा अनुचितमेव । संभूय सर्वेषां मतैरेवायं राष्ट्रपतिर्निर्वाचितोऽभूत् । तथापि यदि अयमेव निकषरूपेण स्वीक्रियेत चेदविलम्बं भारत-शासनेन सर्वथा निर्दलेन भाव्यमित्यस्माकं सुविचारितं मतम् । तथा कर्तुञ्च नवनिर्वाचितेन राष्ट्र-पतिना सुदृढोऽभिक्रमः करणीय इत्येवास्ति तेभ्यो निवेदनं भारतीय-जन-जनस्य ।

वस्तुतो राष्ट्रपतिर्दलनिरपेक्षो भवति । अत-स्तन्निर्वाचनमपि संभूय सर्वैर्दलैरैकमत्येन करणीयं भवति । परमस्मिन् सन्दर्भे तथा नाभवत् । कांग्रेसमहासभया एकः प्रत्याशी निर्धारितः । तथा-कथित-विरोधिसङ्घटनैः पुनरपर एव प्रत्याशी मनोनीतः । वर्तमान-राष्ट्राध्यक्षाः पुनर्निर्दल-प्रत्याशीरूपेण पुरः समुपस्थिताः । तेषामेव विजयेन जनतया स्फुटीकृतं यद्वयं कथमपि दलगतं शासनमत्र न वाञ्छाम इति । दलीयशासन-पक्षपातिनां मनो-नीतौ प्रत्याशिमहोदयौ असफलीभूत्वैव दलीय-शासनसिद्धान्तं स्वयं खण्डितवन्तौ ।

यावद् दलीयशासनस्य प्रश्नः, स्पष्टमेतत्, यत्किमपि दलं स्यात्, तदनुयायिभिः दलीयं सर्व-मनुशासनं स्वीकरणीयमेव । दलस्य तस्य कोऽपि अध्यक्षः स्यात्, यदा बहुमतेनास्माभिः स निर्वा-चितस्तदा यावद् वैधोपायैः स न निष्कास्यते, तावत् तदनुशासन-स्वीकरणं प्रत्येकस्य दलीयस्य अनिवार्यं कर्तव्यं भवति । तथाऽकरणे स नूनं दलीयानुशासनेन हीन उद्घोष्येत । तथाघोषणं दलनियन्तुः कर्तव्यमेव । तदकृत्वा स तद्दलस्य रक्षको नूनं तद्दलभक्षक एव स्वीकृतः स्याद् विवेचकैः । तदा दलस्य सत्तैव शशविषाणायिता भवति । अतः कांग्रेसमहासभाध्यक्षाणां श्री निज-लिङ्गप्पा महोदयानामद्यावधिकं कार्यम् ( एतल्लेख-लेखनसमयपर्यन्तम् ) सर्वथा स्वीकृतदलविशेषस्य अनुशासनान्तर्गतमेव निर्विचिकित्सं वक्तुं शक्यम् ।

परं प्रधानमन्त्रिणां श्री इन्दिरा गान्धि महो-दयानां स्थितिः पुनरितः सर्वथाऽन्यादृशी वर्तते । ताः किल राष्ट्रिय-बहुमतशालिनो दलस्यैव संसदीय-नेतृत्वमधिरुह्य प्रधानमन्त्रिपद-मलङ्कुर्वन्ति । तेषां पूज्यास्तातपादाः सुदीर्घकालं भारतस्य प्रधान-मन्त्रिणोऽभवन्, अतो हेतोः पुत्री अपि तत्र स्वात्मनोऽधिकारं घोषयेच्चेत्, देशस्य लोकतन्त्रस्य कृते नातोऽधिकं दौर्भाग्यास्पदं किमपि । जाग्रतं विवेकशालि च भारतीयं जनमतमपि तथा स्वीकर्तुं कथमपि न शक्नोति । अतस्तासां स्वदलनिर्धारित-प्रत्याशिना प्रतीपभावः, दलीयानुशासनतोऽसहमतिः, संसदीयनेतुर्नियन्त्रणे दलीयसर्वोच्चजनस्य अनधि-कृतिलपनञ्च कथमपि स्वस्थां दलनिष्ठां न प्रदर्शयति । एतेन दलीयनीतिनिष्ठा सर्वथा विलयं गच्छति । सत्येवं ता येन दलेन पदेऽस्मिन् नियुक्तास्तद्दलमपि पराभवति । पराभूतस्य कस्यापि दलस्य तदभि-मानिनो वा जनस्य सर्वोच्चशासनपद-संश्लेषः किं स्पष्टमेव अधिनायकतां न घोषयति, ताञ्च लोकतन्त्रं कथं नाम गर्ताधो नेतुं शक्नुयादित्यस्ति महान् यक्षप्रश्नः ।

प्रधानमन्त्रिभिरिव अन्यैरपि दलीयनेतृभिः राज्यानां शासकैरपि दलानुशासनभङ्गाय यत्प्रय-तितम्, तदपि तेषां तत्तद्राज्ये शासनपदालङ्करणे सर्वथा प्रतीपभूतम् । एवंस्थितौ तेषां तत्र स्थिति-

रपि किमधिनायकतां न घोषयति ? इत्थं दलीयानुशासनविहीनानां कतिपयानामधिनायकता प्रसृता चेत्, अपरदलीया अपि वैधेन अवैधेन वा उपायेन तथाऽधिनायकता-ग्रहणाय किमिति न प्रयतेरन् ? महान् दौर्भाग्यपूर्णः सोऽवसरो भवेद् राष्ट्रस्य कृते ! गृहयुद्धादितरत् किं वस्तु तद् भवेदिति न जानीमः । प्रसङ्गस्यास्य कल्पनयैव शरीरे वेपथुः रोमहर्षश्च जायते । प्रधानमन्त्रिभिरुच्यते—'मत्पित्रा भूतपूर्वप्रधानमन्त्रिणा सहापि एभिस्तथाकथित-'सिण्डोकेट'-सदस्यैः महान् प्रतिरोध. कृतः, तेभ्यश्च राष्ट्रहितकर-कार्यकरणे बाधा समानीता, तथापि तैः संयमेन कार्यं कृतम् । अहं पुनस्तेषां विवशताया अस्याः प्रतिशोधं करिष्यामी'ति । परिसरवर्ती पवनः कुत्र कथं वा प्रवहतीत्यस्य निदर्शनमेतत् ।

नूनं प्रधानमन्त्रिणः परममुत्साहं बिभ्रति । भारतराष्ट्रस्य हिताय स्वार्थप्रेरितां स्थितिस्थापकतास्थितिं ( स्टेटस्को ) परिवर्त्य नवां क्रान्तिमानेतुं वाञ्छन्ति, यत्र विपद्ग्रस्तानां परिपीडितानां बहुसंख्यक - भारतीयजनानां विषये करुणैव ताः प्रेरयति । परं तत्रापि भारतीया स्वाभाविकी स्थितिरपि नूनं निध्यातव्या । सत्ताया विकेन्द्रीकरणस्य सार्वभौमसिद्धान्तोऽपि नानुपेक्ष्यः । व्यक्तिगताभिक्रमस्य स्पर्धामूलक कार्योत्कर्षसाधकस्यापि विचारो दृष्टेः पदान्नापलपनीयः । सर्वमेतद् विचार्य राष्ट्रहितप्रतीपभूतां व्यक्तिगतमहत्त्वाकाङ्क्षां परिवर्ज्य ताभिर्यदि किमपि पदमाक्रम्यते, तदा नूनं भारतीयास्तासामनुगामिनो भवितुं शक्नुयुः । ते हि स्वभावतः कृतज्ञाः सहृदयाश्च भवन्ति । तथाकरणेन च निर्विचिकित्सं सुयोग्यनेतुः पुत्री स्वात्मनो नाम इतिहासे स्वर्णाक्षरैर्लेखयितुं प्रयोजिका भवेत् । परं ताभिः सर्वस्मिन्नस्मिन् कार्यजाते विवेकस्य पदं कथमपि न त्याज्यम् ।

सत्यमेतत्, राज्यं महतां विपदां पदं भवतीति । तथैव किमपि सङ्घटनं कियदपि लोकतान्त्रिकं भवेत्, तत्सञ्चालकेषु सर्वोच्चप्रभावशालिनः प्राधान्यं निश्चप्रचमेव । इदं पुनरन्यत् यत्स प्रभावशाली पुरुषः कस्यापि विषयस्य निर्णये स्वीयं प्रभावं न्यूनातिन्यूनं प्रयुङ्क्ते इति । तेनैव तस्य सङ्घटनस्य लोकतान्त्रिकत्वं सुस्थिरं भवति । भारतीयस्वातन्त्र्यलाभात् पूर्वं प्रदीर्घकाले लोकमान्य तिलकानां निकटभूते च नेताजी सुभाषचन्द्र वसु महोदयानां काण्डे राजनीतिकच्छात्रस्य कृते विषयेऽत्र सर्वथाऽविस्मरणीये । तेनैव शिक्षां गृहीत्वा राज्यस्य च महद्विपत्पदत्वं निध्याय महात्मगान्धिभिः स्वातन्त्र्यलाभ-समनन्तरमेवोक्तं यत् 'इतः परं कांग्रेसमहासभायाः विलयनं कृत्वा लोकसेवक-सङ्घः सङ्घट्टनीयः' इति । ते जानन्ति स्म यल्लब्धे राज्ये राज्यशासकः कथङ्कारं सङ्घटननियन्तुः शासनं सर्वथा स्वीकर्तुं शक्नुयात् । उभयत्र स्पर्धाऽवश्यंभाविनी, तेन च सङ्घटनस्य राज्यस्य वा विलयः सुनिश्चप्रच एव । परं तत्कालीनभारतराष्ट्र-कर्णधारै राष्ट्रपितुरयं निर्देशोऽवमानितः । तस्य प्रत्यक्षं फलं तत्कालमेव स्वर्गीयराजर्षिणां श्री पुरुषोत्तमदास टण्डन महोदयानां कांग्रेसाध्यक्षपदतस्त्यागेन समासादितं राष्ट्रेण ।

ततः परमेतदेव तथ्यमवगत्य स्वर्गीयैः श्री जवाहरलाल नेहरू महोदयैः कांग्रेसाध्यक्षपदं भारतसङ्घराज्य-प्रधानमन्त्रिपदञ्च स्वयमेकेनैव गृहीत्वा निर्व्यूढम् । तेन यथाकथमपि भवेत्, भारतीय-राज्यशासने चिरमेकसूत्रता समागता । किन्तु लोकतन्त्रस्य स्वाभाविकोन्मेषेण यदैतादृशमेकच्छत्रशासनं स्वीकर्तुं सर्वथा असहमतिः प्रदर्शिता, अन्तरेव यादवी-परिस्थितेर्निर्माणमभवत्, तदा तैः श्री कामराजं-कांग्रेसाध्यक्षरूपेण पृथगानीय

# अखिल-भारतीय-धार्मिकाध्यात्मिक-संस्कृतविद्यापीठस्य परीक्षा-फलम् : १९६९ वर्षस्य

श्रीभारतधर्म महामण्डलद्वारा सञ्चालितस्य अखिल-भारतीय-धार्मिकाध्यात्मिक-संस्कृतविद्यापीठस्य १९६९ ईशवीय-वत्सरस्य परीक्षाफलं तदीयपरीक्षामन्त्रिणा प्रेषितं निम्नलिखितं वर्तते।

## प्रथमा परीक्षा

क्रमाङ्कः नाम

### व्याकरणम्

**प्रथम श्रेणी**

६ लखनलाल पुरोहितः

**द्वितीय श्रेणी**

४ श्यामलालः
५ रामकिशोर चौबे
६ सुन्दरलालः
८ रामस्वरूप कुशवाहः
१० उमाशंकर शुक्लः

**तृतीय श्रेणी**

३ नन्दूलाल पाठकः

### वेदः

**द्वितीय श्रेणी**

१४ कनैयालालः
१५ जीतेन्द्रकुमारः
१६ अश्विनकुमारः
१७ चन्द्रकान्तः
१८ भीखालालः

### कर्मकाण्डम्

**द्वितीय श्रेणी**

२२ विनोद रायः

क्रमाङ्कः नाम

### धर्मशास्त्रम्

**द्वितीय श्रेणी**

२६ केशवलाल जोशी
२८ हसमुखराय जोशी
२९ मुकुन्दराय पण्ड्या
३१ शान्तिलाल सोलंकी
३२ शान्तिलाल गंदा

**तृतीय श्रेणी**

२३ कान्तीलाल महेता
२५ रामवरणदास श्रीवैष्णवः
३० शान्तिलाल महेता

### साहित्यम्

**द्वितीय श्रेणी**

४४ रामरुचि द्विवेदी
४५ भरतकुमार त्रिवेदी
४७ जयन्तिलालः
५२ पूसूलालः
५३ सफूरा बेगम चौहान
५४ सलमा बेगम चौहान

**तृतीय श्रेणी**

३९ श्रीमती इन्द्रावती देवी
४० प्रह्लाद तिवारी

क्रमाङ्कः नाम

४६ गिरीशचन्द्रः
४८ कमल मुकर्जी
५० धरनीधर दूबे
५१ प्रदीपकुमारः

### हिन्दी

**द्वितीय श्रेणी**

६१ सूर्यभान द्विवेदी
६२ वीनाकुमारी वाहेवी
६३ रमेशकुमार शर्मा
६५ जसपाल कौर सोहलः
६६ राजेन्द्रीकुमारी पोद्दारः
६७ ऊषाकुमारी केशानः
७० महावीर अग्रवालः
७१ प्रदीपकुमार खेमका
७४ नीरू गुप्ता
७५ ओमप्रकाश वाहेती
७७ राजकुमार अग्रवालः
७८ बजरंगलाल अग्रवालः
८९ कुमारी लक्ष्मी
९० विजयसिंह विष्टः
९१ भरोसालालः
९३ नरेन्द्रसिंह विष्टः

| क्रमाङ्कः | नाम |
|---|---|
| ९४ | सुदर्शनसिंह विष्टः |
| ९७ | सुरेन्द्रसिंह भण्डारी |
| ९८ | जगमोहन सिंहः |
| ९९ | विक्रमसिंह नेगी |
| १०१ | शशिकान्तः |

**तृतीय श्रेणी**

| क्रमाङ्कः | नाम |
|---|---|
| ५५ | रतनकुमार पाण्डेयः |
| ५६ | पीयूषकुमार पाण्डेयः |
| ६४ | राजकुमारो अग्रवालः |
| ७२ | शिवकुमार अग्रवालः |
| ७३ | शिवशंकर अग्रवालः |
| ८० | रमेशचन्द्र झा |
| ८२ | किरणकुमारी |
| ८४ | जनकनन्दिनी देवी |
| ८५ | रोहिणी देवी |
| ८६ | सुनैना देवी |
| ८७ | सावित्रीकुमारी |
| ९२ | दौलतसिंहः |
| १०२ | कलपसिंह विष्टः |

### दर्शनम्

**द्वितीय श्रेणी**

१२ जयसुखलालः

## मध्यमा परीक्षा

### व्याकरणम्

**प्रथम श्रेणी**

१३० शिवरात्री देवी

**द्वितीय श्रेणी**

१२७ मूलचन्द्र जैनः
१२८ आशाराम पाण्डेयः
१३१ सीताराम त्रिपाठी
१३३ वसन्तकुमारः
१३४ रामसागरः

**तृतीय श्रेणी**

१२९ हृदयनारायण पाठकः

### ज्यौतिषम्

**द्वितीय श्रेणी**

१३५ लालमणिशर्मा
१३६ वंशीधर त्रिपाठी
१३७ हनुमान् त्रिपाठी

### कर्मकाण्डम्

**द्वितीय श्रेणी**

१४५ उछरंगरायः
१४७ केदारनाथ पाण्डेयः

**तृतीय श्रेणी**

१४० जुगलकिशोरः
१४१ रजनीकान्त पुरोहितः
१४२ अनन्तरायः
१४३ हरिलाल पण्ड्या
१४४ दिनेशचन्द्रः

### धर्मशास्त्रम्

**प्रथम श्रेणी**

१६९ श्रीमती रमादेवी

**द्वितीय श्रेणी**

१४८ लालनारायण मिश्रः
१५१ दुर्गादेवी
१५२ रामाश्रय रायः
१५६ रत्नेश्वरलालः
१५७ श्यामसुन्दर तिवारी
१५८ योगेश्वर तिवारी
१५९ रामायण सिंहः
१६० रामेश्वर त्रिपाठी
१६२ प्रभुदेव ठाकुरः
१६४ विश्वनाथप्रसाद सिंहः
१६५ राधादेवी
१६६ गंगाधर ओझा

**तृतीय श्रेणी**

१४९ मार्कण्डेय झा
१५० शिवप्रसन्न ठाकुरः
१५३ शुकदेव सिंहः
१५४ राजेन्द्रप्रसाद सिंहः
१५५ श्रीमती इन्दिरा देवी
१६१ शिवशंकर द्विवेदी
१६३ विन्दाप्रसादः
१६७ रीझनसिंहः

### साहित्यम्

**प्रथम श्रेणी**

१८७ सुशील प्रसाद शर्मा
१९४ जयनारायण दूबे
२०७ रघुनन्दनप्रसाद चौरसिया
२०८ बालकराम भट्टः
२०९ रमेशकुमार शर्मा

| क्रमाङ्कः | नाम | क्रमाङ्कः | नाम | क्रमाङ्कः | नाम |
|---|---|---|---|---|---|
| | **द्वितीय श्रेणी** | | **तृतीय श्रेणी** | २२८ | रामाशंकर साहः |
| १७४ | दीपचन्दः | १७९ | चंचलाकुमारी मिश्रा | २२९ | विश्वनाथप्रसादः |
| १८० | मुखदेव त्रिवेदी | १८३ | रामनाथ शुक्लः | २३३ | रघुनाथप्रसाद सिंहः |
| १८१ | किशोरी पाण्डेयः | | **हिन्दी** | २३४ | रामशंकरसिंहः |
| १८४ | जगन्नाथ उपाध्यायः | | | २३५ | कृष्णमोहन सिन्हा |
| १८५ | लालमणि मिश्रः | | **द्वितीय श्रेणी** | २३६ | रामश्रेष्ठप्रसाद यादवः |
| १८८ | इन्द्रजीत दूबे | १७२ | आदेशनरायन सक्सेना | २३७ | राजारामः |
| १८९ | विजयपालः | २१६ | दयाशंकर पाण्डेयः | २३८ | अम्मरप्रसादः |
| १९५ | जलेश्वर उपाध्यायः | २१७ | नारायणदत्त ध्यानी | २३९ | श्रीकिशोर झा |
| १९६ | सत्येन्द्रकुमार मिश्रः | २१८ | मंगलसिंह नेगी | २४० | नारदलालः |
| १९७ | कालिकाप्रसाद चतुर्वेदी | २१९ | जयेन्द्रकुमार घिल्डियालः | २५१ | घनानन्द लखेडा |
| १९९ | लक्ष्मीप्रसाद शर्मा | २२० | यशवन्तसिंह रावतः | | **तृतीय श्रेणी** |
| २०० | अवधेशकुमार दीक्षितः | २२१ | वशिष्ठनारायण पाण्डेयः | २११ | विश्वनाथ मिश्रः |
| २०४ | चन्दनसिंह वर्मा | २२२ | रघुवंशसिंहः | २१२ | मालती देवी |
| २०५ | भुवनलाल साहू | २२३ | बाबूलालसिंहः | २३० | मनोमोहनदासः |
| २०६ | प्रेमलाल नागेशः | २२४ | रामशृङ्गार भक्तः | २३२ | मोहनानन्द मिश्रः |
| २१० | श्रीमती मालती शर्मा | २२६ | अनिलकुमार अकेला | २४३ | प्रेमसिंहः |
| २५६ | ओमप्रकाशः | २२७ | सच्चिदानन्द सिन्हा | २४४ | मेहरबानसिंह विष्टः |

## शास्त्री परीक्षा

### व्याकरणम्

**द्वितीय श्रेणी**

२९४ बद्री पाण्डेयः
२९५ सहदेव पाण्डेयः

### वेदः

**द्वितीय श्रेणी**

२९८ देवीशरणशर्मा
२९९ केदारनाथ मिश्रः
३६६ बृजमोहन द्विवेदी

### शाङ्करवेदान्तम्

**द्वितीय श्रेणी**

३०० गणेशप्रसाद पाठकः

### पुराणम्

**प्रथम श्रेणी**

३०२ श्यामसुन्दर शर्मा
३०३ तुलसीप्रसाद उपाध्यायः

**द्वितीय श्रेणी**

३०१ गयाप्रसाद त्रिपाठी

### ज्यौतिषम्

**प्रथम श्रेणी**

३०४ करुणाप्रसाद पाण्डेयः

**द्वितीय श्रेणी**

३०६ रघुवीरसिंह सिनहा
३०८ होमप्रसाद न्यौपाने

### धर्मशास्त्रम्

**द्वितीय श्रेणी**

३१० रामवचन तिवारी

| क्रमाङ्कः | नाम |
|---|---|
| ३११ | राजेन्द्रप्रसाद सिंहः |
| ३१२ | रामेश्वरसिंहः |

साहित्यम्

प्रथम श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ३१४ | शिवकुमार पाण्डेयः |
| ३१७ | रामध्यान पाण्डेयः |
| ३१८ | नरहरिप्रसाद मिश्रः |
| ३२० | बालमीकप्रसाद शर्मा |
| २२१ | रामलखन द्विवेदी |
| ३२४ | रामनाथ सिंहः |
| ३२५ | सुभाषचन्द्र अग्रवालः |
| ३२६ | मनमोहनदास बांगड़ी |
| ३२७ | कामताप्रसाद शर्मा |
| ३३० | रामचरित्र तिवारी |
| ३३१ | तेजप्रसाद सिंहः |
| ३३२ | बाबूरामशर्मा रेग्मी |
| ४५५ | कुमारीचपला रहोतगी |

व्याकरणम्

द्वितीय श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ३८५ | नारायण धिमिरे |
| ३८६ | धर्मचन्द्र शास्त्री |

कर्मकाण्डम्

द्वितीय श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ३८८ | उमाशंकर मिश्रः |

साहित्यम्

प्रथम श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ३९४ | कृष्णगोपालः |
| ३९५ | कृष्णदत्त शर्मा |

द्वितीय श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ३१५ | गणेश पाण्डेयः |
| ३१६ | चन्द्रिकाप्रसाद मिश्रः |
| ३२२ | रामचन्द्र वर्मा |
| ३२९ | भरतकुमार तिवारी |
| ३३३ | प्रेमकान्त झा |
| ३३४ | गिरिधारी झा |
| ३३७ | कैलाशनारायण शर्मा |
| ३३९ | गीतादेवी शर्मा |
| ३४० | शम्भुदयाल शर्मा |
| ३४१ | अशोककुमार दुबे |
| ४५३ | रामाशंकरः |
| ४५६ | देवेन्द्रकुमार शर्मा |
| ४५७ | कृष्णकुमार उपाध्यायः |
| ४७७ | सुरेशचन्द्र पाण्डेयः |

हिन्दी

प्रथम श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ३६० | राजकिशोर दूबे |

आचार्य परीक्षा

| क्रमाङ्कः | नाम |
|---|---|
| ३९६ | रामनारायण शुक्लः |
| ४०३ | शारदानिवास शास्त्री |

द्वितीय श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ३९१ | मालती देवी |
| ३९८ | माताप्रसाद शर्मा |
| ३९९ | गंगारामः |
| ४०० | सीताराम पाठकः |
| ४०२ | सच्चिदानन्द मिश्रः |
| ४४५ | चन्द्रिकाप्रसाद पाठकः |
| ४६७ | रामप्रकाश मिश्रः |
| ४६८ | श्यामसुन्दरलाल मिश्रः |
| ४६९ | राजकिशोर शर्मा |

द्वितीय श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ३४२ | रामदयाल रायः |
| ३४४ | रामाधीन श्रीवास्तवः |
| ३४५ | जयवीरसिंहः |
| ३४६ | गंगाराम वर्मा |
| ३४७ | शिशुवरणलाल शाक्यः |
| ३४८ | वीरेन्द्रकुमार श्रीवास्तवः |
| ३५० | कुमारी चन्द्रा वर्मा |
| ३५१ | श्रीमती इन्द्रादेवी वर्मा |
| ३५३ | रघुनाथसिंहः |
| ३५४ | धनेश्वरप्रसाद शरणः |
| ३५५ | रामावतारप्रसाद यादवः |
| ३५६ | रामआश्रयप्रसाद सिंहः |
| ३५८ | विनोदानन्द मिश्रः |
| ४४४ | युगलकिशोर मिश्रः |
| ४४७ | हरीदास चटर्जी |

तृतीय श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ४४८ | सेमसन जे० लायलः |

हिन्दी

प्रथम श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ४०४ | जगदीश प्रसादः |

द्वितीय श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ४०६ | प्रेमनारायण शर्मा |
| ४०८ | श्रीशनाथ शर्मा |
| ४०९ | रामपुकार सिंहः |
| ४१० | पारसनन्द मिश्रः |
| ४११ | रामयश पाण्डेयः |

तृतीय श्रेणी

| क्रमाङ्कः | नाम |
|---|---|
| ४०५ | प्रयागदत्त खन्तवालः |
| ४१२ | कु० शोभाषिणी रविदासः |

# १९६९ वर्षीयम् आयुर्वेदविषयस्य परीक्षाफलम्

## प्रथमा परीक्षा

क्रमाङ्कः नाम

**प्रथम श्रेणी**

११६ मेवालालः

**द्वितीय श्रेणी**

१०९ रामकृष्ण वर्मा
११९ रामनिवास द्विवेदी
१२० भइयालाल द्विवेदी
१२१ शिवमूर्तिप्रसाद शुक्लः
१२२ रामनरेश द्विवेदी
१२३ मोहनलाल स्वर्णकारः
१२५ भगवानदास साहू
१२६ सुरेशानन्द नवनी

**तृतीय श्रेणी**

११४ कुलानन्द जोशी
२५२ योगेश्वरीप्रसादघिल्डियालः

## मध्यमा परीक्षा

**द्वितीय श्रेणी**

२४६ प्रकाशचन्द्र आर्यः
२४९ जगदीशप्रसाद पोखरियालः
२५७ कृष्णलालः
२५८ श्रीराम गेदरः
२५९ पृथ्वीराज खीची
२६१ ओमप्रकाश शर्मा
२६४ विश्वदेव गुप्तः
२६६ चम्पालाल जैनः
२६७ कुञ्जीलाल कुशवाहः
२६९ रामचन्द्र परचुरे
२७२ बाबूराम वर्मा
२७३ श्रीनन्दनप्रसाद मिश्रः
२८४ सोहनलाल भट्टः
२८५ प्रेमचन्द्र त्रिपाठी
२८६ सुरेशचन्द्र पालः
२८७ रामकृष्ण दूबे
२८८ राजनारायण द्विवेदी
२८९ अशोककुमार राजपूतः
२९० श्यामबाबू द्विवेदी
२९२ लालजी द्विवेदी
४४१ कृष्णमोहन श्रीवास्तवः

**तृतीय श्रेणी**

२५० भुवनेश्वरप्रसादः
२६२ पृथ्वीसिंह टांड़ी
२६३ पारूमलः
२६५ हनुमानप्रसाद जोशी
२६८ कन्हैयालाल शर्मा
२७५ नाथूराम तिवारी
२७७ वारेसिंह ठाकुरः
२८१ दर्शनलाल भट्टः
२८२ सदानन्द शर्मा
२८३ गोवर्धनप्रसादः
२९१ हरदेवसिंह सेंगरः
४४२ वृजमोहन श्रीवास्तवः
४४३ श्रीमती अरुणा श्रीवास्तवः

## शास्त्री परीक्षा

**द्वितीय श्रेणी**

३६२ हरिशंकरसिंह वैद्यः
३६३ गरीबदास वर्मा
३६४ चन्द्रशेखर चतुर्वेदी
३६५ कन्हैयालाल शर्मा
३६८ सौखीलाल सिंहः
३७१ पतञ्जलि मिश्रः
३७२ वीरेन्द्रचन्द्र मिश्रः
३७३ महेन्द्रपाल सिंहः
३७४ प्राणनाथ उपाध्यायः
३७५ कल्पनाथ त्रिपाठी
३७६ भगवतीप्रसाद त्रिवेदी
३७७ मिश्रीलाल मिश्रः
३७८ रामचन्द्र शाक्यः
३८० कृष्णकुमार त्रिपाठी
३८१ जगनारायण मिश्रः
३८२ रामायण उपाध्यायः
४३१ बालेश्वर उपाध्यायः

| क्रमाङ्कः | नाम | क्रमाङ्कः | नाम | क्रमाङ्कः | नाम |
|---|---|---|---|---|---|
| ४३३ | महतार्बासिह कुशवाहः | ४६३ | गयाप्रसादः | ३६९ | रामजतन मिश्रः |
| ४३४ | शशीप्रभा शर्मा | ४६४ | विष्णुकिशोर दीक्षितः | ३७० | दूधनाथ गुप्तः |
| ४३९ | विजयकुमारी | ४६५ | सरजूप्रसाद मिश्रः | ४३२ | हनोमान निषादः |
| ४५८ | रामरूप यादवः | ४७६ | रमेशचन्द्र दीक्षितः | ४६६ | व्रजेशचन्द्र त्रिवेदी |
| ४६१ | चौधरी जितेन्द्रसिंहः | | तृतीय श्रेणी | | × |
| ४६२ | कृष्णकुमार गुप्तः | ३६७ | खुशीलाल वैद्यः | | |

## आचार्य परीक्षा

| | | | | | |
|---|---|---|---|---|---|
| | द्वितीय श्रेणी | ४२५ | माताप्रसाद शर्मा | ४७१ | रामशंकर वर्मा |
| ४१३ | शंकरलाल गोस्वामी | ४२६ | सन्तराम यादवः | ४७२ | यदुनन्दन दीक्षितः |
| ४१४ | शिवकुमार गुप्तः | ४२७ | प्रतापनारायण पाण्डेयः | ४७३ | शिवकुमार द्विवेदी |
| ४१५ | इन्द्रचन्द्र शर्मा | ४२९ | भगवतीप्रसाद अवस्थी | ४७४ | बाबूलाल दीक्षितः |
| ४१६ | रामलखन मिश्रः | ४३६ | गंगादीनः | | तृतीय श्रेणी |
| ४१७ | रामाश्रय मिश्रः | ४४६ | स्वामी ईश्वरदास उदासीनः | ४१८ | रामाधार पाण्डेयः |
| ४२० | दानपाल सिंहः | ४५० | कपूरसिंहः | ४१९ | नन्दकुमार पाण्डेयः |
| ४२१ | रामेश्वरदयाल शर्मा | ४५१ | रामेश्वरानन्दः | ४३८ | जगदीश शर्मा |
| ४२२ | रनवीरसिंह चौहानः | ४५२ | चक्रधरशर्मा जोशी | | केवलम् उत्तीर्णः |
| ४२३ | देवेन्द्रपाल सिंहः | ४७० | रामचन्द्रसैनी | ४३७ | जटाशंकर शुक्लः |
| ४२४ | ब्रह्मप्रकाश सारस्वतः | | × | | × |

—रमाकान्त पाण्डेयः
परीक्षामन्त्री
अखिल-भारतीय-धार्मिकाध्यात्मिक-संस्कृत-विद्यापीठस्य
महामण्डल-भवनम्, जगतगंज, वाराणसी

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगत्गंज, वाराणसी।

पञ्जीकृत संख्या—एल० १८९७

# सूर्योदय-शुभाशंसनम्

## —पद्मश्री दैवज्ञशिरोमणिः श्री विष्णुकान्त झा—

[ बिहारराज्ये सुप्रसिद्ध-दैवज्ञरूपेण जन-जनस्य सुपरिचितानां ज्यौतिषाचार्य-ज्यौतिषरत्न-ज्यौतिष-पञ्चानन-दैवज्ञशिरोमणि-साहित्यालङ्कारादि-नैकोपाधिभूषितानां श्री विष्णुदेव झा महाभागानां प्रौढं वैदुष्य-मभिलक्ष्य अचिरादेव भारतशासनेन ते 'पद्मश्री' इत्युपाधिना विभूषिताः। दरभङ्गा-संस्कृत-विश्वविद्यालयस्य शिष्टपरिषदः सदस्यानाम् ( सीनेट-मेम्बर ) एतेषां सूर्योदय-महामण्डलयोरुपरि महत्प्रेम वर्तते। तैरिदं प्रहितं सूर्योदय-शुभाशंसनमत्र प्रकाश्यते। ]

लोकानां हित - हेतवे बहुविधान् यज्ञान् करोति स्म यत्,
मानोपाधि - समर्पणेन विदुषां सम्मानमावर्धयत्।
प्रत्यब्दं बहुधा सुसंस्कृत - सभां दैव्या गिरोवृद्धये
भद्रं भारत - धर्म - मण्डलमिदं काश्यां व्यधादुत्तमम् ॥१॥

अनुपम - शुभपत्रं संस्कृतेनानुबद्धं गुणि - जन - रुचिरं सद् बोधगम्यं प्रशस्तम्।
भगवति बहुभक्तिं वर्धयन् भावुकानां जगति जयति नित्यं सौम्य - 'सूर्योदया'ख्यम् ॥२॥

अभय-गुण-सुदीप्तं स्पष्ट-वादित्वयुक्तं जन-हित-कृतिलग्नं संस्कृतोत्थान-मग्नम्।
विबुध - शुभकरं सत् साधु - भावोपपन्नं जयति जगति पत्रं दिव्य - 'सूर्योदया'ख्यम् ॥३॥

उदयति दिननाथे सा तमिस्रा - तमश्च प्रशमन - मुपगच्छत्येव यद्वद्धि तद्वत्।
प्रकटति शुभपत्रे मान्य - 'सूर्योदये'ऽस्मिन् जन-निवहगतं प्राक् तत्तमः शान्तिमेति ॥४॥

यावन्ति संस्कृत-गिरा रचितानि लोके पत्राणि सन्ति किल तेषु पुरातनं सत्।
काशी - सुतीर्थग - महान्वित - मण्डलोत्थं 'सूर्योदया'ख्यकमिदं जगति प्रसिद्धम् ॥५॥

'सूर्योदय'स्य शुभ - पत्रवरस्य मान्यो वैजान्वितः पुर - कराख्यक एष धन्यः।
'गोविन्द' - भृन्नरहरि - विदुषां वरेण्यः सम्पादको जयति योग्यवरो वरिष्ठः ॥६॥

श्री'सूर्योदय' - नामकस्य विलसत्पत्रस्य साम्पादिकीं
नाना - साधु - महत्त्व - पूर्णविषयैश्चालङ्कृतां शोभनाम्।
पाण्डित्येन परिष्कृतां सुर-गिरा व्याचक्षमाणां कृतिं
सम्यग्यो लिखतीह सोऽर्चित - पदः सम्पादको राजते ॥७॥

बहुविध - सुषमायुक् - पद्य-पुष्पैः प्रशस्तैः सुरुचिर-शुभ-माल्यं मान्य-'सूर्योदय'स्य।
हित-करण-निमग्नोऽहं सुगुम्फामि भक्त्या ग्रह-गणित-मतिज्ञः सन्नतो 'विष्णुकान्तः' ॥८॥

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य
मासिकं मुखपत्रम्

वर्षम् ४५

अङ्कः ९

सम्पादकः
गो० न० वैजापुरकरः

सितम्बर
१९६९

वार्षिक-मूल्यम्
५) रूप्यकाणि

प्रत्यङ्क-मूल्यम्
अर्धरूप्यकम्



## मोहन-महिमा

★

मोहन, तव महिमात्यवदातः !
तव जन्मना भरतदेशोऽयं धन्यतमः सञ्जातः ॥ १ ॥
दास्य-तिमिर-पीडित - देशेऽस्मिन् कश्चिन्नासीत् त्राता ।
त्वं करुणाकर ! दिनकर इव नीत्वा प्रकाशमायातः ॥ २ ॥
दीनार्ति-हरणशीलस्त्वं पतितानां प्रियबन्धुः ।
सत्या - ऽहिंसा - सेवादीनामुपासको विख्यातः ॥ ३ ॥
सर्वलोक - हितसाधक साधो विश्ववन्द्य सुमहात्मन् ।
श्रद्धामय - हृदयेन सदा क्रियते तुभ्यं प्रणिपातः ॥ ४ ॥

● ● ●

त्वं लोके जनतार्तिनाशनविधौ दक्षः सतामग्रणीः
सर्वस्मै जगते सदा त्वमवदाः प्रेमामृतं शान्तिदम् ।
सम्पूर्णं निजजीवने त्वमकरोः सत्यप्रतिष्ठां पराम्,
गान्धिन् ते सुयशश्शरीरमनिशं तिष्ठेत् जगत्स्वस्तये ॥

—श्री डॉ० शिवशरण शर्मा

## स्वर्गीयाः कविराज श्रीसत्यनारायण शास्त्रिणः

वाराणसी । सितम्बरमासस्य २३ तमे दिनाङ्के अपराह्ने २ वादन समये काश्या-मगस्त्यकुण्डस्थित-स्वीयावासे भारतप्रसिद्धाः पीयूषपाणयः पद्मभूषण विरुदालङ्कृताः भूतपूर्व-राष्ट्रपतिचिकित्सकाः कविराज श्री सत्यनारायण शास्त्रिमहाभागाः नः सर्वाः पण्डितमण्डलीः विहाय विबुधानां सदसि अधिवसितुं स्वर्गताः । ८२ वर्षीया एते महानुभावा चिरयुवासुलभ-मुत्साहं धारयन्त आसन् । संस्कृतविदुषां पुनरेकं छात्रमेवासीत् । दशभिर्दिवसैरतिसारेण पीडितास्ते आसन् । अन्तेऽपि योगमार्गोक्तदिशैव तैः प्राणत्यागो विहितः । तेषां निधनेन प्राचीनपण्डितानामवशिष्टा श्रृङ्खला भग्नेव । चरकमद्य तादृशं व्याख्यातारमन्वेषते । सर्वतन्त्र-स्वतन्त्राणां परमदयावतारायणामेषां निधनेन परिपीडिता लेखनी किमप्यधिकं लिखितुं न पारयति । अतो वयं तेषां चरणयोः हार्दिक-श्रद्धाजलिं समर्प्य पारिवारिकेभ्यः सह विनम्रां समवेदनां प्रकशियामः ।

—सम्पादकः

## अनुक्रमः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षे ] वाराणसी, भाद्रपदः २०२६ : सितम्बर १९६९ ई० [ ९ अङ्कः


## जय जय देव शम्भुबालम् !

जय जय देव शम्भुबालम्, वन्दे शशिशोभित-भालम् ॥ धृ० ॥

दुर्वाङ्कुर - मण्डित - गण्डम्, ब्रह्माण्डेशं चलशुण्डम् ।
धृतपाशाङ्कुश - रदखण्डम्, वारणतुण्डं तम - खण्डम् ॥

त्रिगुणातीतं विमलतरम्, लम्बोदर - मघनिवह - हरम्, मणिवलयाङ्कित - कमलकरम् ।
विहितखलविलय, सिद्धिमतिनिलय, चिन्तितं फलय, कलय इह कलिताम्बुज - मालम् ॥
चञ्चद्युगुल - श्रुतितालम् ॥ जय० जय० ॥ १ ॥

सुर - नर - मुनिवर - चित्तमुषम्, विनिवारित - सज्जन - जनुषम् ।
सिन्दूरारुण - वरवपुषम्, भू - जल - भा - ऽनिल - गगनजुषम् ॥

कटिसूत्रीकृत - भुजगेशम्, नयनमनोरम - शुचिवेषम्, कुरु करुणाघन शरणेशम् ।
मूषक - पत्र, विघ्नकर - पत्र, दुस्सह - विपत्त्र कुत्र यामीश्वरशोभाऽलम् ॥
हित्वा भवदङ्घ्रि - मृणालम् ॥ जय० जय० ॥ २ ॥

मङ्गलविधि - पूर्वविधानम्, कौशेयाम्बर - परिधानम् ।
श्री-धृति-लावण्य-निधानम् सकलाऽगम-निगमा-ऽवानम् ॥

पायस-मोदक - मधुराशम्, शुभवरदं त्वां विगताशम्, स्तौमि मोचय मम भवपाशम् ।
त्वयि मत्प्रेम, वसतु सत्क्षेम, मस्तु परहेम युवतिमतिरणुरपि न कदाऽलम् ॥
नूतन - बालक - गणपालम् ॥ जय० जय० ॥ ३ ॥

—स्वर्गीया कीर्तनाचार्याः श्री विनायक गणेश भागवताः—

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

—स्वर्गीयाः श्री विन्ध्येश्वरीप्रसाद शास्त्रिणः—

॥ अथ पञ्चदशः सर्गः ॥

स केशवानन्दयतिस्तपोधनः प्रसिद्ध - वृन्दावन - पुण्यधामनि ।
विनिर्मिते रम्यतये निजाश्रमे स्वशिष्यवृन्दैः सहितः समाययौ ॥ १ ॥

२. अयं गुरुर्यद्यपि दीक्षयाऽभवत्
परन्तु योगिप्रवरस्य योग्यताम् ।
अमन्यताऽतो मथुरामुपस्थित-
स्तदन्तिकं चापि ययौ यदा कदा ॥

३. गुरुस्तु मुक्तेन सदैव जीवता
स्वकीयशिष्येण महत्त्वमाप्तवान् ।
न चात्र चित्रं परिचिन्त्यतां बुधैः
पयोनिधिश्चन्द्रमसा प्रवर्धते ॥

४. यतीश्वरो ब्रह्मविदस्ति जन्मतो
न तस्य किञ्चिद् गुरुणा प्रयोजनम् ।
तथापि लोकव्यवहार-पद्धतिं
रिरिक्षिषुः संश्रितवान् गुरोः परम् ॥

५. गुरोः सदाऽऽध्यात्मिक-मार्गदर्शको-
ऽपि शिष्य एवाऽभवदित्यवेत्य सः ।
गुरुः स्वशिष्यं परमार्थ - वेदिनं
परं प्रसद्याऽऽद्रियते स्म सर्वदा ॥

६. अभूदयं तान्त्रिक - मार्गपद्धतिं
समाश्रितः सिद्धवरो महायशाः ।
स्वविद्यया साधयते स्म सन्ततं
स्वशिष्यवर्गस्य समस्तकामनाः ॥

७. उपासना-पद्धतिरस्ति तान्त्रिकी
द्विधा मता दक्षिण-वाम-नामतः ।
उभे जनानामधिकार-भेदतो
विमुक्तिमाप्ते परियच्छतः पराम् ॥

८. स दक्षिणो मार्ग इहास्ति पाशवो-
ऽपरस्तु वामः किल वीर उच्यते ।
अकर्म कुर्वन्नपि मोक्षमेति त-
न्नरःस वीरो गदितो हि तान्त्रिकैः ॥

९. पुमांश्च यो राजपथं समाश्रयन्
प्रयाति चेत्तन्महिमा न तादृशः ।
परन्तु यः सङ्कट - सङ्कुले पथि
व्रजन् स्वलक्ष्यं प्रति यात्यसौ वरः ॥

नितान्त-भीमे पथि वाम-नामके निपातशङ्का गमने पदे पदे ।
तथापि मार्गं तमथाऽऽश्रयन् पुमान् प्रयाति मुक्तिं ननु वीर एव सः ॥ १० ॥

( क्रमशः )

# गान्धि-शतसंवत्सरी-श्रद्धाञ्जलिः

**जयन्ति ते महात्मानो गान्धिनः सत्यशालिनः।**
**नास्ति येषां यशःकाये जरामरणजं भयम् ॥**

महतः प्रमोदावहमेतत्, यद् वर्षेऽस्मिन् प्रायोऽखिले विश्वस्मिन् भारतस्य राष्ट्रपितुः महात्मगान्धिनः 'शतसंवत्सरी'-महोत्सवः परया श्रद्धा-भक्त्या परिचाल्यते। १८६९ मितेशवीयवत्सरे अक्तूबरमासस्य शोभने द्वितीये दिने प्रेष्ठेनाऽनेन भारतीकुलालङ्कारेण न केवलमस्माकमेव प्राचीनतममिदं राष्ट्रं समुद्भासितं स्वावतरणेन, प्रत्युत विश्वस्मै भारतप्राणपदं सत्याऽहिंसापीयूषं श्रवणाञ्जलिपुटपात्रेण पाययित्वा भौतिकतायास्तीव्रतापस्य शामकोऽमोघ उपायोऽपि उपायनीक्रियत।

सामान्यतो नैकेषु राष्ट्रेषु यथाकालम् असंख्याता महापुरुषाः समुद्भवन्ति। भारतेऽपि अनादिकालतोऽद्य यावत् कियन्तो महात्मानोऽवतीर्णाः। किन्तु आत्महनो भौतिकविज्ञानस्य चरमोत्कर्षकरेऽस्मिन् युगे शाश्वतिक्याः शान्तेर्भारतीयः प्रत्नतमो राद्धान्तोऽनितरसाधारणेन लोकग्राह्येण नव्येन व्यापकेन रूपेण महात्मगान्धिनैव प्रसारितः। नूनं सर्वथा समुचिते काले विश्वस्मिन् तत्प्रसरण-माध्यमस्य सौभाग्यम् एतेभ्य एव महात्मभ्यः सुलभीभूतम्। अत एवाऽद्य प्रायोऽखिलं विश्वं तेषामिमं शतसंवत्सरी-महोत्सवं परया श्रद्धा-भक्त्या परिचालयति।

प्रायोऽत्र साभिप्रायं पदम्। यतो हि चीन-पाकिस्तान-सदृशानि आत्महत्यै बलात्प्रस्तुतानि कतिचन अङ्गुलिगण्यानि राष्ट्राणि शर्मदेनानेन स्वात्मनोऽसम्पृक्तताविधानमेव आत्मप्रतिष्ठाप्रश्नत्वेन परिकल्पयन्तो दरीदृश्यन्ते, यस्य फलं कदापि नैर्नाभुक्तं परिशिष्येतेति निश्चप्रचम्।

कामं महात्मगान्धिनः सक्रियमनुयायिनः गान्धिव्यक्तेरमुं गौरवं मन्येरन्। तैरनुप्राणितं महासङ्घटनं तज्जातीयं वा शासनतन्त्रम् आत्मनो लौकिकोत्कर्षस्य सफलतममवसरममुं मन्येत। गान्धिनो नाम्ना जीवनयात्रां निर्वहन्तः पुनरमुं प्रसङ्गं घृतकुल्या-मधुकुल्यानां सौलभ्यकरं मन्यमानाः शोभनान् दिवास्वप्नानवलोकयन्तु। वयं पुनरिमं महोत्सवं भारतस्य तद्दिव्यसन्देशस्य प्रकृष्टं पर्व मन्महे यं किल देशस्यास्य अग्रजन्मनः सकाशात् समादातुं साग्रहं सोपष्टम्भश्च समाह्वयन्ति महाराजा मनुदेवाः—

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥**

इत्यनेन सुप्रचारितेन सूत्रेण।

सुस्पष्टमेतत्, मानवस्य मानवता किल तदीये चारित्र्ये एव प्रतितिष्ठति। तदभावे मानवे पशौ च भेद एव नावशिष्येत। शोभनस्य लक्ष्यस्य संसिद्धयै शोभनमेव साधनमादाय तदनुष्ठानं चारित्र्याधायकम्। चारित्र्यस्यास्य प्रसवित्री सैव धरित्री भवति, या किल निरवधिकेन कालेन सम्यक् कर्षणेन उर्वरतां समाप्नोति। जीवजातममृतस्य परमात्मनः सन्ततिं समुद्घोषयन्ती भारतधरित्री तस्याश्च प्रेष्ठाः सूनव एव विश्वस्मै मानवीयचारित्रिकीं शिक्षां प्रदातुं समधिकृताः। यतो हि राष्ट्रगुरु-समर्थ रामदासप्रभृति-महात्मनां सूत्रमिदं यत् 'पूर्वं समाचर, तत उपदिश' इति, अत्रैव सावहितं सक्रियश्च समाचर्यते। देशोऽयं विश्वसिति—

**न कर्मणा न प्रजया धनेन,**
**त्यागेनैके अमृतत्वमानशुः।**
**परेण नाकं निहितं गुहायां,**
**विभ्राजते यद्यतयो विशन्ति ॥**

महात्मगान्धिनः शतसंवत्सरीयं विश्वस्मै चरित्र-शिक्षामिमां दातुं बहुमूल्यमवसरं नः समुपस्थापयति। अत एव वयमेतत् पर्व सप्रश्रयं सोल्लासञ्च अनुमोदयामः।

राजनैतिक्यादि - दृष्टिभिः महात्मगान्धिनो व्यक्तित्वं काममतितरां स्पृहणीयमनुकरणीयं चास्तु। वयं पुना राजनीतिललनायाः सौभाग्यबिन्दोर्धर्मस्य अध्यात्मस्य वा प्रोन्नायकस्य तात्त्विकसन्तविशेषस्यैव रूपेण तान् सर्वाधिकस्पृहणीयान् मन्महे। लोकोत्तरमेतत् तेषां बलमेव तदा सर्वथा निश्शस्त्रमस्माकं राष्ट्रं चिरकालिक-वैदेशिकदासतापाशैः उन्मोचयितुं प्राभवत्। रक्तपात - विहीनायाः स्वातन्त्र्यलाभक्रान्तेरयमादर्शो महात्मनां तेषाम् आत्मिकबलस्यैव विस्मयावहं विलसितम्। अन्यदेतद् यद् दुर्भगा वयं स्वातन्त्र्यप्राप्ति - समकालमेव तैर्निर्दशिताया दिव्यधाराया अस्याः स्रोत एव 'सेक्युलर'-राज्यमत्र संस्थाप्य शुष्कतां नीतवन्तः, अद्यापि नयामश्च। फलतोऽद्य अस्माकं देशे नितरां भयावहा अराजकताकल्पा बहुराजकताकल्पा वा स्थितिः समुपस्थिता। यथा कथञ्चन शासन-पीठाधिकृतिरेव परमुद्दिष्टमिव संवृत्तं दृश्यते। कर्तव्यापेक्षया अधिकारग्रहणे एव सर्वेषां स्वाभाविको भरो विलोक्यते। गान्धि-शतसंवत्सरी-प्रसङ्गेन अनावृतेऽस्मिन् सत्ये भारतीपुत्राणामस्माकं दृष्टिरावर्जिता चेदञ्जसा तेषां शतसंवत्सरी - समायोजनं सार्थकं स्यात्।

महात्मगान्धिभिरस्माकं संसारयात्रिणां कृते नैकानि बहुमूल्यानि जीवनपाथेयानि उपायनीकृतानि सन्ति। तानि किल परत्र इव इहापि शान्ति-सौमनस्याय सुखमयजीवन-यापनाय च सविशेषं प्रभवन्ति। नूनम् ईश्वरस्तत्प्रार्थना, अहिंसा-सत्यादीनि एकादशव्रतानि चैतादृशान्येव उपायनानानि। पूर्वमेतानि व्यक्तिगतोपास्ति-साधनत्वेन, तत्रापि पारमार्थिक - साधनचणैरेव समाद्रियन्ते स्म। गान्धिमहाभागैः पुनस्तानि सामूहिक-साधनरूपेण, तत्रापि च न केवलमध्यात्ममार्गे एव, प्रत्युत जीवनस्य निखिलेषु क्षेत्रेषु निर्विशेषतया प्रयोजकानीति महता भरेण सङ्घुष्टम्। यदि वयं तेषु दृशमावर्जयन्तो जीवने तानि समनुकर्तुं प्रयतेम, तदा संसारयात्रायामपि कदापि अशना-पिपासाभ्यां परिपीडिता न भवेम। परत्र च तेषां यादृशी कार्यकारिता, न सा विपश्चितां तिरोहितेति न तत्र बहु वक्तव्यमवशिष्यते।

महात्मगान्धिनां जीवनपाथेयमिदं विस्तरशोऽस्मिन्नेवाऽङ्के अन्यत्र लेखान्तरे निरूपितमास्ते। तन्मननेनास्माकं वक्तव्यं सहजत एव समुपबृंहितं स्यात्। वैज्ञानिकेऽस्मिन् युगे बुद्धिवादापरनामधेयस्य सर्वथाऽतिक्रान्तमर्यादस्य सम्प्रदायस्य महापूरे निमग्नस्य निखिलविश्वस्य, विशेषतो भारतराष्ट्रस्य कृते नूनमनन्यसाधारणोऽयं प्लवस्तेषां महात्मनाम्। ईश्वरनिष्ठा-तत्प्रार्थनासमन्वितस्य कृशकायस्यापि तेषामस्य धर्माचारस्य इहामुत्र-जीवनपाथेयकल्पस्य महत्तमस्य दायस्य वास्तविकं मूल्यं निर्धार्य वयं सर्वे भारतीयाः जीवने तमनुकर्तुं प्रवृत्ताः प्रभवेम, तदैव महतो गान्धिशतसंवत्सरी-महायोजनस्याऽञ्जसा साफल्यं भवेत्। तथाऽकरणेन, प्रदर्शनाडम्बरमात्र-पर्यवसायिना अन्यथाकरणेन वा तेषां शिष्टमपि नामाशेषतां गच्छेत्। तथाऽनपेक्षिता स्थितिः नायातु, एतदर्थं तेषामेव प्रेष्ठस्य भारतराष्ट्रस्य सर्वविधसमुन्नत्यै चास्माभिरद्य स महात्मा एव सश्रद्धं शब्दसुमाञ्जलि-समर्पणमुखेन सप्रश्रयं प्रार्थ्यते यतस्स्वीयं धर्माचारममुं परिपालयितुं नः सद्बुद्ध्या संयुनक्त्विति।

# जीवन-पाथेयम् : महात्मगान्धिनां प्रकृष्टो दायः

— श्री गोविन्द नरहरि वैजापुरकरः —

सम्प्रवृत्ते महात्मगान्धिनां शतसंवत्सरी-महोत्सवे तेषां महाभागानां विश्वस्मै भारतराष्ट्राय च प्रकृष्टतरो दायो जीवन-पाथेयं नाम, यत्र किल ईश्वरम्, तत्प्रार्थनाम्, एकादशव्रतानि चाधिकृत्य तेषां श्रेयः-प्रेयसाधकाः मार्मिका विचाराः परिगणितुं शक्यन्ते। तेषामेव शब्दैस्ते संक्षिप्य समीक्षणपूर्वकमत्र प्रस्तोतुं प्रवर्तामहे।

## ईश्वरः, तत्प्रार्थना च

**ईश्वरः—**

ईश्वरविषये महात्मगान्धिनः वदन्ति—"ईश्वरोऽस्त्येव। न दृश्यत इति तु अस्माकं दौर्भाग्यम्। निर्धनानां सेवैव ईश्वर-सेवा। स हि पिपीलिकायै 'कण'-मितं हस्तिने च 'मन'-मितं ददाति। पिपीलिकाया अपि ज्ञानतोऽपरिपीडनं तत्सेवैव। यो हि तां समाचरति, स अन्यान् प्राणिनः स्वजातीयं मानवं चापि कथं परिपीडयेत्? आत्मज्ञानमिदं जीवजातेन अर्थात् ईश्वरेण सह ऐक्य-तन्मयतासाधनेनैव समधिगम्यते। जीवजातेन ऐक्य-सम्पादनं नाम तद्दुःखेन स्वात्मनि दुःखानुभूतिः, तद्-दुःख-निवारणं चे"ति।

ईश्वरविषयकाणि एतानि तेषां सूत्राणि सर्वथा अध्यात्मनिष्ठान्यपि व्यवहारविधौ निरतिशय-सौमनस्याधायकान्यपि इत्यहो तेषां प्रौढत्वम्!

**प्रार्थना —**

'प्रार्थना'-शब्दार्थं निरूपयन्तस्ते आहुः—"स्वीयाऽयोग्यताया अशक्तेश्च स्पष्टं स्वीकरणं प्रार्थना। सहस्रनाम्नो भगवतो यत्किमपि नाम रोचेत, तद् भजनीयम्। सर्वाण्यपि नामजातानि एकं चैतन्यमेव व्याहरन्ति। प्रार्थना भजनं वा न जिह्वया, हृदयेन जायते। अत एव मूका अपि प्रार्थनां कर्तुं शक्नुवन्ति। हृदि हालाहलं चेत्कृतं जिह्वाग्रवर्तिना अमृतेन। यावन्मानवः अन्तर्बहिः सत्यं प्रामाणिकतां पावित्र्यादिकं च गुणजातं न वर्धयति, हृदयेन रामनामोच्चारणं सर्वथाऽसम्भवी"ति।

प्रार्थना-निरूपणेऽस्मिन् हार्दिकतया समं सद्-गुणानामाधानाय तद्वर्धनाय च उपदेशः किल प्रार्थनाविषयक-प्रत्नोपदेशार्णवतो नूतनतम-रत्नाविष्करणं नाम।

महात्मनः प्रेष्ठाः शिष्याः सर्वोदय-दर्शनाचार्याः श्री विनोबा भावे महाभागाः पुनर्भङ्ग्यन्तरेण महात्मनोऽस्य ईश्वरविषयक-विश्वासस्य विश्वतोमुखं भाष्यं समाचरन्त एकत्र दृश्यन्ते। ते प्राहुः—'आत्मस्मृतिव्यतिरिक्तानां सर्वासां स्मृतीनां निवारणं ब्रह्मनिर्वाणाय परमावश्यकम्, यच्च सुखस्य निस्सीमो निधिः। आत्मस्मृत्यैव इतरासां सर्वासां स्मृतीनां विलयो जायते। परं स्मृतिविलयोऽयं सर्वथा कठिनतरः। अन्ततस्तदर्थं भगवतो भक्तिरनिवार्यैव। भगवत्स्मृत्यैव भगवत्परतया वा व्यर्थस्मृतीनामासां निराकरणं सुष्ठु प्रभवति। अत एव भगवान् वदति—**अनन्यचेताः सततम्** इत्यनन्तरं **यो मां स्मरति नित्यशः** इति, **युक्त आसीत मत्परः** इति च। अनन्यचेतस्त्वं स्मृतिसामान्यनिराकरणमेव। तच्च अन्ततः 'यो मां स्मरति नित्यशः' इत्यनेन अर्थात् भगवत्स्मृत्यैव साध्यते। अपूर्तेः पूरणं बाह्यतो वस्तु समादायैव क्रियते सर्वैः। आत्मस्मृतेः परिपूरणाय किमपि बाह्यं वस्तु न प्रभवति, पर्यन्ते परमात्मन एव तत् शक्यते; यतो

हि स हि सर्वेषामात्मनां निधिर्गीयते। इत्थम् ईश्वरस्मरणम्, ईश्वरप्रार्थना वा सर्वथाऽनिवार्येति।

## एकादश व्रतानि

**व्रतानां मूल्यम्**

व्रतानि पुनर्भारतीयसंस्कृतेः सुप्रमाणितानि समुत्कर्ष-साधनानि। तैरेव मानवः क्रमश उच्चादुच्चतरं पदं समारोढुं दृढावलम्बः प्रभवति। व्रतपालनं कस्यापि साधकस्य, सेवकस्य, ब्रह्मचारिणः, गृहस्थस्य, वानप्रस्थस्य, संन्यासिनः—किं बहुना, सर्वस्य मानवस्य अनिवार्यं वस्तु। अत एव वैदिके धर्मे 'चतुर्वर्ग-चिन्तामणि'-प्रभृतिषु ग्रन्थेषु स्वतन्त्रमेव व्रतखण्डं निर्माय तदशेषतो व्याख्यानविषयतां गच्छति। जैन-बौद्ध-सिख-यावनाद्यवान्तरसम्प्रदायानपि तत्पूर्णतो व्याप्नोति। जैनधर्मे पुनः समग्रं जीवनमेव प्रायो व्रतमयं याप्यते साधकैः। महात्मगान्धिभिरपि व्रतान्येतानि समादृत्य स्वीययाऽनितरसाधारण्या प्रतिभया अध्यात्मजीवनवत् व्यावहारिकेऽपि तानि संक्राम्य मानवस्य उभयलोकपन्थानौ प्रशस्तीकृतौ। ते वदन्ति—

"प्रतिज्ञाहीनं जीवनं किल निराधारं गृहमिव। प्रतिज्ञाग्रहणं नाम निश्चलीभावः। अनिश्चलोऽदृढप्रतिज्ञश्च कस्य विश्वासभाग् भवेत्? यो हि स्वात्मनो जीवनं प्रतिज्ञामयं न विदधाति, न स जातुचित् स्थैर्यं भजते।

"भगवतः पतञ्जलेः पञ्चव्रतेषु यं कमप्येकं समादाय समुपास्तिश्चिकीर्ष्येत चेन्न सा सम्भविनी। किन्तु तेभ्यः सत्यमेकमाद्रियेत चेत्तदा तत्संभवः। यतो हि शिष्टानि चत्वारि महाव्रतानि सत्ये निगूढानि। अन्यच्च, युगस्यास्य कृते पुनर्न पञ्चैव, प्रत्युत एकादशा-महाव्रतोपव्रतान्यपि परमावश्यकानि। श्री विनोबा भावे महाभागेन तानि सूत्ररूपेण संग्रथितानि श्लोकद्वये। यथा—

अहिंसा सत्य अस्तेय ब्रह्मचर्य असंग्रह।
शरीरश्रम अस्वाद सर्वत्र भयवर्जन॥
सर्वधर्मसमानत्व स्वदेशी स्पर्शभावना।
विनम्रव्रत निष्ठा से ये एकादशसेव्य हैं॥ इति।

व्रतान्येतानि सत्यपालनादेव आविर्भाव्यानि। सर्वाण्यपि समबलानि। एकस्यापि वैकल्ये सर्ववैकल्यप्रसङ्गः। स एव यथार्थतो ब्रह्मचारी यो मनसा, वाचा, कर्मणा एकादशान्येतानि व्रतानि समाचरेत्।"

एतेषु आदितः पञ्च 'महाव्रत'-नाम्ना प्रथितानि प्राचीनकालतः प्रचलितानि। शिष्टानि पुनर्महात्मना संयोजितानि 'उपव्रत'-नाम्ना व्याहर्तव्यानि। अहिंसा - सत्या - ऽस्तेय - ब्रह्मचर्या - ऽपरिग्रहरूपाणां महाव्रतानां यमापरपर्यायाणां प्रचलनं प्राचीनकालत एवासीत्। परं तानि मुमुक्षुमात्रानुसरणीयान्येव अभवन्। उपव्रतसहितान्येतानि पुनः सर्वेषां मानवानां कृते निर्विशेषं समादरणीयानीति महात्माऽयं व्याजहार। व्रतानामेतेषां साधनाय तेन महात्मना दक्षिणाऽफ्रीका-देशे भारते च नैकाः आश्रमसंस्थाः सङ्घट्टिताः। तत्र स्थित्वा स्वयं तान्यनुष्ठाय आश्रमवासिभिरपि तदनुष्ठानं कारयामास एषः। एकादशव्रतानामेतेषां तदुद्भावितानि स्वरूपाणि तेषां पर्यवेक्षणञ्च परमुपयोगीति कृत्वा समासतस्तदत्र समुपन्यस्यते।

**अहिंसा—**

अहिंसा-विषये महात्मभिरेभिः बहु प्रपञ्चितमास्ते। तेषां समग्रं जीवनमेव अहिंसाया मूर्तं रूपम्। तदेव व्रतं व्याचिख्यासुरयं महात्मा वदति—"प्रेम नामैतादृशं वस्तु यत् कठोरतममपि शत्रुं मित्रतां नयति। सुषुप्तौ या किल अहिंसा-नाम्ना अवस्था प्रथिता, सैव जागरे प्रेमाख्यां भजते। अहिंसामार्गो न भयाप्लुतानां कापुरुषाणाम्। क्षात्र-

धर्मस्य परिसीमैव सा। यतो हि तत्राऽभयस्य षोडश कलाः समुल्लसन्ति। अस्या आरम्भो गृहत एव भाव्यः। मानसिकोऽयं स्थितिविशेषः। एनामहिंसां विहाय कापि मर्यादा न किमपि मूल्यं धत्ते।

"इत्थमहिंसा नाम प्रेम-समुदायो वैरभावस्य सर्वथा त्यागश्च। तत्र दीनता भीरुता च कथमपि पदं नादधतः। दृढता, वीरता, निश्छलता चैव तदुपादानभूता। केवलं जीवदया-पालनेनैव न कामादिषड्रिपूणां जयः साध्यते। परं प्रतिमानव-महिंसैव तत्र प्रभवति। षड्रिपुविजयिनश्चेतः प्रेमरसाप्लुतः सागरो नामे"ति।

अहिंसाया विस्तृतं विवरणं योगशास्त्रे पुराणेषु जैनधर्मे च द्रष्टुं शक्यम्। भगवता पतञ्जलिना तु स्पष्टमेवोक्तम्—**अहिंसाप्रतिष्ठायां तत्सन्निधौ** वैरत्यागः (यो० द० २.३५) इति। परं महात्मनाऽनेन साऽत्र इत्थं व्याख्याता यथा इह परत्र च सममेव समुपयुक्ता सिद्ध्यति। सर्वोदयदर्शनाचार्यैः श्री विनोबा भावे महाभागैः पुनरस्या महात्मोक्तेः यादृशं विश्वतोमुखं भाष्यं कृतम्, तदपूर्वमेव। संक्षेपतस्तेषां मतेन अहिंसाया गणितं नाम 'आत्मदर्शनम्+हरिदर्शनम्=पूर्णाऽहिंसा' इत्येव निष्कर्षरूपेण वक्तुं शक्यते। अतो व्रतमिदमविशेषेण सर्वैरनुग्राह्यम्।

सत्यम्—

द्वितीयस्य सत्यव्रतस्य विषये महात्मानः सङ्गिरन्ते यत् "सत्यं नाम मनोवाक्कायानामेकरूप्यम्। ततोऽप्यधिकं यदि किञ्चित् स्यात्। जगति यद्वर्तते, आसीत् भविष्यति वा, तदेव सत्यम्। सत्यमेतादृशं परमात्मैव। नहि ततः परं किञ्चित्। शुद्धसत्यस्य शोधनं नाम रागद्वेषादि-द्वन्द्वेभ्यो विमुक्तिः।"

इत्थं यदा सत्यं परमात्मवद् एकमेव, तदा किमिति एकस्यैव तस्य विभिन्नानि रूपाणि दृश्यन्ते जगति। एकमेव सत्यमन्यस्मै असत्यं प्रतीयते, कोऽत्र हेतुः? प्रश्नमिमं समुत्तरयन्तो महात्मन आहुर्यत् "महत्तरस्य बिम्बस्य आश्रयभेदेन विभिन्नरूपतेतिवत् सत्यस्यापि नैकानि रूपाणि दृश्यन्ते। तथाप्यन्ततः तदेकमेव। एवंस्थितौ 'सत्याचरणमेव मे लक्ष्यम्, इन्द्रियाधीनः कदापि न भविष्यामी'ति निश्चयवान् मनोभूमौ स्थित्वा मनसा यादृग्-रूपं सत्यमनुभवेत्, तदाचरणमेव तस्मै हितावहम्। परस्यानुकरणं न जातु सत्याचरणम्। मनसा, वाचा, कायेन चैकरूपमेव वक्तव्यम्। इदं तु सर्वैः कर्तुं शक्यत एव, कामं सत्यस्य चरमरूपस्याऽनुष्ठानं सुदुष्करं स्यात्।

"अन्यच्च, सत्योपासकस्य कृते मौनं महत्तरमुपकारकम्। भाषणेऽतिशयोक्तेरवकाशोऽवर्जनीय एव। परं मौनेन नूनमसत्यवर्जनं बहुशः सहजतश्च सिद्ध्यति। मितभाषी अपि विचार्य वदतीति मितभाषणेनाऽपि असत्यतो रक्षणं सत्यपालनञ्च अर्थतः संसाध्यते।"

त्रिकालाबाध्यं सत्त्वम्, तच्च ब्रह्मणो नीरूपस्य निर्धर्मिणः प्रथमं कल्पितं रूपं धर्मो वा। तदेव हि सत्यं महात्मनोऽन्ततः समुद्दिष्टम्। तदेव पुनर्यथा तैर्व्यावहारिकोपास्ति-विषयतां नेतुं समुपदिष्टम्, सर्वशास्त्र-सार एव सः। सत्येन सह मौनस्य साध्यसाधकभावः पुनरतितरां स्मरणीयोऽनुकरणीयश्च। इत्थं प्रत्येकेन सत्यव्रतोपासनेन चरमसत्यपदं सर्वथा समाक्रमणीयमेव।

अस्तेयम्—

अस्तेयव्रतविषये गान्धिमहाभागा वदन्ति यत् "जगति परस्य कस्यचन वस्तुनोऽपहरणं चौर्यम्, स्तेयम् वेति नाम्ना प्रथितमेव। पुनः स्वाधिकृतस्यापि पैतृकदायादेः विना तदाज्ञां ग्रहणमपि

स्तेयमेव। किं बहुना, यत् न स्वात्मने परमावश्यकम्, तद्ग्रहणमपि अस्तेयव्रतविप्रतीपमेव। मार्गे पतितस्य अनधिकृतायमानस्यापि वस्तुनो ग्रहणं स्तेयमेव। उपवासकाले स्वादचिन्तनमपि अस्यामेव कोटौ अन्तर्भवति। अन्ततः परोद्भासितस्य विचारस्य स्वकीयविचाररूपेण समुपस्थापनमपि तथा। एवमादीन् स्थूल-सूक्ष्मान् स्तेयभेदान् सावहितं ज्ञात्वा तेषां वास्तविकं वर्जनमेवास्तेयं महात्मनां मतेन। अस्तेयव्रतानुष्ठातुः कृतेऽतितरां नम्रता, विचारशीलता, सावधानता, निराडम्बरता च परमावश्यकी।"

महात्मनामेषां प्रेष्ठशिष्यैः श्री विनोबा महाभागैः पुनरयं विषयः प्रकारान्तरेण व्याख्यातः। ते वदन्ति—'मनुष्यस्य त्रयो जीवनप्रकारा भवन्ति : १. भिक्षा, २. व्यवसायः, ३. स्तेयश्च। भिक्षानाम समाजस्य अधिकाधिकां सेवां कृत्वा स्वल्पतरग्रहणम्। व्यवसायो नाम समाजस्य विशिष्टां सेवां कृत्वा तस्याः समुचित-शुल्कग्रहणम्। इतोऽन्यत् स्तेयं नाम समाजस्य न्यूनातिन्यूनां सेवां कृत्वा अधिकाधिक-ग्रहणम्। प्रसङ्गविशेषे समाजस्य हानिमपि कृत्वा स्वार्थसाधनमपि स्तेयमेव। एतादृशस्य स्तेयस्य सर्वथा परिवर्जनमेव अस्तेयव्रतं महात्मानुगृहीतस्य अस्तेयव्रतस्य रहस्यतमं वस्तु नामेति।

**ब्रह्मचर्यम्—**

ब्रह्मचर्य-व्रतविषये महात्मनां मतमिदं यत् "यो मनसा विकारी तस्य ब्रह्मचर्यं स्खलितमेव मन्तव्यम्। विचारे निर्विकारतामबिभ्रत् कोऽपि पूर्णब्रह्मचारी भवितुं न शक्नोति। तच्च 'पर'-दर्शनेनैव साध्यते। दृष्टे परावरे स्त्री-पुंभेद एव विलयं गच्छतीति कुतोऽष्टविधमैथुनरूपस्य ब्रह्मचर्यविप्रतीपस्य भावस्य प्रसरः? निर्भयस्यास्य ब्रह्मचर्यस्य पालनं सर्वदा शुभचिन्तनेनैव साध्यम्। नामस्मरणमप्यत्र भूयसा सहायकं भवति।"

व्रतस्यास्य निरूपणे महात्मनां हार्दमिदमवगम्यते यत् न केवलं जननेन्द्रिय-संयमनमेव ब्रह्मचर्यम्। प्रत्युत एकादशेन्द्रियाणां सर्वेषां संयम एव। आसक्तेः परो न कोऽपि ब्रह्मचर्यस्य परिपन्थी। सङ्कुचितं प्रेमैव तस्याऽपरः पर्यायः। व्यापकं प्रेम तु अनासक्तावेव परिगण्यते। अत एव गार्हस्थ्येऽपि सन्तानमात्रकामनया स्त्रीसङ्गे ब्रह्मचर्यं न व्याहन्यते। तत्रापि प्रथमसन्तानपर्यन्तं नियतकाले ऋतुप्रभृतिषु तथाकरणे तथेति शास्त्रकृतां निदेशः। प्रथमसन्तान एव धर्मज उक्तस्तैः। द्वितीयादिसन्तानजातानि पुनः कामजानीत्येव शास्त्रकृतां राद्धान्तः। एतादृशं पूर्णं निर्भयं ब्रह्मचर्यं तु परदर्शनेनैव साध्यते इति महात्मनां वचः सर्वथा शास्त्रानुमोदितमेव। यावत्तत् न सिद्ध्यति, तावत् शुभचिन्तन-भगवन्नामस्मरणेऽपि ब्रह्मचर्यसाधने परं प्रयोजके जनसाधारणानुकरणीये। सर्वदा शुभचिन्तनेन मनसि विकारप्रसरो वार्यते, भगवन्नामस्मरणेन च दैवात् तादृशप्रमादावसरे समुपस्थितेऽपि रक्षणं भवति।

**असङ्ग्रह-व्रतम्—**

अपरिग्रहापरपर्यायस्य असङ्ग्रहव्रतस्य विषये महात्मानो वदन्ति यत् "अनावश्यकवस्तुनो ग्रहणमेव सङ्ग्रहः। सत्यशोधकेन सदैव असङ्ग्रहिणा भाव्यम्। आदर्शभूत आत्यन्तिकोऽपरिग्रहस्तु गृहाऽन्न-वस्त्र-बलहीनो भूत्वा विचारणम्। अन्नादीनामावश्यकताः भगवानेव पूरयिष्यतीति मत्वा तथावर्तनम्। अमुमेव अपरिग्रहं हृदि विभाव्य जीवने यावच्छक्यम् अनावश्यकवस्तुतो ग्रहणं परिवर्ज्यं व्रतमिदमनुष्ठेयं जनसाधारणेन। परिग्रहेऽस्मिन् निरर्थकविचारा अपि विषयतां भजन्ते। ईश्वर-

विमुखताऽऽपादका विचारा अपि तथा। अतोऽपरिग्रहनिष्ठैस्तेभ्यः सर्वेभ्यो विरतैर्भाव्यम्।"

महाव्रतमिदं सावधानतावृत्तेः समानान्तरं वक्तुं शक्यते। यावदावश्यकं तावदेव उपादेयम्, अन्यत् त्याज्यमिति सावधानवृत्त्यैव पालयितुं शक्यमिदम्। तदर्थं स्वल्पातिस्वल्पवस्तुभिः जीवननिर्वाहः स्वावलम्बनञ्च परमावश्यकम्। कस्यापि वस्तुनोऽधिकाधिकमुपयोगः स्थिरीकरणञ्चेति व्रतस्यास्य मुख्यं सूत्रम्। अपरिग्रहो नाम न प्रमादेन वस्तुनो विनाशनम्। अपरिग्रहेणानेन सुखमविनाभूतम्। अन्ततो देहस्यापि अपरिग्रहापरपर्यायस्त्यागः परमस्य लक्ष्यम्। देहं विसृज्य परमात्मनि विलीय तदीयशाश्वतानन्दानुभवे एव असङ्ग्रहस्य वास्तविकी सिद्धिः। तदेव लक्ष्यं पुरतः संस्थाप्य यथाशक्ति तदनुकूलप्रयतनमेव असङ्ग्रहव्रतनिष्ठायाः सारतत्त्वं वक्तव्यं भवति।

**शरीर-श्रमः—**

शरीर-श्रम-व्रतविषये महात्मगान्धिनामिदं मतं यत् "कायिकश्रमो मानवमात्रस्य कृते सर्वथाऽनिवार्य एव। जीवनयात्रायाः कृते श्रमकरणम् ईश्वरीयो निर्देश एव। यद्यस्य पालनं प्रामाणिकतया क्रियेत चेत् साम्प्रतिकः स्वामि-भृत्ययोर्व्यापको विवादः सङ्घर्षो वा सहजत एव विलयं गच्छेत्। अहिंसायाः पालनाय सत्यस्य आराधनाय, ब्रह्मचर्यस्य च स्वाभाविकीकरणाय कायिकः श्रमो रामबाण एव। 'स्वीयस्वेदबिन्दून् पातयित्वा करपट्टिकामर्जय' इत्यस्ति 'बाइबिल'स्य वचनम्। यज्ञा हि बहुविधा भवन्ति। तेषु करपट्टिकार्थं शरीरश्रमोऽप्यन्यतमः। तथा प्रयतमाने विपुलान्नलाभो राष्ट्राय, तेन च विविधचिन्ताभ्यो निवृत्तिरपि जायते।"

श्री विनोबा महाभागैः यज्ञस्य व्याख्यैवेयं कृता यज्जन्मतो मानवः समाजस्योपकारं गृह्णाति। तेन च तत्साधनानां ह्रासो जायते। यज्ञाः पुनस्तद्ध्रासस्य पूर्तिमाचरन्ति। एवञ्च समाजोपभुक्तवस्तूनां ह्रासपूर्तिकरो यज्ञः सिद्ध्यति। सत्येवं शरीरश्रमस्य यज्ञत्वं सुस्पष्टमेव। महात्मगान्धिभिः शरीरश्रमस्यास्य सिद्ध्यै एव चरखा-चक्रं प्रस्तूय सूत्रनिर्माणविधिः समुद्भावितः। तेन च दैनन्दिनावश्यकताया अन्नानन्तरं द्वितीयावश्यकताप्रकारस्य वस्त्रस्य च स्वावलम्बनं सहजतः सिद्धचति। स्वावलम्बिजीवनस्य महत्त्वं विदुषां कृते पृथक् निरूपणीयतां नापेक्षत एव। अस्मिन्नेव प्रसङ्गे महात्मभिः धनाध्यक्ष (ट्रस्टीशिप)-कल्पनाप्रस्तावः समुपस्थापितो येन धनपति-निर्धनानां स्पर्धाऽपि अकस्मादेव विलयं याति। शरीरश्रमव्रतेन च अध्यात्मपरिपन्थी तमोगुणो रजोगुणश्च मानवस्य नियम्यते। इत्थमनेन व्रतेन अध्यात्मसाधनेन सहैव लौकिकः स्वामि-सेवकसङ्घर्षः, धनपति-निर्धनसङ्घर्षोऽपि सहजतः परिह्रियते इति व्रतमिदं सर्वथाऽनुष्ठेयम्।

**अस्वाद-व्रतम्—**

अस्वादव्रतविषये महात्मगान्धिन आहुः—"अनायासेन यत्किमपि पाचितं भवति, सर्वमपि अस्माकं कृते ग्राह्यम्, न कथमपि त्याज्यम्। ईश्वरकृपां मत्वा सन्तोषपूर्वकं शरीरनिर्वाहाय तद्ग्रहणम् अस्वादव्रत-निष्ठायाः परं रहस्यम्। ब्रह्मचर्यव्रत-पालनाय जननादि-सर्वेन्द्रियाणां संयमनस्य आवश्यकत्वेऽपि स्वादग्राहकस्य रसनेन्द्रियस्य संयमनं परमनिवार्यम्। आहारः सदैव स्वल्पः, स्वाभाविकोऽनुत्तेजकश्च भाव्यः। अन्ततोऽस्वादो नाम स्वादस्याभावः। स्वादश्च रसः आनन्दो वा। औषधं यथा शरीररक्षणायैव भक्ष्यते, न तत्र स्वादस्यावसरः, तथैव भोजनमपि ग्राह्यं केवलं शरीरयात्रानिर्वाहाय। इतोऽन्यत् सामूहिक-भोजने-

नापि अस्वादनिष्ठापोषणे साहाय्यं भवति। तत्र कस्याप्येकस्य रुचिविशेषेण पाको न निष्पाद्यते। अत एव सहजतः प्रतिव्यक्तिगता भिन्ना रुचयो नियम्यन्ते।"

अस्वादविषये विशेषतो विमर्शनीयं नावशिष्यते। अत्यन्तदौर्बल्यप्रयुक्तो दोषो नाम स्वादरसो महतो विपदः पदम्। स्वादलोभेनैव मीनाः बडिशे बध्यन्ते। जितं सर्वं रसे जिते इति हि सूक्तिर्न कस्याप्यविदितेति व्रतमिदं सर्वसाधारणैरनिवार्यतोऽनुष्ठेयमेव।

**भयवर्जनम्, अभयं वा—**

भयवर्जनम् अभयं वा दैवीसम्पत्तेः सर्वाग्रगण्यो गुणो भगवतैव गीतायां प्रोक्तः—**अभयं सत्त्वसंशुद्धिः** इत्यादिना। तद्विषये महात्मानो लिखन्ति—"अभयमन्तरा सत्यशोधनमेव कथम्? **हरिनो मारग छे शूरानो कायरनुं काम जौने**—अर्थात् हरेर्मार्गः शूराणां वर्तते, नहि तत्र कापुरुषाणां प्रसक्तिः। अभयं नाम समस्तबाह्यभयेभ्यो निवृत्तिः। काम-क्रोध-लोभ-मोहाद्यान्तररिपुभ्योऽपि भयनिवृत्तिरावश्यकी। वस्तुतः एतेषां जयेनैव बाह्यभयेभ्यो निवृत्तिः सुलभा भवति। देहसम्बन्धेनैव आसक्तिः, रागश्च। शरीरे कुटुम्बे च ममत्वेनैव भयं जायते। परं 'सर्वमेतत् न मम, ईश्वरस्यैव एतत्सर्वम्, अहमपि तस्यैव' एतादृशनिष्ठाया दृढीकरणेन नूनं सर्वभयतो निवृत्तिः भवति। उपनिषदा उच्यते—**तेन त्यक्तेन भुञ्जीथाः**। तस्यैव सेवका भूत्वा शून्यभावः स्वीक्रियते चेत् सर्वभयतो निवृत्तिः, सहजा शान्तिः, सत्यनारायणस्य दर्शनञ्च जायते।"

अभयव्रतमिदं सत्याहिंसाभ्यां सम्बद्धम्। अहिंसायाः पूर्वोक्तरूपद्वयेन आत्मदर्शन-हरिदर्शनरूपेण निर्भयतापरपर्यायम् अभयमाविर्भवति। भयमिदं शारीरिकमानसिके व्यक्तिगत-सामूहिके चेति भेदाभ्यां विभज्यते। तत्र शारीरिकं मानसिकञ्च व्याख्यातपूर्वमुपरिष्टात्। व्यक्तिगत-निर्भयता पुनस्त्रिविधा श्री विनोबा महाभागैः व्याख्याता वर्तते। सा चेत्थम्: १. निष्णाता निर्भयता, २. ईश्वरनिष्ठा निर्भयता, ३. विवेकी निर्भयता च। मर्यादितविषयस्य अभ्यासेन जायमाना आद्या। द्वितीया भक्ति-वैराग्याद्याध्यात्मिक-साधनसाध्या। चरमा विवेकी-निर्भयता नाम भयप्रसङ्गेष्वपि चित्तस्थैर्यं विधाय विवेकेन सम्प्राप्तया स्थित्या सह सकलः सङ्घर्षः, अन्ततश्च हरिस्मरणेन निःसङ्कोचं देहोत्सर्गश्च। व्यक्तिगतनिर्भयताया इदं निष्कृष्टं रूपम्। सामूहिकनिर्भयता पुनरस्माभिः वैदेशिकदासतापाशानां छेदनावसरेऽनुभूतपूर्वैव। सेयं निर्भयता अभयं वा अहिंसा-पालनेनैव साध्यत इत्यस्ति महात्मनः समग्रस्य व्याख्यानस्य तत्त्वम्।

**सर्व-धर्म-समानत्वम्—**

सर्वधर्म-समानत्वस्य सर्वधर्म-समभावस्य वा विषये गान्धिमहाभागा आहुर्यत् सर्वधर्म-समभावेन स्वधर्मविषये न जातु औदासीन्यमायाति। प्रत्युत स्वधर्मविषयिणः प्रेम्णः आन्ध्यं दूरीभूय तद्विशुद्धं ज्ञानमयं सत् परिणमते। सर्वधर्मसमभावेनैव अस्माकं दिव्यचक्षूंषि समुन्मीलन्ति। धर्मान्धता-दिव्यदर्शनयोः उत्तर-दक्षिणायितमन्तरं नाम। सर्वधर्माणामैक्यं किल नावश्यकम्। प्रत्युत विभिन्नधर्मानुयायिनः परस्परमादरभावं सहिष्णुतां च धारयन्तु। सर्वेषां धर्माणामात्मा एक एव। स हि विभिन्नप्रकृतिषु मूर्तरूपतां याति। कालस्य आन्तं यावदिदं वस्तु चिरस्थायि। अतो मतिमता बाह्यं कलेवरमुपेक्ष्य विभिन्नाकृतिषु वर्तमान एक आत्मैव परिदर्शनीयः" इति।

सर्वधर्म-समभावाख्यमेतद् व्रतम्, एतन्नामाऽपि महात्मगान्धिनां चेतसि दक्षिणाफ्रीकादेशे सत्या-

ग्रहप्रसङ्गे उत्स्फूर्तम्, भारते च पुनरभ्यासेन तद् दाढर्च्यं गतम् । अहिंसा-सत्याभ्यां सम्बद्धमेतद् व्रतम् । अनेकानेकजातिसङ्कुलेऽपि अस्माकं भारते देशे यूरोपीयराष्ट्रकल्पेषु विभिन्नप्रदेशेषु विलक्षण-मैकमत्यं परिदृश्यते, यदा किल एकभाषाभाषिष्वपि अस्मदीयप्रदेशकल्पेषु तेषु राष्ट्रेषु तन्न दृश्यते । अस्य नूनमेको हेतुः सर्वधर्मसमभाव एव । पर-धर्मस्यानादरः पर्यायतः स्वधर्मस्यैवानादरोऽत्र मन्यते । प्रत्येकधर्मस्तदनुयायिनां कृते स्वधर्मरूपेण नूनं पूर्णः । विनोबा महाभागानां शब्दैः स्वमातु-रुपासनवत् प्रत्येकधर्मानुयायिभिः स्वधर्मोपासनं कर्तव्यम् । स्वतन्त्ररूपेण पुनः सोऽपूर्ण एव । सर्व-धर्मसमभावेन सम्भाव्यमानस्य स्वधर्म-प्रमाद-सन्देहस्य परिहारः पुनरुपरिष्टात् महात्मनैव कृत इति व्रतमिदं सर्वथा राष्ट्रियैक्यसाधकम् ।

**स्वदेशी निष्ठा—**

स्वदेशीविषये महात्मानः प्रोचुः—"स्वदेशी-भावनाया अयमर्थो यदस्माकं सा भावना, या किलास्मान् दूरतरं क्षेत्रं विहाय स्वसमीपवर्तिनः प्रदेशस्यैव उपयोगं सेवां च शिक्षयति । मम देश-भक्तिर्वर्जनशीला ग्रहणशीला चाप्यस्ति । वर्जन-शीलाया अयमाशयो यदहं सप्रश्रयं स्वकीयं चेतो जन्मभूमावेव केन्द्रितं करोमि । ग्रहणशीलाया इत्यस्यार्थो यन्मम सेवायां प्रतिस्पर्धाया विरोधस्य वा भावना लेशतोऽपि न वर्तते । स्वसम्पत्तेरेव उपयोगो विधेयो येन भवतां प्रतिवेशी कथमपि पीडितो न भवेत् । नायं शासकीयनियमः, अपितु महत्तरो जीवनसिद्धान्त एव । अहिंसायाः प्रेम्णो वा समुचितपालनस्य कुञ्जिकैवेयमि"ति ।

स्वदेशभक्तिविषये पुनः किन्नाम वक्तव्यम् ? भग-वता मर्यादापुरुषोत्तमेन रामभद्रेणाप्युक्तम्—**जननी जन्मभूमिश्च स्वर्गादपि गरीयसी** इति । 'स्वतन्त्रता-ऽस्माकं जन्मसिद्धोऽधिकारस्तं च नूनं ग्रहीतुं प्रभवेम' इति मन्त्रद्रष्टुः लोकमान्य-तिलकस्य पुनरिदं व्रतम् अभिक्रमस्य मुख्यतमं साधनमासीत् । तथापि महात्मनामयं सङ्केतः कथमपि नानुपेक्ष्यो यत्स्वदेशभक्तिः परदेशहित-विप्रतीपा कथमपि न भाव्या । सर्वेषामविरोधेनैव ब्रह्मकर्मेदं समा-चरणीयम् । लक्ष्यं किल विश्वव्यापकम्, कार्यक्षेत्रं पुनः परिसरवर्ती प्रदेश एव भाव्यः, एतादृशेन भावेन कार्यकरणं स्वदेशी-व्रतमुच्यते । स्वराष्ट्र-समुन्नतौ व्रतस्यास्य नितरामावश्यकत्वमित्यत्र मतद्वयं जातु-चन न भवतीति सर्वथा समुपास्यमिदम् ।

**स्पर्शभावता-व्रतम्—**

स्पर्शभावना-विषये महात्मनां मतं यद् "अन्त्य-जानां सेवा करणीयैव । न तत्र पापम्, अपि तु पुण्यमेव । रुग्णस्य अन्त्यजबालकस्य सेवा धर्म एव । रामायणे शबरी-निषादराजौ किलास्पृश्यावेवास्ताम्, परं रामभद्रेण तौ स्वात्मीयौ कृतौ । अन्त्यजा अपि मानवा एव । तेषाम् 'अस्पृश्यस्त्वम्' इत्युक्त्वा अवमाननं तिरस्कारश्च मानवता-विनाशवदेव भवति ।"

धर्मस्य वास्तविकं रहस्यमजानद्भिः केवलं कर्मकाण्डपरायणैः कर्मजडैः स्वात्मानं सर्वश्रेष्ठम्मन्यैः कैश्चिद्धर्मधुरीणैः निम्नवर्गेणानेन सह क्रूरो व्यवहारः कृतः, क्रियते च स्वात्मप्रतिष्ठास्थापनभावेन । न ह्यत्र शास्त्रं तथा कर्तुं समुपदिशति । विपद्ग्रस्तोऽन्त्यज-बालक एव किम्, पशुपक्षिप्रभृति-तिर्यग्योनिगतो-ऽपि स्यात्, तद्विपन्निवारणं मानवस्य परं कर्तव्यम् । शुनि श्वपाके विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि च तिष्ठन्तमात्मानम् एकत्वेन द्रष्टुं समु-पदिशच्छास्त्रं कथं नाम स्वबान्धवानामन्त्यजानां परिपीडनमनुमन्येत ? भारतीयसंस्कृतौ स्पृश्यास्पृश्य-व्यवस्थाया न जातु घृणामूलकत्वम्, अपितु पूर्व-

जन्मीयः कर्मविपाक एव सः। परमादरणीयां मातरमपि रजस्वलाकाले वयं न स्पृशामः। नैतावता साऽस्मभ्यमनादरणीया समुपेक्ष्या वा जायते। परमनधिकारिणां केषाञ्चन एतद्रहस्यानभिज्ञानां स्वात्मगौरव-प्रख्यापनचणानां स्वभ्रातृभूतानामन्त्यजानां परिपीडनेन प्रतिक्रियापीडिताः समुद्विग्नाः महात्मसुलभ-करुणप्रकृतयो गान्धिमहाभागाः स्पर्शभावनमपि व्रतत्वेन स्वीकर्तुमतितरां प्रेरिता अभवन्। तेषां स्पर्शभावना-व्रतविषयकमुपरितनं विवेचनमपि निर्विशेषं सर्वभारतीयैः स्वीकर्तुं शक्यम्। प्रतिगतेभ्य एतेभ्योऽस्मद्भ्रातृभ्यो वास्तविकोत्कर्षकारिणीः सुविधा अप्रदाय स्पर्शभावना-व्रतनाम्नाऽद्य तदनुयायिभिः प्रतिहिंसाप्रवणं विवेकशून्यं यद्यत्कर्म समाचर्यते, तन्नाम कियदनेन महात्मनः स्पर्शभावनाव्रतनिरूपणेन सङ्गच्छते इति विवेकिनां विचारणीयं वस्तु।

अन्यच्च, वैदेशिक-शासकैः प्रतिगतममुं वर्ग लोभेन समाकृष्य 'विभज्य शासनकरणनीतेः' प्रयोगः अस्माकं भारतीयानां विरुद्धश्चिकीर्षितपूर्वः। तेनापि महात्मनाऽनेन स्पर्शभावनाया व्रतत्वेन स्वीकारः कृतश्चेत् तन्नातिविस्मयावहम्। तेषां पवित्र-करुणाप्लुत-भावनानिकषपूतं व्रतमिदं शास्त्राविरुद्धेन तेनैव रूपेण न कस्यापि विप्रतिपत्तिकरं भवेदिति संभावयामः।

**विनम्र-भावना व्रतम्—**

विनम्रताव्रतविषये श्रीगान्धिन ऊचुः—"वस्तुतो व्रते नम्रतायाः प्रवेशस्तस्य गौरवं न्यूनतामापादयति। अभ्युपगम-सिद्धान्तोऽयं यद् अहिंसा-ब्रह्मचर्यपालको नूनं नम्रो भवेत्। नम्रताविहीना अहिंसा हास्य-व्यङ्गचचित्रकल्पा। स्वात्मानं रजःकणवद् यावन्न मन्यते, तावदहिंसा-व्रतग्रहणमसम्भवि। मनसि यावदहंभावो न तावदीश्वरदर्शनम्। ईश्वरमिलनं चिकीर्षितं चेत् स्वयं शून्येन भवितव्यमेव।"

अत्र विषये किमधिकं वक्तव्यम्? अहङ्कारस्तु सर्वस्यैव अनर्थजातस्य बीजं शास्त्रकृद्भिर्निगदित इति तत्परिहारो भारतीयसंस्कृतेः प्राणपदमेव। नम्रत्वमिदं फलोद्गमेन सहजतः साध्यते। ततः पूर्वं किल यत्नसाध्यम्। स्वस्य शून्यत्वभावनम्, परमेश्वरस्य च सर्वशक्तिमत्त्वस्वीकारः, जगतश्च तद्रूपत्व-प्रत्ययो नम्रताया अमोघानि साधनानि वक्तुं शक्यन्ते। अत इदं व्रतमपि सर्वथा सर्वैरप्रमदितैरनुष्ठेयम्।

इदमत्रावधेयम्—यद्यपि एकस्मिन् सत्यात्मके महाव्रते एव पञ्चानां महाव्रतानामन्तर्भावो जायते। किं बहुना, सत्यं यथा साधनम्, तथैव साध्यरूपमपि भवति, परमलक्ष्यस्य ब्रह्मणस्तद्रूपत्वात्। तथापि निरुपधिकरुणावता भगवता पतञ्जलिना अहिंसासहित-सत्यादिपञ्चव्रतानां महाव्रतत्वेन गणनं शिष्यबुद्धिवैशद्यार्थं साधकानां साधनानुष्ठानसौविध्याय च कृतम्। एवमेव महात्मगान्धिभिरपि पञ्चमहाव्रतैः सह षण्णामेषामुपव्रतानां पृथक् गणनं लौकिकाऽलौकिकोभयविधानां साधकानाम् उभयविध-साध्यसाधनायैव विहितम्। तेन च न विभागासङ्गतिकल्पनाया लेशतोऽप्यवसरः।

इत्थं महात्मगान्धिमहाभागैः भारतभुवं समागत्य एकादशव्रतानां य आचारो विश्वस्य, विशेषतो भारतराष्ट्रस्य कृते प्रदर्शितः, स्वीयया अनितरसाधारणया प्रतिभया अध्यात्ममात्रफलानि महाव्रतानि राष्ट्रियहितसन्दर्भेण व्याख्यातानि, आवश्यक-नव्योपव्रतानि पुनर्विश्वहिताविरोधेन सामयिकानि सहजानुकरणीयरूपाणि प्रसाधितानि, तेषामीश्वर-प्रार्थनादीनाञ्च समासतः परिचयसमीक्षणमस्माभिरत्र विहितम्।

अनेन वाग्-यज्ञेन तदाविष्कर्ता महात्मा प्रीयताम्!

# मानस-भारती--देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए० साहित्याचार्यः—

रामस्तदपि सन्त्यज्य वनमग्रे ययौ तदा ।
तौ भ्रातरावतिबलौ नरसिंहौ मतावुभौ ॥
विरहीव प्रभुर्दुःखी वार्ता ऊचे तथा कथाः ।
स प्राह लक्ष्मणं देवो वनशोभां विलोकय ॥
क्षुभ्येत न मनः कस्य दृष्ट्वा शोभां मनोहराम् ।
ननु निन्दन्ति मामेते सस्त्रीकाः पशुपक्षिणः ॥
यदावयो-र्दर्शनेन पलायन्ते मृगास्तदा ।
मृग्यो वदन्ति मा भैष्ट सानन्दं वसत प्रियाः ॥
यूयं तु मृगजा एतौ मार्गतः काञ्चनं मृगम् ।
सस्त्रीकाः शिक्षयन्त्येते गजाः सङ्गं स्त्रियो नु माम् ॥
शास्त्रं सुचिन्तितमपि ज्ञो मुहुश्चिन्तयेदिह ।
सुसेवितमपि प्राज्ञो मन्येत न वशं नृपम् ॥
स्थापितापि भवेन्नारी हृदि यद्यपि मानवैः ।
तथापि युवतिः शास्त्रं नृपश्च न वशे स्थिताः ।
तात पश्य मधुं मह्यं प्रियहीनाय भीतिदम् ॥
वियोगतप्तं बलहीनसारा-
देकाकिनञ्चापि विलोक्य मारः ।
मध्याक्रमं काननषट्पदालि-
च्छिन्नैः समेतः कृतवान् कृतघ्नः ॥३७॥ (क)
परन्तु दूतस्य मुखेन कामो
निशम्य मां सानुजमत्र संस्थम् ।
रुद्ध्वा स्वसेनां सुनिवेश्य तां च
प्रतीक्षमाणो वसति ध्रुवं सः ॥३७॥ (ख)
नाना विकसिता वृक्षा वर्मिणो नु धनुर्धराः ।
क्वचिद् रम्या द्रुमा भान्ति सन्निविष्टा भटा ननु ॥
कूजन्तः कोकिलगणा नूनं गजगणा मताः ।
नन्वञ्जनबका उष्ट्रा महोखोऽश्वतरो नु किम् ॥
कपोत - बर्हि - हंसाख्याः खगा वह्नि-चकोरकौ ।
नूनं सर्वे सैन्धवाश्वाः कामदेवस्य भूतले ॥
तित्तिरा लावकाः पादचारिसैन्यानि निश्चितम् ।
अवर्णनीयरूपेयं मदनस्यास्ति वाहिनी ॥
शिला रथा निर्झरास्तु दुन्दुभ्यो मादना मताः ।
चातका बन्दिनो भृङ्गा भेर्यस्तूर्याणि राविणः ॥
त्रिविधः पवनो दूतकार्यं कर्तुं समुद्यतः ।
चतुरङ्गबलोपेतः कामो रणसमुत्सुकः ॥
दृष्ट्वापि कामसेनां ये धीरास्ते लोकवन्दिताः ।
सौमित्रे स्त्रीबलादस्य दूरे यः सद्भटो हि सः ॥
हे तात कामप्रतिघातिलोभा
एते त्रयोऽत्यन्तबला विकाराः ।
चित्तं मुनीनामपि बोधधाम
विक्षोभयन्ति क्षणतः प्रकाशम् ॥३८॥ (क)

[ क्रमशः ]

## सूचना

अङ्केऽस्मिन् स्थानाभावात् धारावाहिकोऽपि श्री जगन्नाथ श्रीधरशास्त्री पदे महाभागानां 'धर्मे सर्वं प्रतिष्ठितम्' इति लेखमालान्तर्गतो 'वैदिकाऽवैदिक-धर्म-मीमांसा'-निबन्धः श्री सदाशिव कृष्ण फड़के महाभागानाञ्च 'तर्ककुमारः श्रद्धादेवी च' इति धारावाहिक - बोधप्रद - रूपककथायास्तुरीयं 'वाङ्मयीना तपश्चर्या'-प्रकरणं दातुं न पार्यते । अग्रिमेऽङ्के पाठकैः पुनस्तन्नूनं लभ्येतेति तावत्प्रतीक्ष्यावेतौ निबन्धौ इति ।—सम्पादकः

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

प्रपञ्चगतानां स्वामिनीभावभावितानां भक्तानां तु भावना-तत्कृपासहकृत-श्रीमद्भागवतादिश्रवण-कीर्तनादिमहिम्ना मायाजवनिकामपसार्य प्रादुर्भूते निखिलरसामृतमूर्तौ शृङ्गाररससारसर्वस्वभूते वा भगवति पूर्वोक्तैरेव आलम्बनोद्दीपनादिभिः वासनात्मिकैव रतिर्जायते । साऽपि अप्राकृतभगवद्विषयकत्वेन रसवैशिष्ट्यं रसत्वमेव वा प्रतिपद्यते । सेव्यस्वरूपविषयिणी रतिरपि एवमेव ऊहनीया ।

अत एव **रसो वै सः, स्थायिभावो रसः** इत्यनयोः श्रौतस्मार्तवाक्ययोः भगवद्रूपे रस एव एकवाक्यतया निरुपचरितत्वेन सामञ्जस्यम् । अन्यत्र तु विभावानुभावसञ्चारिभावस्थायिभावसंवलितत्वेन रसस्य ब्रह्मानन्दसहोदरत्वम्, न ब्रह्मरूपत्वम् ।

यद्यप्यत्रापि रसशास्त्रमर्यादया विभावादिसंवलनमस्त्येव, तथापि विभावादीनामपि रसरूपत्वेन तदतिरिक्तत्वासिद्ध्या परब्रह्मरसरूपत्वस्थायिभावरूपत्वयोरेकत्रैव पर्यवसानम् । लोके स्थायिभावस्य अन्तःकरणनिष्ठत्वं प्रसिद्धम् । तेनात्रापि सर्वान्तःकरणरूपे विशुद्धसत्त्वमये वासुदेवे स्थायिभावरूपो भावात्मकः श्रीकृष्णो व्यक्तः । यथा च लोके स्थायिभावस्य आलम्बनोद्दीपनादिवैशिष्ट्यं प्रसिद्धं तथैव प्रकृतेऽपि स्वामिन्यादि-वैशिष्ट्यम् । तेनैव श्रीकृष्णस्य निगूढस्त्रीभावरूपत्वम् ।

चर्वणाविशिष्टः स्थायी रस उच्यते । चर्वणया स्थायी विषयीक्रियते । तेन स्थायिभावरूपस्य श्रीकृष्णस्य भोग्यतयाऽपि स्त्रीभावः सूच्यते । श्रीकृष्णस्य परस्परभावात्मकत्वेन परस्परात्मत्वेन च एकत्रैव भगवत्त्वं स्वामिनीत्वञ्च पल्लवादिमत्त्वेन विभावादिमत्त्वञ्च । न केवलं रसस्य भोग्यत्वेन स्त्रीभावरूपत्वम्, अपि तु अधरसुधयाऽपि भोग्यता सूच्यते । रसस्वरूपस्यापि रसोद्रेकवत्त्वेन स्त्रीभावो व्यज्यते । रसोद्रेके यथा स्वामिनीषु भगवद्भावः, तथैव भगवत्यपि स्वामिनीभावः । लोके फलापर्यवसाय्येव भावो भवति, अत्र तु सत्यसङ्कल्पत्वेन भावोऽपि फले पर्यवस्यति ।

कृष्णशब्दार्थोऽपि स्थायिभावरसात्मकानन्दे पर्यवस्यति । तत्र कृषेः सत्तैवार्थः, सत्ता च भावरूपैव । भावश्चात्र स्थायिभावरूपः । तद्गतस्तद्रूपश्च आनन्दो 'ण'पदार्थः । शृङ्गारस्थायिभावहेतुत्वेन द्रावकः । कामोऽपि भगवदात्मकत्वाद् रसात्मक एव, न तु लौकिकः । **सोऽकामयत** इत्यादौ कामशब्देन वाऽऽधिदैविकस्य कामस्यैव ( स्वरूपात्मिकाया इच्छाया ) शब्दितत्वात्, तदंशभूतस्तु तेषु तेषु अनन्तानन्तजीवेषु प्रातिस्विक-कामात्मना व्यज्यते । तदेवमाधिदैविकस्य कामस्य साक्षात् मन्मथत्वम् । तत्रापि आकर्षण-मोहना-ऽऽनन्दजनकत्वादिकं सर्वान्तररसमूलकमेवेति श्रोत्रस्य श्रोत्रमिव प्राणस्य प्राण इव मनसो मनोवत् ज्योतिषां ज्योतिरिव सूर्यस्य सूर्य इव प्रभोः प्रभुरिव साक्षान्मन्मथस्य मन्मथो भगवान् । तस्यापि साररूपत्वाद् विप्रलम्भस्थायिभावस्य सर्वनैरपेक्ष्येण तन्महत्त्वम् । तेन कृष्णपदार्थप्रसङ्गे स्थायिभावरूप एव सत्तात्मको भावः कृषिपदार्थो ग्राह्यः । स एव त्रैकालिकसत्तारूपस्तद्गतो निरुपाधिक आनन्दश्च 'ण'-शब्दार्थः । तेन स्थायिभावात्मा भगवानेव यशोदोत्सङ्गलालितः । आधिदैविकः कामोऽपि तत्कार्यत्वात् तदुत्पन्नस्तदङ्कुररूप एव । तदेतत्त्रितयं मिलितं कृष्णपदार्थ इति ।

( क्रमशः )

# जयवंश-महाकाव्ये सवाई जयसिंहः

—श्रीरामदत्त शर्मा, एम० ए०—

जयपुर-राज्यस्य ऐतिहासिक-संस्कृतमहाकाव्य-परम्परासु 'जयवंशमहाकाव्य'स्य विशिष्टं स्थानं वर्तते। काव्येऽस्मिन् इक्ष्वाकुवंशजानां कच्छवाहा-नृपाणां आमेरशाखायानृपाणां, तेषां कार्यकलापानां तत्कालीन-सामाजिकव्यवस्थायाश्च काव्यात्मकं वर्णनं कृतम्। महाराज सोढ़देवतः ( १०२३ ) आरभ्य प्रथम-माधवसिंह ( १८०० ) पर्यन्त नृपाणां राज्यकालस्य वर्णनं काव्येऽस्मिन् वर्तते। काव्य-मिदं एकोनविंशतिसर्गेषु विभक्तम्। द्वितीय-जयसिंह-समकालीनेन श्री पण्डित सीताराम पर्वणी-कर महोदयेन विरचितमिदम्। काव्यमिदं राज-स्थान-विश्वविद्यालयेन १९५२ वर्षे प्रकाशितम्।

जयवंशमहाकाव्ये सवाई जयसिंहविषयिणी बहुला सामग्री प्राप्यते। सवाई जयसिंहः महाराज-विष्णुसिंहस्य ज्येष्ठः सुतः मिर्जाराजा-रामसिंहस्य प्रपौत्ररूपेण काव्येऽस्मिन् वर्णितः। तस्य सर्वप्रथमं वर्णनं महाकाव्यस्य दशमे सर्गे विद्यते। तत्र तस्य जन्मवर्णनं कर्तुकामः कविः लिखति—

**द्विषद्गजालीजयजातकीर्तिः**
**शिशुर्यथावत्कृतजातकर्म।**
**सिंहेन तुल्यो जयसिंहनाम**
**चकार तातोऽस्य ततोऽर्थवेदी॥**

( १०.१५१ )

महाराज-जयसिंहस्य आरम्भिकं जीवनं राज-गृहेषु सानन्दं व्यतीतम्। बाल्यकाले स एकः उद्दण्डो बालक आसीत्। तस्य अनुचित-व्यवहारेण पितरौ अतीव दुःखितौ आस्ताम्। तस्येदृशीं दशां दृष्ट्वा गुरुजनास्तस्मै सद्व्यवहारस्य शिक्षां ददुः। किन्तु जयसिंहस्य क्रोधो न शाम्यति, अपितु वर्धते एव। तदा तस्य जननी तं ताडयति वदति च—

**निवेदिता सा जननी कुमार-**
**मुद्घोषयामास च ताडयन्ती।**
**पित्रोर्गुरोस्ताडनमर्हमेव**
**त्वं मूढधीर्दग्धमनाः शिशुत्वात्॥**

( १०.११८ )

सा रात्रौ स्वपतिं प्रति जयसिंहस्य चेष्टां निवेद-यति। ततो नृपो गुरूणामाज्ञया जयसिंहाय स्वस्य साम्राज्यं विजयसिंहाय च हिण्डौन-नगरस्य राज्यं ददाति। तेन राज्यकार्यस्य भारेण जयसिंहस्य स्वभावे अतीव परिवर्तनं बभूव। स एकः प्रजा-पालको धर्मपरायणश्च नृपोऽभवत्।

कविः जयसिंहस्य गुणानां वर्णनमित्थं करोति—

**अथाधिपः प्राप्तगुणप्रकर्षः**
**शशास लोकाञ्जयसिंहवर्मा।**
**नित्यं श्रिया पूजितपादसद्मः**
**समस्तभूपालनतो विनीतः॥**

( १२.११ )

इत्थं राजा सवाई जयसिंहः स्वस्य आगा-मिनीजीवने कुशलप्रशासकरूपेण अस्माकं पुरत उपस्थितो भवति। कविः कथयति यत् सः जन-कल्याणार्थमेव आविरस्ति।

सवाई जयसिंहस्य अन्येषां गुणकर्मणां विवरण-मित्थम्—

धर्म-परायणता

सवाई जयसिंहो धर्मपरायण-नृपरूपेण अस्माकं पुरत आयाति। तेन स्वस्य जीवनकाले नैकेषां धार्मिकस्थलानां यावत् निर्माणमकारि, तावन्न राजस्थानस्य कस्यापि अन्यस्य नृपस्य राजत्वकाले-ऽभवत्। कल्कीगोपीनाथ-विश्वेश्वर-सीतापति-गोविन्ददेवादि-मन्दिराणि अद्यापि सवाई जयसिंहस्य

गुणान् कीर्तिञ्च समुद्घोषयन्ति । धार्मिकेषु तीर्थेषु स्नानम्, विप्राणां समादरश्च जयसिंहस्य धर्मपरायणताया प्रबलं प्रमाणम् । सवाई जयसिंहस्य काले ब्रजनाथशर्मा, रत्नाकरशर्मा, सीताराम पर्वणीकरश्चेति प्रमुखा विपश्चितोऽभवन् । तेषां निर्देशने तेन अनेकानि धार्मिकानि कर्माणि कृतानि, दानं च दत्तम् । यथा—

तत्र तेभ्यो द्विजातिभ्यो दक्षिणां प्रददौ नृपः ।
येन दारिद्र्यदारिद्र्यं व्रजे समभवत् समे ॥
( १३.१४६ )

दिग्विजयकाले तेन मथुरा-वृन्दावन-काशीपुरी-हरिद्वार-पुष्करादीनां प्रधानतीर्थानां भ्रमणं कृतम् । इदं तस्य धार्मिकताया सुदृढं प्रमाणम् ।

चतुर्दशे सर्गे दिग्विजयानन्तरं तेन अश्वमेधयज्ञस्य समायोजनं कृतम् । यज्ञेऽस्मिन् तेन बहुलाभरणा रजतशृङ्गखुरमय्यो गावो बहुदक्षिणाश्च दत्ताः—

कपिलाः पयोभृतिवहाः
स च गा बहुशो ददौ द्विजनुषु प्रमची ।
बहुदक्षिणा रजतशृङ्गखुरी-
र्बहुमूल्य - वस्त्र - बहुलाभरणाः ॥
( १४:१५५ )

## कुशल-प्रशासकता

सवाई जयसिंहो न केवलं धर्मपरायणो नृपः, अपितु कुशलप्रशासकोऽपि आसीत् । तस्य राज्ये जनाः परमेण आनन्देन जीवनं यापयन्ति स्म । जनानां भोजनस्य वस्त्राणां निवासस्य सुव्यवस्था आसीत् । जयपुराऽऽपणवर्णने कविना तत् धनधान्यपूर्णं वर्णितम् ( द्रष्टव्यम्, तत्रैव १२.१७६–८२ ) । गृहे गृहे माङ्गलिकं प्राभातिकं भवति । गावः दुग्धं ददति—

गावः सवत्साः सितमा घटोध्न्यः
पयोभिरानन्दितसर्वलोकाः ।
गृहे गृहे यत्र वसन्ति नित्यं
प्राभातिकं मङ्गलमादधत्यः ॥
( १२.१३६ )

जयपुरस्य नागरिकाः सवाई जयसिंहस्य चित्रं स्वस्य भवनेषु स्थापयन्ति ( तत्रैव २.४६ ), इदं तस्य लोकप्रियतायाः सुस्पष्टमुदाहरणम् । अत एव स एकः सुप्रशासक आसीत् ।

## विद्यानुरागिता, कलाप्रियता च

सवाई जयसिंहः कलाया ज्ञाताऽऽसीत् । स्थापत्यकलासु तस्य अतितरा रुचिरासीत् । तेन कृतं देवालयनिर्माणं कविना मुक्तकण्ठं प्रशंसितम्—

अन्योऽपि देवा बहवोऽभ्युवात्सुः
स्यात् कस्य तेषां गणने तु शक्तिः ।
( २.५ )

श्री सवाई जयसिंहः चित्रकलायाः प्रेमी आसीत् । तस्य निखिलोऽपि कालो विदुषां मध्ये समतीतः । अत एव सः विद्यानुरागी अप्यासीत् ।

इत्थं महाराजजयसिंहः सम्यक्रूपेण धर्मपरायणः, कुशलप्रशासकः, वीरः, विद्यानुरागी च सिद्ध्यति ।

विचारकाणां इतिहासकाराणां चेयं भणितिर्यत् सः चतुर्दशविद्यानां चतुष्षष्टिकलानां च पारग आसीत् । जयपुर-दिल्ली-उज्जैन-काशीनां यन्त्रशालाः साम्प्रतमपि नृपस्यास्य ज्योतिषशास्त्रवेत्तृत्वस्य प्रमाणभूताः । तेन निर्मापितं जयपुरं तस्य दूरदर्शितायाः प्रमाणम् । एवं राजस्थानस्य इतिहासे सवाई जयसिंहस्य विशिष्टं स्थानं विद्यते । संस्कृत-साहित्यस्य अमरकृतेः जयवंशमहाकाव्यस्य निर्माणं अस्यैव राज्ञः अनुग्रहस्य परिणामः । अतो नूनं संस्कृत-साहित्यं सवाईजयसिंहस्य ऋणी वर्तते ।

## वाराणसेय-नूतन-बालक-गणेशोत्सव-मण्डलस्य ऐषमे गणेशोत्सवे

# विद्वद्-द्वयस्य अभिनन्दने

### श्री गणेश भट बापट महाभागानाम्

यत्कर्णान्दोलनोत्थैः प्रबलजवभरै-र्मारुतैर्धूयमानाः
प्रत्यूहा ब्यूहबन्धं विजहति सहठं कान्दिशीकाः
सकम्पम् ।
यद्दृष्टिं शोणकोणां कलुषकुलवनं भस्मतामेति वीक्ष्य
स्फूर्जच्छुण्डोग्रदण्डः शितपरशुकरः पातु वोऽसौ
द्विपास्यः ॥ १ ॥

पितृत्वमनघं सूते विश्वनाथोऽपि यज्जनुः ।
गणेशमिव तं वन्दे गणेश - भट - बापटम् ॥२॥

ऋचो यजूंषि सामानि सशाखानि निरन्तरम् ।
नेहन्ते ब्रह्मधामापि लब्ध्वा यद्धृदयस्थितिम् ॥३॥

वेदानध्यापयन्तो विनयभरबटून् शिक्षयन्तः क्रियां वा
यज्वानं याजयन्तः क्वचिदवदधतामृत्विजामेकमुख्याः ।
स्वाध्याये चाह्निकेवा नियमविलसिते बिभ्रतश्चित्तवृत्तिं
काश्यां विश्वेशकल्पा जनहिततपसःश्रीगणेशा जयन्ति
यस्याग्निष्टोमयागे श्रुतिमहितविधिःसांगलीं वागनागाः
सह्यप्रत्यन्तलग्नां परममृतदुघोद्गातृमुख्यासनस्य ।
माङ्गल्ये वाऽतिरात्रे क्रतुभुवमभितो विस्मये मज्जयन्ती
श्रेयः प्रेयो ददाना प्रहरति दुरितं संस्मृताद्यापि नित्यम्
स्वस्सिन्धोः कूलमूले कुलमिव तमसां दग्धुमुद्य-
त्प्रकाशः
काश्यां निर्ध्वान्तधाम्नां गुरुरिव विदुषां
पाठशालासनस्थः ।
श्रौतं स्मार्तं बुधो यः सततमनलसः पाठयन्नाचरंश्च
निर्माति च्छात्रलोके सरलतमदिशा श्लाघ्यवैदुष्य-
भूमिम् ॥
अन्धप्रथा-सैकतगर्भमूर्च्छिता-
मुद्दिश्य यो वेदपयस्विनीं द्विजः ।
संवर्धयन् श्रेयसि यागविष्टरे
सन्दर्शयत्येव भगीरथोद्यमम् ॥ ७ ॥

### श्री गणपति देव शास्त्रि महाभागानाम्

सुरासुरशिरःस्फुरन् - मणिमरीचिनीराजित-
प्रफुल्ल - सरसीरुहप्रतिम - पादयुग्माश्रितः ।
विचक्षणशिरोमणिप्रणतिकर्मणि प्रस्तुते
तनोतु स मनोमुदं मतिमतां करीन्द्राननः ॥१॥

यो देवाभ्यधिको गुणैः परिचितः श्रीबापुदेवाभिधो
विद्वन्मण्डलमौलिमण्डनतया मान्यो वदान्योत्तमः ।
तातो यस्य स काशिकाविरचितावासो निवासो धियां
सम्पूज्यो वचनस्तजा गणपतिर्देवः स मध्येसभम् ॥२

विद्यायां विनियोजितो बुध - महादेवेन घाटेकुला-
ऽलङ्कारेण विबोधितोऽथ गणिते श्रीचन्द्रदेवेन च ।
साहित्ये गुरु-रामशास्त्रिकृपया प्रावीण्यमापादितः
सारल्यैकनिधिः सुधीर्गणपति - र्विद्वद्वरो मोदते ॥३

श्रीमत्काशिकराजकीयसुरवाग्विद्यालयाध्यापनं
नानाग्रन्थनिबन्धनं निजपितुः पञ्चाङ्ग-संवर्धनम् ।
शङ्कातङ्कनिवर्तनं बुधजनानन्दप्रदानादिकं
शिष्टाचारमनोरमं बुधमणेः किन्न प्रशंसावहम् ॥४॥

भाषामांग्लमनीषिणां शितधिया शिष्येषु सद्यः परां
प्राप्य्योज्ज्वलतां यशोधवलतां यः प्राप विद्यालये ।
सिद्धान्ते गणिते नवीनरचना चातुर्यमाबद्ध्य यः
सम्मानं लभते स्म शासनपदात् विद्यावतामग्रणीः ॥५

तस्याऽद्य प्रथमानसद्गुणगणग्रामाऽभिरामात्मनो
देवख्यातिजुषः स्वयं गणपतेः सम्मानदानोत्सुकाः ।
श्रद्धासूत्रनिबद्ध - पद्यकुसुमश्रेणी - विभूषामिमां
सानन्दं विनिवेदयन्ति सुजना विघ्नेश्वरस्योत्सवे ॥६

नूतनबालकमण्डलकलिता ललिताशयान् प्रमोदयतु ।
गणपतिसत्कृतिहेतोरुपरचिता पद्यमालेयम् ॥७॥

---

स्वागतं ते महाभाग ! गणेशोत्सवमण्डले ।
त्वत्पादाब्ज - रजःपूयमद्य यन्मङ्गलायते ॥ ८ ॥

पूर्वतोऽनुवृत्तम्—५०

# क्षत्रपति-महाकाव्यम्

—श्री उमाशङ्करशर्मा त्रिपाठी—

[ आंग्लभाषा-प्राध्यापकः—काशी-विद्यापीठम्, वाराणसी ]

संन्यस्तफलसम्बाधान् साधुसिद्धान् शिवात्मनः ।
क्षणरागवती स्प्रष्टुं किं निन्दा वा स्तुतिः क्षमा ॥५१॥

जाह्नवी जाह्नवीयेयं हिन्दवो हिन्दवोऽथवा ।
भारतो भारतो वाऽद्य तत्र हेतुः शिवोदयः ॥५२॥

सेतुं प्रसह्य निर्माय वाहिनीपतिवक्षसि ।
मैथिलीशरणोद्योगः शिवोऽलङ्कारविग्रहः[1] ॥५३॥

अरातिमेघनादोग्र - विशिखाश - हुताशनः ।
लोकरावण-माधूय प्रत्यस्थापयदिन्दिराम् ॥५४॥

राजस्थाने पराभूते भटलोकैकमूर्धनि ।
दुराधिसलिले मग्नं वीक्ष्य भारतमण्डलम् ॥५५॥

रचितोद्योगविभवः पुरुषार्थसहायवान् ।
दन्तलग्नामिवोर्वीं यो हिरण्याक्षवशीकृताम् ॥५६॥

ऊर्ध्वस्थानपि सन्तापवेपथूनमृतान्धसः ।
समाश्वास्य जनांश्चार्तानुद्दधाराऽच्युतप्रभः ॥५७॥

नूनं शङ्खस्वनोद्घोषैर्निर्भया देवभूमयः ।
नवात्महर्षसम्भारान् विबुधेभ्यो न्यवेदयन् ॥५८॥

हत्वाऽप्यार्यानमर्यादानन्यान् संस्थाप्य वा पदे ।
गुणादरैकमनसो निजः कस्तस्य वा परः ॥५९॥

अजाताक्षः सुवश्योऽपि[2] नरेन्द्रान् योऽदशत् पुरा ।
जातपक्षोऽपि तेनाऽसौ कृतो हीनमणिः फणी ॥६०॥

वेलातरङ्ग - सम्पृक्त - नालिकेरान्तर - स्पृशः ।
क्षिपेविरेऽनिलास्तस्य पर्वतोल्लङ्घिनो हयान् ॥६१॥

चक्रे मुरारिरीशानः शूले वज्रे पुरन्दरः ।
तथैवाऽसौ[1] शिवो देवस्तेनेऽव्याहतशासनम् ॥६२॥

यद्दयाऽभ्यर्थनै - र्दिल्ली पोता नाव महार्णवे ।
ते तन्नावोऽन्तिकं वीक्ष्य विनेशुर्जलदस्यवः ॥६३॥

भूदाहकोऽपि सविता भूभृतामिन्दुशीतलः ।
आह्लादको भुवो राजा तापवृद्ध्यै हि भूभृताम् ॥६४॥

यथाऽम्भोजभुवः सर्गो जलदर्तो - र्वनस्पतिः ।
लोकसम्पत्तथैवाऽस्य सविशेषमवर्धत ॥६५॥

विषमादृष्टनिर्घाताद्धर्षे जहति मेदिनीम् ।
चिराद्धर्षोदयो जातः पौरुषाराधितायतेः ॥६६॥

महीध्रकाननोपान्तवर्तिनामपि भूपतिः ।
मावलानां[2] महाप्राणो धर्मः श्रद्दधतामिव ॥६७॥

सोत्कण्ठमभितः क्रान्ताः पश्यन्तस्तत्तचेतसः ।
आश्रयन्तं सुखच्छायं महातरुमिवाध्वगाः ॥६८॥

भावो विपश्चितां मानः पौरुषोत्साहसम्पदाम् ।
विश्रम्भो दुःखतप्तानां शिवेऽवाप मनोरथम् ॥६९॥

विनयैर्विदुषः स्नेहैः स्निग्धान् लोकंहितोद्यमैः ।
रविबिम्बाध्वनिर्देशैः सच्चकार द्विषोऽपि सः ॥७०॥

हितचिन्ताधुरुत्साहे तस्मिन् जाग्रति सर्वदा ।
निश्चिन्तं दुर्लभस्वापमवापु - र्निखिलाः प्रजाः ॥७१॥

दिल्लीबलाचलोद्दाम - पक्षसंहतिभेदिना ।
लघुनाऽप्यात्तशौर्येण तेन वज्रायितं रणे ॥७२॥

विस्मापितालकां दिल्लीमक्षमोऽपि निरीक्षितुम् ।
शिवाकिञ्चनतां दृष्ट्वा शिवं सस्मार यक्षराट् ॥७३॥

प्रतिष्ठाप्य जगद्धात्रीं हृदि स्वस्थो जनेश्वरः ।
तदादेशमिवाव्यग्रो विधिजातं समाचरत् ॥७४॥

---

१. वाहिनपतिः समुद्रः, सेनापतिर्वा । मैथिलीशस्य रणोद्योग इव । शिवोऽलङ्कारविग्रहः, शिवो लङ्कारविग्रहो वा ।

२. नरेन्द्रो विषवैद्यो नृपश्च ।

१. असौ कृपाणे ।   २. मावलो जातिविशेषवान् ।

[ भगवतः कृपाप्रसादादस्माभिः 'सूर्योदय'स्य चत्वारिंशत्तमवर्षीय-द्वितीयाङ्कतः ( १९६४ मितेशवीय-वत्सरस्य फरवरीमासाङ्कतः ) प्रकाशनाय समारब्धमिदं कविवराणां श्रीउमाशङ्करशर्म त्रिपाठि महोदयानाम् ऐतिहासिकमिदं क्षत्रपति-महाकाव्यम् अनेनाङ्केन निर्विघ्नं समाप्तिं गच्छतीति महतः समाधानस्य विषयः । संस्कृत-काव्यकलाकुशलैस्तद् बहुश उपश्लोकितमित्यस्ति अपरं मोदावहं वस्तु । सधैर्यं क्रमशोऽद्यावधि समग्रमेतत् प्रकाश्य अस्माभिरेते समभिनन्दिता एव । संस्कृतज्ञैस्तेषां समाजेन शासनेन च पुनरेते तदैव समभिनन्दिताः स्युर्यदाऽचिरात् तैरिदं ग्रन्थाकारेण प्रकाश्य सारस्वतानां करसरोरुहेषु उपायनीक्रियेत । किमस्माकमियमाशा अचिरात् पूर्णतां गच्छेत् ? सम्पादकः ]

प्रजानामुदये हृष्टस्तासामार्तः पराभवे ।
द्विषां मन्युं प्रसादं वा तृणान्मेनेऽधिकं न सः ॥७५॥

वत्साङ्कमिव शस्त्राङ्कमुरसि श्रयतो रणे ।
तद्भटानपि स मेने श्रीः पुरुषोत्तमानिव ॥७६॥

अकिञ्चनोऽकुतोवास-स्त्रस्तोऽप्यरिप्रजाजनः ।
शिवराज्यं प्रविश्यैव सर्वमाप समीहितम् ॥७७॥

अलसप्रभवाऽरक्षा दुर्गपेनाऽस्ततन्द्रिणा ।
अमर्यादेव धर्मेण सीमाभूमेर्वहिष्कृता ॥७८॥

काकुत्स्थस्येव तद्धाम शिवस्याजितलक्ष्मणः ।
रिपून् प्रकम्पयामास समुद्रपरिखानपि ॥७९॥

द्विजा वेदानधीयानाः ररक्षुर्ज्ञानविस्तरम् ।
निराशायैव तमसां न जातु देहवृत्तये ॥८०॥

दिशः श्रुतिर्बधिरास्ता अदृष्टाभ्युदयोत्सवाः ।
तयुद्यमात् पुनर्जाताः श्रुतज्ञा दृष्टवैभवाः ॥८१॥

सुकर्तव्यधियः सर्वे मिथः साहाय्यधर्मिणः ।
सहजोत्कर्षसन्तुष्टा नाधिकारस्पृहां विदुः ॥८२॥

विभिन्नधर्मवर्त्मानो विभिन्नाऽऽजीववर्तिनः ।
विभिन्नाचारवन्तोऽपि नोद्वेगाय परस्परम् ॥८३॥

शेषत्वेनैव या सूते शेषायापि विशेषताम् ।
सैव निश्शेषतां गाथा मद्वाचाऽपि किमेष्यति ॥८४॥

शिवशौर्ययशःसूक्तैः स्तोतुं तत् सूरिसत्तमाः ।
मत्संस्कृतपथद्वारा विशन्तु भवनं गिरः ॥८५॥

तदयं निकषस्तावन्मत्प्रयत्नोऽस्तु निर्णये ।
एतस्मादुत्तरं काव्यमेतद्रूपं तु चापलम् ॥८६॥

सत्काव्यस्य परीक्षाया-मुक्तिपीयूषवर्षिणः ।
मामानन्द्य पदन्यासैर्लभन्तामात्मसत्क्रियाम् ॥८७॥

सरसोक्तिप्रबन्धेषु के न मामतिशेरते ।
शिवराजास्पदं किन्तु लङ्घ्यते केन मन्मनः ॥८८॥

यद् गूढं कल्पनाभिर्नवनवविधिना संस्कृतं सम्परीक्ष्य
शङ्काबाधाभयानामकलितविपदां हेतुमुन्मूल्य यत्नात् ।
कृच्छ्रात् सन्देहदोलाविचलितमनसाऽऽरभ्य निर्माणमार्गं
वाग्देवीमन्दिरं तत् कथमपि पुरतो भाति मन्दस्य मेऽपि ॥८९॥

जयतु जयतु राजाऽऽसेचनं लोकदृष्टेः, जयतु सततसेव्या देवगीर्लोकधात्री ।
जयतु जयतु नित्यं मुक्तदास्यः स्वदेशः, जयतु जयतु चेतः सर्वलोकात्मभावम् ॥९०॥

यस्योद्योगानुबन्धैररिभयविधुरे मानसे हिन्दुजातेः
सद्विश्वासः प्रतिष्ठामलभत सहठं व्यूढशङ्कामपास्य ।
स्वातन्त्र्यं दासताञ्च व्यसनशतभुवं दूरमुत्क्षिप्य रेजे
शक्तिः क्लैव्यं निहत्याऽनमयदरिशिरः श्रेयसेऽसौ शिवोऽस्तु ॥९१॥

॥ इति क्षत्रपति-महाकाव्ये एकोनविंशः सर्गः ॥

॥ समाप्तमिदं क्षत्रपति-महाकाव्यम् ॥

# अयुग्मजोत्पत्ति-विमर्शः

—श्री रामनारायण त्रिपाठी—

[ व्याख्याता—लखनऊ-विश्वविद्यालयीय-प्राच्य संस्कृतविभागस्य ]

[ योऽयं लेखो भवतां पुरः सम्प्रत्युपस्याप्यते, तत्र कमपि विषमवलम्ब्य कश्चन निर्णयात्मको विचारो न वर्तते। केवलमेको नूत्नो विषयो विदुषां परामर्शाय प्रस्तूयते—लेखकः ]

द्वन्द्वजमिदं स्थूलशरीरं मानवानां पशूनां पक्षिणाञ्च जरायुजमण्डजं यत् संसारे परिलक्ष्यते, तत् षाट्कौशिकं प्रसिद्धम्। तत्र शुक्रशोणितमूलके देहे लोमरुधिरमांसानां त्रयाणां मातृ रजोंऽशेभ्यः, अस्थिस्नायुशुक्राणां त्रयाणां कोशानां पितुः शुक्रांशेभ्यश्चोत्पत्तिः, यैः कोशैरावेष्टितमेव सूक्ष्मशरीरं कर्मोपचिनोति। अस्यां युग्मजायां सृष्टौ स्त्रीपुंसयोर्मध्ये कोऽपि एकाकी स्थूलशरीरं स्रष्टुं न क्षमते; नापि केवलं रजः शुक्रं वा षाट्कौशिकं गर्भं निर्मातुं प्रभवति, तादृशशरीरस्य उभयांशात्मकत्वात्। इत्थं सर्वसम्मते सर्वागमसिद्धे द्वन्द्वजे शरीरे निश्चिते शङ्कैषा समुदेति यच्छ्रूयते, तपस्यतोर्मित्रावरुणयोः कदाचिद् उर्वश्या दर्शनात् शुक्रपातोऽजनि, तस्माद् रेतसो वशिष्ठागस्त्यौ जातौ। तथा च पुराणवचनम्—

तयोरादित्ययोः सत्रे दृष्ट्वाऽप्सरसमुर्वशीम्।
रेतश्चस्कन्द तत् कुम्भे न्यपतद् वासतीवरे॥
तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ।
अगस्त्यश्च वशिष्ठं च तत्रर्षी संबभूवतुः॥

( "केवलाद् वा यथा पितृतो मित्रावरुणाभ्यां वशिष्ठस्य" इति। युक्तिदीपिका, १४३ पृ० )[1]

तत्रैतयोः षाट्कौशिकं शरीरं मात्रंशविकलेन केवलेन पित्रंशेन कथमजायत? किमेतादृशी पौराणिकी श्रुतिः कल्पनामात्रम्, आहोस्वित् सत्यनिकषोपलं कषति? निगमागम-पुराणादिवचनानां सत्यत्वाङ्गीकारात् सत्यमेव मादृशानां कृते भाति। ये केचन न विश्वसन्ति, मन्ये विज्ञानसरणिः कालक्रमेण अन्यपदार्थवत् तेषां विश्वासभूमौ एतासामपि पुराणोक्तीनां पदं निधापयिष्यतीति। वयन्तु यथेतिहाससंस्कृतिधार्मिककृत्येषु भूगोल-खगोलाध्यात्मिकादिषु च तद्वचनं प्रमाणं तद्वद् अनुपलब्ध-परोक्षाऽननुभूतादिषु पदार्थेष्वपि मन्यामहे।

अतोऽस्य प्रमाणतामङ्गीकृत्य तत्रैतदुत्तरं समीचीनं जानीमहे यत् तच्छरीरनिर्माणे न प्राकृतिको हेतुः, नापि कालापेक्षा; अपि तु ततो विचित्रमपरमेव कारणम्। तदित्थम्—ईदृशानामृषीणां सर्गे आर्षशक्तिः, द्रोण-कृप-कृपी-धृष्टद्युम्नप्रभृतीनामुत्पत्तौ धर्मशक्तिविशेषः, योगिनामनेकतनुनिर्माणे योगः, मायाविनामुत्पत्तौ माया, सनत्कुमारादि-मानसपुत्राणामुत्पत्तौ ब्रह्मणो मानसी शक्तिः, ब्रह्मणश्चोत्पत्तौ ब्रह्मशक्तिः, क्वचन देवानां चतुर्विधे शरीरे प्रधानानुग्रहः,[1] क्वचन

---

१. शारीरानथ वक्ष्यामि मातृहीनान् प्रजापतेः।
अङ्गुष्ठाद्दक्षिणाद्दक्षः प्रजापति - रजायत॥
( मत्स्यपु० ३.९ )

१. "प्राकृतं यथा—माहात्म्यशरीराभिमानात्,
यस्य ह्यभिमानो भवति—हन्ताहं पुत्रान् स्रक्ष्ये।
स यादृक् सर्गमभिध्यायति तादृक् प्रधानादुत्पद्यते।
तद् यथा—महेश्वरस्य रुद्रकोटिसृष्टाविति।
( युक्तिदीपिका०, ४३ श्लो०, १४९ पृ० )

सिद्धानां सिद्धिः, क्वचिद् वरदानमात्रम्, क्वचिद् वरदानलक्षणं फलम्, औषधम्, अन्यवस्तु वा, क्वचन शापो क्रोधो वेत्यादि कारणं मन्यते कुशलविचारकाः। उक्तञ्च भगवत्पूज्यपादैः शारीरकभाष्ये—

"यथा लोके देवाः पितर ऋषय इत्येवमादयो महाप्रभावाश्चेतना अपि सन्तोऽनपेक्ष्यैव किञ्चिद् बाह्यं साधनमैश्वर्यविशेषयोगादभिध्यानमात्रेण स्वत एव बहूनि नानासंस्थानि शरीराणि प्रसादादीनि च रथादीनि च निर्मिमाणा उपलभ्यन्ते मन्त्रार्थवादेतिहासपुराणप्रामाण्यात् ।" ( ब्र० सू० २.१.८, २५ ) इति[1] ।

यद्यप्यधुना आधुनिको लोकः प्रत्यक्ष एव वस्तुनि विश्वसिति; तथापि समाहितमत्र अलौकिकदृष्ट्या असाधारणे कार्येऽपि समीचीनरूपेण । एवं सति शङ्कापङ्ककलङ्कप्रक्षालनं न जातम् । यतो हि श्रूयते—कच्छपी निरीक्षणेन अण्डधारणं करोति, शङ्खी विरुतेनाऽपत्यं बिभर्ति ( युक्तिदीपिका, ३९ कारिका ), बलाका शुक्रमन्तरेण गर्भमाधत्ते ( ब्र० सू० २.१.८.२५ भाष्ये ) । एवमन्यत्राप्यन्यस्मिन् प्राणिन्यपि श्रूयते[2] । नह्यत्र ऐश्वर्यादिविशेषशक्तिः कारणं भवितुमर्हति, एषां जन्तूनां तादृशशक्तेरभावात् । तस्मादत्र तदतिरिक्तं किञ्चित् कारणं स्वभावादिकमेव कल्पनीयं यथा विलक्षणोत्पत्तौ । विलक्षणापि श्रूयते उत्पत्तिर्यथा **जनिकर्तुः प्रकृतिः** ( १.४.३० ) इत्यस्य व्याकरणमहाभाष्ये—'कथं गोमयाद् वृश्चिको जायते, गोलोमाविलोमभ्यो दूर्वा जायन्ते' इति । तथा **सङ्घातपरार्थत्वात्** इति सांख्यकारिकाया युक्तिदीपिकायाम् ( पृ० ९५ )—'किन्तर्हि विलक्षणा कार्योत्पत्तिरपि भावानामुपलभ्यते । तद्यथा—शृङ्गाच्छरो जायते । गोलोमाविलोमभ्यो दूर्वा वत्सरान्मुकयश्चन्द्रकान्तेन्दुसंयोगात् सलिलम् । सूर्यकान्तगोमयार्कसम्पर्कात् सूर्योदयसम्पर्काद् अरणिनिर्मथनाच्च अग्निः, एवमचेतनेभ्यो रूपादिभ्यश्चेतनमुत्पद्यते' इति ।

युक्तिदीपिकायां ( १४३ पृष्ठे ) ३९ कारिकाव्याख्यानावसरे सृष्टिविषये पूर्ववर्णनमुपलभ्यते । तद् यथा—'पूर्वसर्गे प्रकृतेरुत्पन्नानां प्राणिनां सत्त्वधर्मोत्कर्षादन्तरेण द्वयसमापत्ति मनसैव अपत्यमन्यद् वा यथेप्सितं प्रादुर्बभूव । तदेतदद्यापि चानुवर्तते, यत्तु कच्छपिका निरीक्षितेन अण्डधारणं करोति । प्रियं खल्वपि चक्षुषा निरीक्ष्य कृतार्थमात्मानं मन्यते । तस्यामपि क्षीणायां वाक्सिद्धिर्बभूव । अभिभाष्य प्राणिनो यदिच्छन्ति तदापादयन्ति । तदद्याप्यनुवर्तते यच्छङ्खी विरुतेनापत्यं बिभर्ति । प्रियं खल्वपि संभाष्य महतीं प्रीतिमनुभवति । तस्यामुपक्षीणायां हस्तसिद्धिर्बभूव । संस्पृश्य पाणिमीप्सितमर्थमुपपादयन्ति । तदेतदद्याप्यनुवर्तते, यत् प्रियं चिरादालोक्य पाणौ संस्पृश्य प्रीतिर्भवति । अस्यामुपक्षीणायामाश्लेषसिद्धिर्बभूव, आलिङ्गनेन प्राणिन ईप्सितं लभन्ते । तदेतदद्याप्यनुवर्तते, यत् प्रियमालिङ्ग्य निर्वृतिर्भवति । तस्यामुपक्षीणायां द्वन्द्वसिद्धिरारब्धा । स्त्रीपुंसौ संघृष्य अपत्यमुत्पादयेताम् । ममेदं ममेदमिति च परिग्रहाः प्रवृत्ताः । एतस्मिन्नेवावसरे संसारो वर्ण्यते' इति । यथा—

---

1. मन्ये ह्यत्र ते महात्मान ऐश्वर्यादिगुणसम्पन्ना आत्मनो वशित्वशक्त्या एव पञ्चभूतान्येतानि शरीराकारेण परिणमयितुं शक्ताः, शरीरस्य पाञ्चभौतिकत्वात् । वशित्वशक्तेरयं प्रभावो यत् सङ्कल्पाकारेण भूतानां परिणामः ।

2. "बल्चर'-नामकः खगः पुरासीद् मिश्रदेशे । अस्यां पक्षिजातौ केवलं स्त्रीत्वविशिष्टाः खगा अभवन्, न तु पुंस्त्वविशिष्टाः । ताः स्त्रियः खगा विनैव पुमांसं खगं गगने समुड्डयनकाले विवृतयोनयो मरुत्सहायेन गर्भधारणमकुर्वन्" इति ।—सिमण्ड फ्रॉयड, ल्यू नार्डो द विंशी : ऐ साइको सेकसुअल स्टडी आफ इन्फैन्टायल रेमरेमैनी सेन्स, पृ० ४३—४५ ।

सङ्कल्पाद्दर्शनात् स्पर्शात् पूर्वेषां सृष्टिरुच्यते ।
दक्षात् प्राचेतसादूर्ध्वं सृष्टिर्मैथुनसंभवा ॥
( म० पु० ५.२ )

तत्रैतावदेवोक्त्वा तत्तत्सृष्टिविषये सोदाहरण-मुखेन किमपि न व्याख्यातम् । अतस्तदुदाहर्तुं यथाशक्ति कतिचिद् वाक्यानि उद्ध्रियन्ते ।

मानससर्गविषये—

वेदाभ्यासरतस्यास्य प्रजाकामस्य मानसाः ।
मनसः पूर्वसृष्टा वै जाता यत्तेन मानसाः ॥
मरीचिरभवत् पूर्वं ततोऽत्रिर्भगवान् ऋषिः ।
अङ्गिराश्चाभवत् पश्चात् पुलस्त्यस्तदनन्तरम् ॥
ततः पुलहनामा वै ततः क्रतुरजायत ।
प्रचेताश्च ततः पुत्रो वशिष्ठश्चाभवत् पुनः ॥
पुत्रो भृगुरभूत् तद्वन्नारदो-ऽप्यचिराद्भूत् ।
दशेमान् मानसान् ब्रह्मा मुनीन् पुत्रानजीजनत् ॥
( मत्स्यपु० ३.५–८ )

आश्लेषजन्यसृष्टाविमे श्लोका विचारणीयः—

दृष्ट्वैव शुभसर्वाङ्गीं पवनः काममोहितः ॥
स तां भुजाभ्यां दीर्घाभ्यां पर्यष्वजत मारुतः ।
मन्मथाविष्टसर्वाङ्गो गतात्मा तामनिन्दिताम् ॥
सा तु तत्रैव सम्भ्रान्ता सुव्रता वाक्यमब्रवीत् ।
एकपत्नी - व्रतमिदं को नाशयितुमिच्छति ॥
अञ्जनाया वचः श्रुत्वा मारुतः प्रत्यभाषत ।
न त्वां हिंसामि सुश्रोणि मा भूत् ते मनसो भयम् ॥
मनसाऽस्मि गतो यत्त्वां परिष्वज्य यशस्विनि ।
वीर्यवान् बुद्धिसम्पन्नस्तव पुत्रो भविष्यति ॥
( वाल्मीकीयरामा० कि० कां० ६५.१४–१८ )

संस्पर्शजसृष्टावेते द्रष्टव्याः—

ततश्च षोडशं भागं बिभर्ति भगवान् विभुः ।
तत्तेजः पञ्चदशधा शातितं विश्वकर्मणा ॥
ततोऽश्वरूपधृग् भानुरुत्तरानगमत् कुरून् ।
ददर्श तत्र संज्ञां च वडवारूपधारिणीम् ॥
सा च दृष्ट्वा तमायान्तं परपुंसो विशङ्कया ।
जगाम संमुखं तस्य पृष्ठरक्षणतत्परा ॥
ततश्च नासिकायोगं तयोस्तत्र समेतयोः ।
नासत्यस्रौ च तनयावश्वीवक्त्रविनिर्गतौ ॥
( मार्कण्डेयपुराणे हिन्दीटीकासहिते पृ० १२६, श्लो० २०–२३ )

निरीक्षणसृष्टिविषये यद्यपि किञ्चिदेतादृशं वाक्यं क्वचन मया नोपलब्धम्, तथाप्येतादृशी जन-श्रुतिर्मे कर्णपथमायाति यद् धृतराष्ट्रस्य पाण्डोर्विदु-रस्य चोत्पत्तिर्भगवतो महामुनेर्व्यासस्य निरीक्षणेनैव जातेति । 'नास्त्यमूला प्रसिद्धिरि'ति भणितिमनुसृत्य तत्प्रतिपादकवाक्याभावेऽपि उपस्थाप्यत उदाहरण-त्वेनैतद् ।

द्वन्द्वजसृष्टौ संघर्षणस्यायमभिप्रायो यन्मीलिता-भ्यामेव शुक्रशोणिताभ्यामाधुनिकी सृष्टिः प्रवर्तते । तच्च मेलनं केनापि प्रकारेण गर्भाधानस्थलेऽन्यत्रापि जननेन्द्रियसङ्घर्षेण प्रकारान्तरेण वा स्यात् ।

प्रकारान्तरे ह्येवं श्रूयते नारदोत्पत्तौ—

एतस्मिन्नन्तरे तेन पथा गच्छति मेनका ।
तस्या उरुस्थलं दृष्ट्वा मुनेर्वीर्यं पपात ह ॥
ऋतुस्नाता च वृषली कृत्वा तद्भक्षणं तदा ।
सा च विप्रगृहे साध्वी सुषाव तनयं वरम् ॥
( ब्र० वै० पु० प्र० खं० २१.२२ )

सम्प्रत्येवं श्रूयते प्रावृषि घनं विलोक्य सानन्दो नृत्यन् मयूरः कामोद्रेकाच्छुक्रपातमाचरति, तदेव रेतो लीढ्वा मयूरी गर्भद्वाराऽण्डान् रचयति ।

तथैव गर्भाधानस्थलातिरिक्तस्थाने मेलनं यथा—भेकदम्पती यदा वासनया सन्तानेच्छया वा प्रेरिता-वास्ताम्, तदा भेकी जल एव रजःपातं करोति, भेकश्च तदुपरि रेतस्पातमाचरति । ततोऽण्डा जायन्त इति ।

अधुनापि वैज्ञानिकैरन्येषां परवादीनां कृते

सूचीनालिकया शुक्रपातं कृत्वा गर्भाधानं कारयितुं शक्यते। किं बहुना, ते तु ऋते गर्भस्थानात् पात्र-विशेष एव शुक्रशोणिताभ्यामवधिं यावद् यन्त्रादि-विशेषैः जीवनयोग्य-खाद्यादिप्रबन्धं विधाय सप्राणं शरीरमुत्पादयितुं दक्षाः।

भवत्वेवं मानवेष्वपि। किन्त्वेष पन्था अप्राकृतिकः क्वचित्कोऽप्रसिद्धश्च। संघर्षणव्यवस्था प्राकृतिकी सार्वत्रिकीयं द्वन्द्वसृष्टिकालादारभ्याद्यावधि अबाध-गत्या प्रवहति प्रवक्ष्यति च। न ह्युपस्थस्य मूत्रो-त्सर्गो विषयः, अपि त्वानन्दः। विषयाभिमुख-मेवेन्द्रियं प्रवर्तते। अन्यथा निर्विषयकेन्द्रियरचनैव व्यर्था स्यात्। तस्मान्निश्चप्रचमेतद् यत् पुरापि तादृशतत्तद्विशिष्टशक्तौ सम्पन्नायामपि मानवेषु व्यवस्थैषासीत्। शक्तिमत्त्वाच्च ते विहायैनां सरणि-मपरेण निरीक्षणादिमार्गेणापि सन्तानमुत्पादयितुं कुशला आसन्। तेन पथा षाट्कौशिकशरीरनिर्माणे शक्तिविशेष एव हेतुः। इतो भिन्नस्थले शुक्रशोणित-सङ्घो हेतुरिति निर्विवादम्। अत एकांशतः षाट्-कौशिकशरीरोत्पत्तिरसंभवा। यदा कापि स्त्री स्त्रिया सहैव सम्भोगमाचरति, तदापि गर्भो जायते किन्त्वनस्थिरेव। एवं स्वाप्निकमैथुनादपि गर्भो जायते, सोऽपि तादृश एव। यतो हि तस्मिन् गर्भे पित्र्यंशाभावादस्थ्नामभाव इति। तथा चोक्तम्—

यदा नार्यावुपेयातां वृषस्यन्तौ कथञ्चन।
मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते॥
ऋतौ स्नाता तु या नारी स्वप्ने मैथुनमावहेत्।
आर्तवं वायुरादाय कुक्षौ गर्भं करोति हि॥
मासि मासि विवर्धेत गर्भिण्या गर्भलक्षणम्।
कललं जायते तस्या वर्जितं पैतृकैर्गुणैः॥
(सुश्रुत सं०, शारी० २ अ०)

नोपहसनीयमत्र परस्परनारीद्वय-सुरतात्मके सुश्रुतवाक्ये। यथा गोप्यः परस्परं कृष्णभावनया आलिङ्ग्य निर्वृत्तानन्दा जातास्तथैव अत्राप्य-वैलक्षण्येऽपि जननेन्द्रिये कामालयकण्ड्वा ऋते बाह्यघर्षणमात्रजन्य-रेतःक्षरणेन सुरतफलातिशये तयोः को हि सन्देग्धि ?

एतादृशे युक्तिदीपिकोक्तसृष्टिविषये पुराणोक्ते विलक्षणसृष्टिविषये च केचन इत्थमपि समाधातुं शक्नुवन्ति यदेते हेतवः सहकारिकारणत्वेनात्र गृहीताः, न तु प्रधानकारणत्वेन। यतो हि प्रत्यक्षादि-प्रमाणैर्द्वन्द्वजसृष्टौ सर्वे इमे निमित्ततामेव यान्ति, न तु उपादानतामिति। अपि च—अर्थवादा अपि भवितुमर्हन्तीति केचन। भाषावैलक्षण्येन, शैली-वैलक्षण्येन, प्रवचनवैलक्षण्येन वैतत् सर्वं तत्र तत्र निरूपितम्, न तु तथ्यात्मकत्वेन—इत्यादीनि बहूनि वदन्ति केचित्। भवतु सर्वं सन्तोषाय सङ्गतये चालम्, न तु मे तत्र काचन विप्रतिपत्तिः। परन्त्वत्र तद्वचनानां तेनैव रूपेण यथार्थतामङ्गीकृत्य विचारं कर्तुं प्रवर्तेऽहम्।

एतावताऽस्य शरीरस्यो उभयांशजत्वे निश्चिते सति मानसपुत्रादीनां बलाकातनयादीनाञ्चोत्पत्तौ विशेषहेतुमुपस्थाप्य अस्मिन्नेव विषये कश्चिदपरः स्वकीयो विचारो भवतां पुरोऽधुना प्रस्तूयते। स यथा—रजो विना यत् षाट्कौशिकशरीरं केवलेन शुक्रेण तथा रेतो विना तत्कलेवरं केवलेन रजसा जातम्, तत्रेदं विचारणीयं यत् सर्वमपि वस्तु सर्वान्वितमास्ते, पञ्चीकृतस्य त्रिवृत्कृतस्य च प्रसिद्धत्वात्। अंशाधिक्येनैव भिन्ननाम्ना लोक-व्यवहारः। नात्र सर्वान्वितेति सर्वपदेन यावत्-सांसारिकवस्तुपरिग्रहो विवक्षितः, अपितु स्वसमान-जातीयस्य यावत्संभावितस्यैव। एवं सति शुक्रे रजःकणस्य सत्ता, रजसि च शुक्रकणस्य सत्ता वर्तते। तदा केवलेऽपि शुक्रे तदन्तर्वर्तिभी रजःकणैः शुक्रांशवत् मात्रंशप्रयुक्त-लोममांसरुधिराणां त्रयाणां कोशानां समुत्पत्तिः। एवं केवलेऽपि रजसि तदन्तः-पातिभिः शुक्रकणै रजोंशवत् पित्रंशप्रयुक्तास्थिस्नायु-शुक्राणां त्रयाणां कोशानामुत्पत्तिः। एवं च केवलेन

शुक्रेण रजसा वा उभयधर्मात्मकस्यास्य शरीरस्योत्पत्तिः संभवति ।

अपि च—एवं विचार्यं यद् वीर्यावस्था रुधिरादिभ्यः क्रमेण पाकवशादेव जायते । अर्थाद् रुधिरादिपरिणामविशेष एव वीर्यम् । तादृशे वीर्ये मूलभूतस्य रुधिरस्य सूक्ष्मांशोऽनुवर्तत एव । दृश्यते च लोके परिणते कार्ये परिणामिनोंऽशानुवर्तनम् । यथा शर्करासु इक्षुनिष्ठमाधुर्यस्य, अमृतासवे अमृतानिष्ठगुणस्य । एवं सति निश्चितमेव शुक्रे रुधिरांशो वर्तते । तच्च रुधिरं मातुरंश एव । तथा सति तत्र मात्रंशस्य विद्यमानत्वात् संभवति केवलेन शुक्रेण षाट्कौशिकं शरीरम् । एवं स्त्रीषु रजोऽपि अस्थ्यादिपरिणामेनैव जायते, अतस्तत्रापि अस्थ्नामंशो वर्तते । तदस्थि च पितुरंशः । तदा तत्र पित्रंशस्य सत्त्वात् संभवति केवलेन रजसाऽपि तादृशं शरीरम् । अत एव 'अनस्थिः' इति सुश्रुतशब्दस्य 'कोमलास्थिः' इति व्याख्याऽपि सङ्गच्छते । अन्यथा नितरां मूलाभावे कोमलस्यापि तस्यासंभव एव ।

एवं सति कथमधुना इत्थमेकेनांशेन नोत्पद्यते शरीरम् ? किमर्थं वा नात्र सर्वे प्रभवो भवन्ति ? इत्यादि मा शङ्कीः । अस्यापि विधानस्यास्ति काचन प्रक्रिया याऽधुना तिरोहिता जाता, यां विना तादृशं कर्तुं न क्षमन्ते साम्प्रतिकाः । यथा साम्प्रयोगिका धातुपरिवर्तनमाचरन्ति स्म पुरा, ताम्रस्य सुवर्णतापादनमित्यादि । इदानीं क्वापि तन्नोपलक्ष्यते, केवलं श्रवणमात्रमेव सन्तिष्ठते, प्रक्रियातिरोधानात् तद्विज्ञस्याभावाच्च । आधुनिकैरपि वैज्ञानिकैः सिकताकणे रजतम्, इङ्गालकैः हीरकम्, अन्यैरन्यद् युक्त्या क्रियते । किं बहुना, जनेषु लिङ्गपरिवर्तनमपि बहुशः समायात्यधुना श्रुतिपथम् । यदि भिन्नप्रकृतिप्राणिषु नितान्तं परप्रकृत्यंशाभावस्तदा कथमपि न संभवेल्लिङ्गपरिवर्तनम् । अतो मन्ये, स्त्रीषु पुंसोंऽशः पुंसि स्त्र्यंशः सूक्ष्मरूपेण सर्वत्र वर्तते । किन्तु यत्र स्फुटोपरागो भासते, तत्रैव यत्नैः कार्यनिर्वृत्तिर्लक्ष्यते, न सर्वत्र । नातिविप्रकृष्टा कथा यत् काश्यामासीन्महात्मा विशुद्धानन्दः, स पुष्पस्य विजातीयपुष्परूपेण परिवर्तनं सूर्यकिरणद्वारा प्रत्यक्षप्रस्तुतपदार्थमात्राधिक्येन पराभूतांशस्यो उद्धरणक्रियया जनसंमुखे कृतवान् । आख्यायिकेयं अद्यापि वाराणसेय-सुधीसमाजे प्रसिद्धा ।

एतेन सिद्ध्यति यत् पञ्चीकृते सर्वस्मिन्नपि वस्तुनि सर्वात्मके अन्यस्यापि मात्रया सत्तासत्त्वेपि अल्पीयोंऽशत्वेन पराभूतत्वेन च न तत्प्रतीतिः । स एवांशो यदि यौक्तिकैर्युक्त्या समानस्ततोऽधिकोऽपराभूतश्च व्यवस्थाप्येत, तदाऽन्यस्यापि वस्तुनः प्रतीतिः संभवेदेव । सा युक्तिः कीदृशी, का, कथञ्चास्त इति सुधियो विभावयन्तु । एतादृश्यैव युक्त्या वशिष्ठादीनामुत्पत्तिः । अस्तु सर्वविधज्ञानैश्वर्यसम्पन्ने देवे वा ईदृशी युक्तिः, ययैवं कर्तुं तैः पार्यते । किन्तु कच्छपीशङ्खीबलाकादीनान्तु तादृश्याः शक्तेर्ज्ञानाभावे कथं तत्फलोपपत्तिरिति विचारे प्रतिभात्येवं यत्प्रधानानुग्रहात् तास्वपि सा शक्तिः स्वभावत्वेन वर्तत इति ।

इतोऽप्यन्यद् विचारणीयमेतत्—यो हि यादृशभावनाभावितो यदाचरति स तादृशमेव फलं लभते । तस्माद् भावनैव निदानं सर्वेषां कार्याणां मूले । वाचिक-मानसिकसर्वविधकार्येषु भावनानुगता सिद्धिरवलोक्यते—**यादृशी भावना यस्य सिद्धिर्भवति तादृशी** । यस्याशयो यावान् निर्मलो यत्र वा सत्त्वप्रकर्षोदयः, तस्य तत्र तावत्येव सिद्धिः । अस्मिन् विषये तु साफल्यं प्रयोगात्मकप्रक्रियया प्रत्यक्षतामेति, न तु व्याख्यामात्रेण । संयमाद्यनुष्ठानद्वारा यद्यत्र विकासो भवेत्, तदा प्राचीनविज्ञानस्य महानुपकारः । आशासे ह्यत्र विशदविवेचनं विद्वांसः करिष्यन्तीति ।

## महामण्डल शंसनम्

दीव्यद्-गङ्गा-तटस्थे सुर-गण-विलसत्-पुण्य-काशी - सुतीर्थे
श्रीमद्-वृन्दारकाद्यैः प्रमहित-चरणा राजते सा 'ऽन्नपूर्णा' ।
तद्युक्तो वेदवर्ण्यो भव - भयहरणः पार्वतीजानिरस्मत्-
पाता भवतेष्टदाता स जयति सततं 'विश्वनाथो' महेशः ॥१॥

वेदान्तोपनिषद् - विचार - चतुरैश्चश्वत्प्रभा - भासितै-
'ज्ञानानन्द' - महर्षि - पूज्यचरणै राज्ञां ह धर्मात्मनाम् ।
एवं मान्य-'रमेश्वरस्य' मिथिलाधीशस्य साहाय्यतः
श्रीमद्-भारत-धर्म-मण्डलमिदं काश्यां तदा स्थापितम् ॥२॥

सद् - गीर्वाण - गवी - सुक्षरणरतं वेद - प्रचारोद्यतम्
काश्यामार्य-सुधर्म-वृद्धिनिरतं ख्यातं चिराद्राजितम् ।
भ्राजद् - भारत - धर्म - पूर्वपदकं मान्यं महामण्डलम्
विद्वद्वृन्द - विभूषितं विजयते संसेवितं साधुभिः ॥३॥

लोकानां हित-हेतवे बहुविधान् यज्ञान् करोति स्म यत्
मानोपाधि - समर्पणेन विदुषां सम्मानमावर्धयत् ।
प्रत्यद्वं बहुधा सुसंस्कृत - सभां दैव्या गिरो वृद्धये
भद्रं भारतधर्म - मण्डलमिदं काश्यां व्यधादुत्तमम् ॥४॥

—श्री पद्मश्री विष्णुकान्त झा, दैवज्ञशिरोमणिः—

पञ्जीकृत संख्या—एल० १८९७

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

**'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगत्गंज, वाराणसी।**

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य

मासिकं मुखपत्रम्

❀

वर्षम् ४५

❀

अङ्कः १०

❀

सम्पादकः

गो० न० वैजापुरकरः

❀

अक्तूबर

१९६९

❀

वार्षिक-मूल्यम्

५) रूप्यकाणि

❀

प्रत्यङ्क-मूल्यम्

अर्धरूप्यकम्

❀



## दीप-महिमा

★

दीपोत्सवश्चतुर्दश्याममायां प्रतिपद्दिने ।
न गण्यते विधात्राऽपि फलं तत्तादृशं महत् ॥
यो दद्याद् घृतदीपांस्तान् देवानां चैव पर्वसु ।
कार्तिक्यां प्रस्थकेनैव प्रकीर्णाघौघनाशनः ॥
देवदेवं समुद्दिश्य दीपमाकाशवर्तिनम् ।
संप्राप्ते कार्तिके कुर्यान् महच्छ्रियमवाप्नुयात् ॥
त्रिपश्च कार्तिकौ दीपौ दश द्वादशदीपकौ ।
देवस्यानन्दजनकौ दानतोऽजस्रमेव हि ॥
सर्पदीपो वृषाख्यो वा मृगपूरुषनामकः ।
वल्मीकदीप - कल्याणनामक - श्चतुराकृतिः ॥
रथदीपश्च सुमहान् कुम्भदीपो महोन्नतः ।
पञ्चमूर्तिर्महादीपाः कर्पूरश्चरमः परः ॥
दानमात्रेण मर्त्यानां तत्काले दर्शनादपि ।
साक्षात्सायुज्यदा एव पुनर्जन्मान्तरापहाः ॥

—लौगाक्षिस्मृतिः

# प्रभात-विहार-गीतिः

## हृदयान्वेषणं वा

•

उषसि प्रणयार्द्रमना विहरन् अहमेव वनश्रियमीक्षितवान्।
अतिरम्य-कुरङ्गदृशा प्रकृतिप्रमदाऽत्र विलासवती मिलिता ॥१॥

अपहृत्य लताकरनृत्यमिषैरनिमेषदृशो हृदयं मम सा।
समुवाच विहङ्गगिरा मृदुलं प्रिय दर्शय ते सदयं हृदयम् ॥२॥

इति हारि निशम्य तया गदितं प्रतिभाश्रुतितो विमलं वचनम्।
सरसं सरलं मृदुलं मधुरं किमु जातमहं न हि वक्तुमलम् ॥३॥

परितो हि गवेषणमाचरितं विटपे विटपे रटताऽप्यटितम्।
क्व गतं हृदयं क्व गतं हृदयं हतमुग्धधिया न मया विदितम् ॥४॥

अवलोक्य दशां मम सा मुदिता विधुकान्तिहरा सुषमानिकरा।
अतिरम्य-प्रफुल्ल-सरोजमुखी पुनराह मधुव्रत-गुञ्जन-वाक् ॥५॥

प्रिय पश्य नभस्यनुरागभरं तव बालदिवाकर-रूपधरम्।
अतिशोभि जगद्धिदधत् कृतिमत् समुदेति जगद्धृदयं हृदयम् ॥६॥

—श्रीमन्तोनवरत्न गिरिधरशर्माणः—

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षे ] वाराणसी, आश्विनः २०२६ : अक्तूबर १९६९ ई० [ १० अङ्कः

## श्री लक्ष्मी-लहरिः

समुन्मीलन्नीलाम्बुजनिकर - नीराजितरुचा-
मपाङ्गानां भङ्गैरमृतलहरी - श्रेणिमसृणैः ।
ह्रियाहीनं दीनं भृशमुदरलीनं करुणया
हरिश्याया सा मामवतु जडसामाजिकमपि ॥ १ ॥

प्रभात - प्रोन्मीलन् - कमलवन - सञ्चारसमये
शिखाः किञ्जल्कानां विदधति रुजं यत्र मृदुलाः ।
तदेतन् मातस्ते चरणमरुणश्लाध्य - करुणं
कठोरा मद्वाणी कथमियमिदानीं प्रविशतु ॥ २ ॥

अनेक-ब्रह्माण्ड - स्थितिनियमलीलाविलसिते
दयापीयूषा - ऽम्भोनिधि - सहजसंवासभवने ।
विधोश्चित्तायामे हृदयकमले ते तु कमले
मनाङ् मन्निस्तारस्मृतिरपि च कोणे निवसतु ॥ ३ ॥

दुरापा दुर्वृत्तैर्दुरितदमने दारणभरा
दयार्द्रा दीनानामुपरि दलदिन्दीवरनिभा ।
दहन्ती दारिद्र्य - द्रुमकुलमुदारद्रविणदा
त्वदीया दृष्टिर्मे जननि दुरदृष्टं दलयतु ॥ ४ ॥

अये मातर्लक्ष्मि त्वदरुणपदाम्भोजनिकटे
लुठन्तं बालं मामविरलगलद् - बाष्पजटिलम् ।
सुधासेकस्निग्धैः - रतिमसृणमुग्धैः करतलैः
स्पृशन्ती मा रोदीरिति वद समाश्वास्यसि कदा ॥ ५ ॥

—पण्डितराजाः श्री जगन्नाथपादाः—

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

—स्वर्गीयाः श्री विन्ध्येश्वरीप्रसाद शास्त्रिणः—

मुनिः स वीरोचितपद्धतिं श्रितः प्रसिद्ध आसीद् भुवि केशवाभिधः ।
तदन्तिके - ऽनन्तसुवर्ण - वर्षणं व्यधत्त तस्याऽऽनतशिष्यमण्डली ॥ ११ ॥

१२. स केशवानन्द - गुरुर्महोत्सवं
समाचचार प्रतिहायनं बुधः ।
ऋतौ समागच्छति शारदे शुभे
मुदान्वितः सन् नवरात्रपर्वणि ॥

१३. स शारदीयेऽत्र महामहोत्सवे
गुरुः स्वशिष्यं बहुशो न्यमन्त्रयत् ।
तथापि शिष्यो न जगाम कारणं
न्यवेदयच्चापि गुरोः पदाम्बुजे ॥

१४. विलुप्तमुच्छिन्नमहो बताऽद्भुतं
यदस्ति कात्यायनिकं हि पीठकम् ।
वरेण्य-वृन्दावन - कीर्ति - कारणं
तदुद्धृतिश्चेद् भवता विधास्यते ॥

१५ तदैव वृन्दावनधाम्नि सद्गुरो
समागमिष्यामि मया प्रतिश्रुतम् ।
अतो द्रुतं शक्तिमता त्वया प्रभो
प्रसिद्धपीठोद्धृतये प्रयत्यताम् ॥

१६. निशम्य वाचं तिजशिष्यभाषितां
परं प्रमोदं समुपेयिवान् गुरुः ।
तदा प्रभृत्येव स पीठमुत्तमो-
त्तमं समुद्धर्तुमना बुधोऽभवत् ॥

१७. कलाप्रवीणैः स्थपतीश्वरैः स्तुतैः
स्वशिष्यलब्धै-र्धनराशिभिः शुभैः ।
अरोरचन् मन्दिरमुत्तमं गुरु-
र्महानुभावो महताऽऽदरेण सः ॥

१८. सुमन्दिरे बिभ्रति रामणीयकं
विचित्रिते चाद्भुत-कारुकर्मणा ।
प्रपन्न - सद्गोपवधू - सुकीर्तिमद्
विविक्त-वृन्दावन - भूमिमध्यगे ॥

१९. प्रसीद - दाभीर-कुमारिकार्चितां
जगज्जनन्याः प्रतिमां प्रतिष्ठिताम् ।
विधातुकामः स हि देशिकेश्वरो
निवेदयामास गुरुं महामतिः ॥

मयाऽतियत्नेन सदष्टधातुभिः परामम्बमूर्ति-र्विरचय्य रक्षिता ।
गुरो भवानीपद-चञ्चरीकतां गतो भवान् स्थापयतां हि तां हिताम् ॥ २० ॥

( क्रमशः )

# आत्म-निरीक्षणस्य अवसरः

प्रचलितेऽस्मिन् गान्धि-जन्मशताब्दिवर्षे सितम्बराऽक्तूबरमासयोः घटिता नैका घटनाः कस्यापि देशभक्तस्य तटस्थविचारकस्य प्रज्ञां तुलनात्मकं समीक्षणम् आत्मनिरीक्षणञ्च कर्तुं बलात् प्रेरयन्ति। एतासु घटनासु मुख्याः—१. राष्ट्रियमहासभायाः (कांग्रेससंस्थायाः) नेतृत्व-कलहः, २. अहमदाबादनगरस्य भीषणतमस्तथाकथितः साम्प्रदायिक उपद्रवः, ३. रबात-सम्मेलने भारतराष्ट्रस्य अपमानः, ४. सीमान्तगान्धिनां बादशाह अब्दुल गफ्फार खान महाभागानां भारतयात्रा वचनपरिपाटी च। प्रातिस्विकरूपेण आसु एकैका घटना एकैकं विस्तृतं निबन्धं विवेचनाय समपेक्षते, परं वयमत्र सर्वा एताः सम्मेल्य समासतः कमपि निष्कर्षमासादयितुं प्रस्तुताः, येन आगामिगन्तव्यपथनिर्धारणाय कोऽपि प्रकाशः परिस्फुरेदिति।

तत्रेदमादौ दृढमवधातव्यं यदस्माकं भारतराष्ट्रं न नूतनतया आविर्भूतम्, नाप्यस्य संस्कृतिः केनापि अद्यतनीयेन नेत्रा स्वबुद्ध्या परिकल्पिता। नूनमिदं राष्ट्रमासृष्टेः सृष्टिपर्यन्तम् भौगोलिक-धार्मिक-राजनैतिक-सांस्कृतिक-वित्तीयादि-नैकदृष्टिभिः आदर्शराष्ट्ररूपेण प्रतिष्ठापितं सृष्टिकर्त्रा। नात्रास्माकमत्र कीदृशोऽवलेपकरः प्रयासः। विश्वस्रष्टुर्लीलासूत्रधारस्यैव तथासङ्केतः। विश्वस्य प्राचीनतमेन अमरवाङ्मयेन वेदेनैव एतद् बहुशः प्रमाणीकर्तुं शक्यते। अस्माकं पुनरेतत् सौभाग्यं यदेतादृशे देशे जनि गृहीत्वा तत्सेवायै किञ्चित्समधिकृताः। वैश्विकाद्यशासकस्य मनोरथं द्रढीयान् विश्वासो यदयं देश एतद्देशजन्माऽग्रजश्च नूनं विश्वं चारित्रिकशिक्षया सम्पन्नीकर्तुं प्रभवति, यदधिष्ठितं विश्वशान्तिसौमनस्य-भ्रातृत्वप्रासादं विराजते।

आस्तां तावत् स्वात्म-देश-गौरवगानेन। एतेन इदं तु स्पष्टमेव यदिदं राष्ट्रं मूलतः स्वात्मोद्धाराय परेषामुद्धाराय च सर्वथा क्षममेव। इत्थं सर्वथा बिम्बग्रहणशक्तिसम्पन्नमपि दर्पणं यदा रजःपटलेन समाक्रम्यते, तदा तत्प्रस्तरमिव जायते रसविवर्जितम्, छायामूर्च्छनाविसंष्ठुलञ्च। तदा परकीयास्तत्र समागत्य स्वात्मनोऽनुकूलं तक्षणं विधाय समपेक्षितमाकारं तस्मै समर्पयन्ति। तदनुसारमेव तद् विश्वस्मिन्नाद्रीयते, अवमन्यते वा। अस्माकं भारतदेशस्यापि एतादृशी एव स्थितिर्वर्तते। मूलतः सर्वथा सर्वक्षममपि वैदेशिकाक्रमण-दासतादिदोषैः परिक्षयं गतप्राया तदीया विशेषता।

तामिमां पारमेश्वरस्यास्य देशस्य दुःस्थितिं निवारयितुं तेनैव प्रेषितैः लोकमान्य तिलक महाभागैरस्य पुनरुद्धारस्य शुभारम्भः कृतः। परं दौर्भाग्यात् शुभारम्भादल्पकालमेव ते वसुन्धरामिमां त्यक्त्वा स्वर्गताः। अथ तेषामुत्तराधिकारिरूपेण प्रतीक्ष्यचरणा गान्धिमहाभागाः समागताः। भारतीया राजनीतिरन्यदेशवद् विशुद्धभौतिकताधिष्ठिता। आध्यात्मिकीमुर्वरां धरित्रीमासाद्यैव सा शान्तिफलानि फलति। नैतिकमूल्यानामत्र सर्वतोमहर्घत्वं मन्यते। साध्यं कियदपि विशुद्धं भवेत्। यदि नाम तत्साधनं दूषितं चेत् साध्यमपि तन्नूनं दूषयत्येवेति देशस्यास्य सुनिर्धारितं मतम्। तदेव मतमादृत्य गान्धिमहाभागा भारतीय-राजनीतिमञ्चे समवतृताः। सुदीर्घ-देशसेवया सर्वेषामविरोधेन च तैः प्रदर्शितं यद् भारतराष्ट्रमद्यापि चारित्रिकजगद्गुरुत्वगौरवं स्वात्मनि पूर्ववद् बिभर्तीति।

किन्तु देशस्य राजनैतिक-स्वातन्त्र्यप्राप्तिकाले तेषां सहायकैः अनुयायिभिस्तत्सङ्घटनैश्चापि ते तथाऽभिभूताः यत् स्वीयं सर्वमपि प्रबोधमादाय एकान्ते आतङ्कग्रस्ते प्रदेशे गन्तुं विवशा अभवन्। अत्रान्तरे तदनुयायिभिर्नेतृवरैस्तत्सङ्घटनेन च औत्सुक्येन सत्तालोभेन वा पन्थाधारेण देशविभाजन-सिद्धान्तं स्वीकृत्य राष्ट्रविभाजनरूपेण राजनैतिकं स्वातन्त्र्यमासादितम्। अनेन स महात्मा भृशं दुःखितोऽभवत्। परं 'सङ्घे शक्तिः कलौ युगे' इत्यनेन विवश आसीत्। अन्ततस्तेन तत्सङ्घटनमेव समापयितुमन्तिमः प्रयासः कृतः। परं भगवतः कृपावैमुख्याद् देशस्य दौर्भाग्यात् सत्तालुब्धानां महत्या कृपया वा महात्माऽयं तस्मादन्तिमप्रयासात् पूर्वमेव स्वर्गं प्रस्थापितोऽनेन देशेन।

तदनन्तरं देशस्य यादृशमैतिह्यमस्माभिरासाद्यते, तन्न सर्वसाधारणभौतिकताधिष्ठितदेशस्यैतिह्यादतिरिच्यते। देशविभाजनस्य महत्पापेन गान्धिनां साधनशुद्धिसिद्धान्ततिलाञ्जलिदानेन तत्कालीनानां राष्ट्रनायकानां व्यक्तिनिष्ठया च परिप्लुता भारतीया राजनीतिः यावन्ति सत्फलानि प्रासूत, ततोऽप्यधिकानि मूलदूषकानि विषफलान्यपि स्रष्टुं मनाङ् न विरताऽभवत्। तस्यैव पिण्डीभूतं फलं वर्तमानकालीना सर्वतोऽशान्तिमयी अस्माकं देशस्य स्थितिः किल।

अत्रान्तरे गान्धि-जन्मशताब्दिवर्षं समापतितम्। राष्ट्रेनानेन राष्ट्रपितुः कृतज्ञताभिव्यक्तये विश्वव्यापिनो जन्मशताब्दिमहोत्सवस्य संयोजनं कृतम्। सम्मानभाजनस्य महापुरुषस्य नैकैर्गुणैः विश्वं सुपरिचितमेवासीत्, ये किल सर्वथाऽनन्यसुलभा वक्तुं शक्यन्ते। अत एव तैरपि समायोजनमिदं हृदा समभिनन्दितम्, यथाशक्ति सोत्साहं समाचरितमपि। भारतराष्ट्रे पुनस्तदतितरां समुत्साहेन समायोज्यते।

अनेन विश्वस्मिन् भारतराष्ट्रस्य गौरवः सुनिश्चित एव। परं यस्य 'परोत्कर्षसहनं दुराचारः' इत्ययं सिद्धान्तः, यस्य च जन्म एव क्षुद्रस्वार्थभावनया परप्रत्ययनेयबुद्ध्या विवशतः समर्पितस्वातन्त्र्यस्य राष्ट्रस्य स्वातन्त्र्यरसशोषणायैव समभूत्, तद्राष्ट्रमतितरां खिन्नमभवत्। तत्रापि राष्ट्रेण तेन दीर्घकालं यो महात्मा विताडितो विशोषितोऽपमानितो दुरवस्थाश्च गमितो न्यायसम्मानपूर्णजीवनयापनयाञ्चामोघीकरणपापेन, स एवास्मिन् गान्धिजन्मशताब्दि-समायोजने मुख्यातिथिरूपेण वृतो भारतराष्ट्रेण। दृष्ट्वेदं प्रतिवेशिनः प्रतिस्पर्धिनश्च तस्य राष्ट्रस्य चित्तं परं व्याकुलीबभूव। प्रतिक्रियारूपेणैव तेन भारतराष्ट्रे गुप्तरूपेण प्रसृतैः स्वीयैश्चारैः अचिरात्सम्पन्नः अहमदाबादनगरस्य साम्प्रदायिक उपद्रवः परिचालितः। भारतस्य निमन्त्रितः सम्मानितोऽतिथिर्यथाऽत्र नागच्छेत्, तथा सर्वविधैः उपायैः प्रयतितम्।

नैतावदेव, तेन राष्ट्रेन पुना रबात-मुसलिमसम्मेलने अरबदेशस्य निमन्त्रणेन सम्मिलितस्य भारतीय-प्रतिनिधिमण्डलस्य क्षुद्रतरेण उपायेन अवमाननं कृत्वा ( एतादृशः मुसलिम-सम्प्रदायानुयायिनां धन-जननाशको देशो नास्माकं सम्मेलने प्रतिनिधिरूपेण उपस्थातुमधिकृत इत्याक्रोशं कृत्वा) सम्मेलनतः तद्बहिष्करणमपि विहितम्।

इत्थं नैकान्यन्तरायाणि तीर्त्वाऽस्माभिः गान्धिजन्मशताब्दिमहोत्सवः परमेण उत्साहेन सम्पादितः। सर्वत्र देशे विदेशेषु च विविधानि आयोजनानि समभूवन्। देशनायकैश्च स्वीयभाषणेषु परया भक्त्या राष्ट्रपितुश्चरणयोः श्रद्धाञ्जलिः समर्पितः। अस्माकं देशेऽपि राष्ट्रपतिभिः, प्रधानमन्त्रिभिः, अन्यैश्च विभिन्न - भारतीयसङ्घटन - प्रमुखैस्तेषां चरणयोः श्रद्धाञ्जलिः समर्पितः। राष्ट्रनायकै-

क्तम्—'अस्माभिरद्य महात्मगान्धिनो महत्यः शिक्षा विस्मृताः, अत एव साम्प्रतिकीं विषमां दशां गतो देशः। यदि देशस्य समुद्धारं कामयामहे तदा तासां शिक्षाणां जीवने समनुष्ठानं परमावश्यकमि'ति।

किन्तु एतत्सर्वं भारतीय-जनतायाः पुरः 'परोपदेशे पाण्डित्यमेव' जायते। यतो हि उपदेशका एव स्वातन्त्र्योदयतस्तस्य महात्मन उपदेशतो विप्रतीपं समाचरन्तस्तया दृष्टाः। साम्प्रतमपि सर्वेषु व्यवहारपदेषु तदेव दृश्यते। न केवलमेतदेव, पदलोलुपता-दोषमार्जनाय स्वातन्त्र्योदयकाले एव यस्या विलयस्तैश्चिकीर्षितः, सैव संस्थाऽद्य यादवीमनुकृतिं कृत्वा स्वयमेव विलयाय समुन्मुखा दृश्यते। दलीयशासनस्य दम्भं कृत्वाऽपि शासनेन पदे पदे स्वार्थदृष्ट्या दलीयं महत्तरमपि अनुशासनं निर्ममवमन्यते, स्वार्थदृष्ट्या कल्पितान् न्यायाभासान् प्रदर्श्य। कतिपये मुष्टिमेयाः भारतीया एव संस्थामिषेण शासनपदान्यधिकृत्य नरकङ्कालप्रायं जनता-जनार्दनं स्वेच्छया नर्तयन्ति। तादृशस्य शासनस्य तदधिकारिणां वा गान्धिसिद्धान्तोपदेशाः कथं नाम भारतीयजनतायाः कण्ठादधः प्रविशितुं प्रभवेरन्निति साधारणमतिरपि अवगन्तुं शक्नोति।

तथापि सौभाग्यं भारतस्य यदत्रान्तरे समारोहस्यास्य कृते स्वपक्षस्थापन-भावनया निमन्त्रिता अतिथिपादा एव इमां न्यूनतां सर्वथा पूरयितुमस्माकं मध्ये समुपस्थिताः वर्तन्ते। शासनेन पूर्वं तान् स्वीयपाशैराबद्धुं प्रयतितम्। परं जन्मतः स्वतन्त्रताप्रियोऽयं महात्मा जनता-जनार्दनस्य सेवकः कथङ्कारमेतत् सोढुं शक्नुयात्? सर्वं शासकीयमावरणं विसृज्य एकवस्त्रधनोऽयं जनतासु अवतृत्य देशस्य कोणे कोणे परिभ्रम्य निर्भीकं स्वीयमभिमतं भारतराष्ट्रविषये प्रकटयति, दर्शयति च सर्वथा ऐकान्तात्यन्तिकं सुखावहं पन्थानम्। महात्माऽयं महात्मगान्धिनामनुरूपा प्रतिकृतिः। किं बहुना, ते महात्मानस्तु परिसरवर्तिनीं स्थितिमपि विचार्य तदादरणाय प्रयतमाना आसन्। अयं महात्मा पुनः स्वीय-स्वतन्त्रपरिशुद्धमतौ यत्प्रतिफलति, निर्भीकं परिस्थितिनिरपेक्षं तद् वक्तुं मनागपि न शङ्कते।

तेन स्पष्टमेवोक्तम्—"भारतविभाजनादन्यन्न किमपि दुर्भाग्यकरम्। सर्वमेतत् परकीयानामाङ्ग्लशासकानामेव कूटनीतिः। अस्माकं भ्रातरः खानबहादुरादि-विरुदालङ्कृताः वैदेशिकदासताप्राप्तगौरवेणैव आत्मानं बहुमन्यमानास्तेषां वैदेशिकानामस्य कुकृत्यस्य पोषका भूत्वा राष्ट्रविभाजने सहायका अभवन्। भारतीय-कांग्रेससंस्थयाऽपि वैदेशिकानां प्रस्तावममुं स्वीकृत्य बहु अहितं देशस्य समाचरितम्। नेतॄणां सत्तालोलुपतैवाऽत्र हेतुः। किमसङ्ख्यैः भारतीयैः एतादृश-देशविभाजनायैव दीर्घकालव्यापि अभूतपूर्व - बलिदान - समन्वितं स्वातन्त्र्ययुद्धं कृतम्? किं तदा स्वातन्त्र्य-सङ्ग्रामस्य अन्यतम-सैनिकोऽहमपि पृष्टः? परं खेदावहं यदहमस्पृष्ट्वैव कस्यचन अधिनायकस्य हस्ते निक्षिप्तो भारतीयैर्नेतृभिः। महात्मगान्धिभिर्यथासमये मह्यं साहाय्यदानस्य वचनमपि दत्तमासीत्। परं भारतेन तन्न निर्व्यूढम्। अत एव नाहमत्र समागन्तुमुत्सुक आसम्। परं गान्धिनः श्रद्धया देशवासिनां प्रेम्णैव च समागतः। भारतेऽद्य सर्वत्र नेतारः स्वगौरवस्थापनाय सत्ताप्राप्त्यैव च विवदन्तो दृश्यन्ते। जनता-जनार्दनस्य ध्यानं कस्मै अपि नास्ति। सर्वत्र हिंसाया असत्यस्य चैव साम्राज्यं विलोक्यते। यद्येवं प्रचलेत्तदा अचिरादेव अयूबशासनस्येव अस्यापि शासनस्य गतिर्भवेत्। महात्मगान्धिभिः स्वातन्त्र्योदयकाले एव कांग्रेससंस्थाया 'लोकसेवक-सङ्घ'रूपेण परिणमनं समुपदिष्ट-

मासीत्। परं सत्तालोलुपैः नेतृभिस्तथाऽकृत्वा स्थितिरियं समानीता।"

भारत-पाकिस्तानयोः पुनरैक्यस्थापनविषये तैः सार्वजनिकरूपेण उद्घुष्टं यत् "यावत् हिन्दू-मुसलिमधर्मीया राष्ट्रियतानाम्ना साम्प्रदायिकीं घृणामेव धर्मत्वेन स्वीक्रियेरन्, तावदिदं सर्वथाऽसम्भवि।" संसोपा-कार्यकर्तागोष्ठ्याममुमेव विषयं विशदयद्भिस्तैरुक्तम्—"यदा एकादशकोटिमितेषु पाकिस्तानीयजनेषु विंशतिलक्षाधिक-दशकोटिजनानां मतदानाधिकारोऽपहृतः पाकिस्तानशासनेन, तदा पाकिस्तानीयजनैरवगतं यद् धर्मनाम्ना प्रतिशतम् विंशतिजना एव देशस्य पञ्चनवतिप्रतिशतं धनं स्वात्मसात्कुर्वन्ति। फलतस्तैः अयूबशासनं परिवर्तितम्। विभाजनेन हिन्दुस्थानं हिन्दूनाम्, पाकिस्तानञ्च इस्लामधर्मीयाणां देश एतादृशी धारणा बद्धमूलतां गता। कामं भारतीयसंविधाने धर्मनिरपेक्षतायाः सिद्धान्तः समुट्टङ्कितो वर्तते। परं व्यवहारे तस्य मनागपि पालनं न जायते। अन्यथा अहरह एतादृशाः साम्प्रदायिका उपद्रवाः जायन्ते? मुसलिम-लीगादि-तत्तत्सम्प्रदायनिष्ठसंस्थाभिः परस्परमुभयोः सम्प्रदाययोः अतितरां कटुता समुत्पादिता। यावत् इस्लामधर्मीयाणां स्वार्थसाधुभिरापादितोऽयं सन्देहोऽसुरक्षिताभावश्च न परिह्रियेत, तावदुभयखण्डयोरैक्यं कथङ्कारं भवेत्? संभवदपि कथं स्थैर्यं भजेत? सत्यमेतद् यदुभयखण्डीया जनता ऐक्यं कामयते। परमस्य प्रकारोऽयमेव यद् हिन्दू-मुसलिमधर्मीयाः उभावपि निर्धनानां निकटे गत्वा तान् प्रबोधयन्तु यत् साम्प्रदायिकानां भ्रामकेभ्यः प्रचारेभ्यः सावधाना भवन्तु, भ्रातृवच्च वसन्त्विति। नाहं सभा-परिषदादीनां स्मायोजनं विश्वसिमि। मम प्रकारस्तु ग्रामेग्रामे गत्वा निर्धनानां प्रबोधनमेवासीत्, वर्तते च। उभयमपि शासनमत्र बाधकं भवेदित्यपि न शङ्क्यम्; शासनन्तु जनतयैव निर्मितमस्ति। जामामसजिद-धर्मस्थाने भाषयद्भिस्तैः स्पष्टमेव भारतीया इस्लामधर्मानुयायिनः प्रबोधिता यद्भवन्तः साम्प्रदायिकीं घृणां त्यक्त्वा राष्ट्रियभावान्विता भवन्त्विति। इस्लामधर्मस्य राष्ट्रियतायाश्च नूनं न कश्चन विरोध" इति।

सम्प्रति भारते सर्वत्र प्रसृतानां हिंसाऽसत्याद्यनाचाराणां शमनाय प्रायश्चित्तरूपेण गान्धिजयन्तिदिनादन्येद्युः त्रिरात्रमनशनव्रतमपि समाचरितमनेन सीमान्तगान्धिना। एतेनैव भारतसमुद्धारविषये तन्मनसि कीदृशमौत्कण्ठ्यं वर्तते, तत्स्फुटीभवति। सत्यप्येवं स महात्माऽस्य प्रेम्णः प्रत्युपकाररूपेण किमपि, स्वात्मनः पख्तूनिस्तानमहाभियानाय साहाय्यं वा वाञ्छतीति तेन बहुशः स्पष्टमुक्तम्। भारतस्य सेवायै प्रेमसम्पादनायैवेयं तस्य भारतयात्रा वर्तते इत्यपि तेन बहुश उद्घुष्टम्।

सीमान्तगान्धिनां सर्वस्य व्याख्यानस्य सङ्कलनथमत्र एकस्मिन् लेखेऽसम्भवि। संक्षेपत उपर्युक्तविवेचनेन तेषां हार्दिको भावोऽतितरां सुस्पष्टो जायते। अक्षरशस्ते अखण्डभारतस्य सुयोग्यप्रतिनिधिभूता नेतारो वक्तुं शक्यन्ते। सत्याहिंसाशोषितपीडितपक्षपात-सेवा-सर्वथाऽसङ्ग्रहादिगुणगणानां पुञ्जीभूता इयं मूर्तिरद्य गान्धिजन्मशताब्दिमहोत्सव-प्रसङ्गे न अस्माकं मध्ये समागत्य अस्मान् भारतीयजनान् शासकांश्च आत्मनिरीक्षणाय दोषमार्जनाय समुन्नते राजमार्गमारोढुं च आचरणबलाधिष्ठितेन निर्भीकवचनजातेन बोधयति। अस्माकं कर्तव्यमेतदेव यदत्र क्षिप्रमवधाय तथा प्रयतनीयम्। ईश्वरविश्वासिनो वयं भगवन्तमेव प्रार्थयामो यत्स परमकृपालुः स्वीयप्रेष्ठतमस्य देशस्य समुद्धाराय जनताःशासकांश्च सद्बुद्ध्या योजयत्विति।

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

स च स्वामिनीनां हृदयस्थितः श्रीकृष्णालम्बनकः संभोग-विप्रलम्भात्मकोद्वेल्लितोभयविधश्रृङ्गारस्थायिभाव-रससुधासमुद्ररूपः।

मुख्यशक्तिस्वरूपं तु स्त्रीभावो हरिरुच्यते।
तत्र स्त्र्यंशः परा शक्तिः भावांशः कृष्णशब्दितः॥

इति रीत्या स्त्र्यंशः पराशक्तिः, भावांशः कृष्णशब्दितः। यथा कृष्णो भावात्मा तथैव साऽपि। विशिष्टस्यैव भक्तहृदयेषु स्थितिः। मिलितयोरेव मन्मथरूपता। आत्मा तु राधिका प्रोक्ता इत्यादिप्रमाणानुरोधेन श्रीराधा कृष्णस्य परमान्तरङ्गा स्वात्मभूतैव चन्द्रस्य चन्द्रिका इव, भानोः प्रभा इव, गङ्गाजलस्य तरङ्गा इव, आनन्दसिन्धोर्भगवतो वीचय इव। व्रजसीमन्तिन्यस्तदात्मभूता एव। श्रीराधा तु गङ्गाजलस्य माधुर्यमिव परमानन्दरससारसिन्धोर्भगवतः माधुर्यसारसर्वस्वाधिष्ठात्री महालक्ष्मीस्वरूपा ताभ्योऽपि परमान्तरङ्गा। स्वात्मभूतायां तस्यामेव स्वात्मारामस्य रमणम्। अन्यास्वपि तासु तासु तदैव भगवतो रमणम्, यत्र तस्याः प्रादुर्भावः। अत एव तस्या उपासनया तत्तादात्म्यमासाद्यैव भगवद्रतिः सम्पाद्यते। श्रीराधाभावप्राप्त्यैव भगवतोऽपि संभोगप्राप्तिः। तदुक्तमन्यैरपि महानुभावैः—

अनाराध्य राधापदाम्भोजयुग्म-
मनासेव्य वृन्दाटवीं तत्पदाङ्काम्।
असंभाष्य तद्भावगंभीरचित्तान्
कथं श्यामसिन्धो रसस्यावगाहः॥

यद्यपि भूम्याद्यव्यक्तान्ता अपरा प्रकृतयो जीवरूपाश्च पराः प्रकृतयोऽपि भगवच्छक्तिरूपा एव।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥

इति गीतापद्ये 'मन' इत्यनेन लक्षणया तत्कारणं महत्तत्त्वं सूच्यते। बुद्धिपदेन अहन्तत्त्वस्य कारणभूतं महत्तत्त्वमुच्यते। अहङ्कारशब्देन च अव्यक्ततत्त्वं लक्ष्यते।

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥

इत्यादि-गीतादिवचनेभ्यः भगवदुद्भूतत्वेन भगवदात्मकत्वेन भगवद्भावापत्तियोग्यताऽपि सर्वत्र; तथापि यावत्पर्यन्तं भगवद्भावाभिव्यक्तिर्न भवति, तावद्भगवद्रतिर्न संभवत्येव।

अतदात्मभूतैः देहेन्द्रियमनोबुद्ध्यहङ्कारैस्तथाविधैः आत्मभिश्च रसात्मको भगवान् वैजात्येन स्प्रष्टुमप्यशक्यः। तैजसेन चक्षुषा तैजसं रूपमेव उपलभ्यते, न शब्दादयः। पार्थिवेन घ्राणेन पार्थिवो गन्धो गृह्यते, न रूपम्। तत्कस्य हेतोः? साजात्य-वैजात्याभ्यामित्येव मन्तव्यम्। तथैव अप्राकृतरसात्मको भगवान् अतदात्मकैरिन्द्रियादिभिः नानुभूयते। रसात्मकैस्तु तैः सर्वैरनुभूयत एव।

तदर्थमेव भूशुद्धि-भूतशुद्धि-भूम्यादिप्रपञ्चप्रविलयादिभिः अकुलेन्दुगलितामृतधाराभिः भावनावशाद् भगवतः प्रसूतैर्दिव्यैर्भूतैः उपासनोपयोगि-दिव्यदेहनिर्माणम्, प्राणप्रतिष्ठापनञ्च; अन्तर्बहिर्मातृकान्यासः, ऋष्यादिन्यासो मन्त्राक्षरादिन्यासश्च, तत्त्वशुद्धिः, षडध्वशोधनमेवमादिभिः मन्त्रभावितैः सामान्यार्घ्यविशेषार्घ्यामृतपृषद्भिः स्वात्मशोधनम्; यज्ञैर्महायज्ञैः तीर्थाभिषेकैश्च ब्रह्मोपस्पर्शनार्हा ब्राह्मी तनुः सम्पाद्यते।

(क्रमशः)

# शरदि स्वास्थ्यसरणिः

—श्री ब्रह्मानन्दत्रिपाठी, एम० ए० साहित्यायुर्वेदाचार्यः—

निदाघे भानुमतः प्रचण्डैर्भानुभिः सन्तप्तो लोकः पूर्वं यथा तत्प्रतीकाराय वर्षागमनं प्रतीक्षमाण आसीत्, तथैव निरन्तरधारासम्पातं, हंसानां मूकत्वं, भेकानां वाचाटत्वं, पन्थानां पङ्किलत्वं, वारीणां कलुषत्वं, सद्दिनेऽपि दुर्दिनत्वम् इत्यादि तत्र दोषसङ्घमवलोक्य ततोऽपि निर्वृत्तिमिच्छन् सोत्कण्ठं शरदागमनं प्रतीक्षते, तदैव वार्षिकं मालिन्यमुत्सारयन् सरितो नीरजस्काः सम्पादयन्, चन्द्रमसि ज्योत्स्नाविकासमुद्भावयन्, शुभ्रमेघव्याजेन आगगनतलं स्वयशो विस्तारयन्, सरस्सु भ्रमद्भ्रमरभूषिताः सरोजराजीः प्रसादयन् हंसैः स्तूयमानः काशांशुक-समावृतकायः समायातः शरत्समयः !

अयं हि कालश्चिकित्सकानां मातृवद् हितकारकः रोगोत्पादकत्वात् । यथा—वैद्यानां शारदी माता इति । आयुर्वेदमतानुसारेण वर्षा-शरद्-हेमन्तेति ऋतुत्रयं दक्षिणायनं विसर्गकालो वा कथ्यते । अस्मिन् काले सूर्यप्रताप उत्तरोत्तरं हीयते, चन्द्रमसः प्रतापो वर्धते । इदानीम् अम्ल-लवण-मधुररसाः क्रमेणोपचीयन्ते । अत एव प्राणिनाम् अग्निबलं प्रवर्धते । प्रायः शरत्काले प्राणिनां बलं मध्यमतामाश्रयति । तदनन्तरम् उत्तमस्वास्थ्यवतां जाठराग्निः प्रबलो भवति । तदर्थं गुरुस्निग्धद्रव्याणां भोजन-प्रयोगा विहिताः । तदभावे जाठराग्निः शरीरगतान् धातून् विदहति । इदानीं शीतलो वायुः स्वगुणविशिष्टवायोः साम्यात् वृद्धिं प्राप्य कुपितो भवति । तच्छान्त्यर्थं तैलाभ्यङ्गम्, उष्णाहार-विहारादिकमाचरणीयम् ।

> दिवासूर्यांशुसन्तप्तं निशि चन्द्रांशुशीतलम् ।
> हंसोदकमिति ख्यातमगस्त्यान्निर्विषीकृतम् ॥

**क्रियाक्रमः**—तत्र प्रथमं सञ्चयप्रकोपक्रममुदाहरति

> वर्षाशीतोचिताङ्गानां सहसैवाऽर्करश्मिभिः ।
> तप्तानां सञ्चितं वृष्टौ पित्तं शरदि कुप्यति ॥

वर्षाकालिकसञ्चितं पित्तं शरदि सूर्यकिरणैः सन्तापमासाद्य तदानीं झटिति प्रकोपमायाति । तस्यैव संशमनाय तिक्तौषधिद्रव्यसाधित-घृतप्रयोगः; विरेचनं, जलौकावचारणं, शिरामोक्षणञ्च कर्तव्यम् । यतो हि विरेचनं पित्तहराणाम् ।

शरदि पित्तशमनाय भोजने तिक्त-मधुर-कषायरस-प्रधानान् पदार्थान् सेवेत । यथा—

> तिक्तं स्वादु कषायञ्च क्षुधितोऽन्नं भजेल्लघु ।
> षष्टिमुद्गसिता धात्रीपटोलं मधुजाङ्गलम् ॥

यद्यपि चरकेण सन्दिष्टम्—सर्वरसाभ्यासः पथ्यानाम्; तथाप्यस्मिन् तिक्त-मधुर-कषायानां विशिष्य प्रयोगो विहितः; यतो हि सामान्याद् विशेषोऽतिरिच्यते । इदानीं लवणा-ऽऽर्द्रक-भक्षणम् अत्यन्तं हितावहम् ।

**विहार-प्रकरणम्**—अभ्यङ्गं, स्नानं, व्यायामः, सुगन्धिद्रव्योपयोगः, पुष्पमालाधारणं, शुभ्रवस्त्र-परिधानं, गृहाराम-वापी-कूप-तडागादिसेवनं, ताम्बूल-चर्वणं, चन्दनागुरुदिग्धाङ्गी-प्रमदालिङ्गनं सिताज्य-मिश्रितमाहिषदुग्धपानं, सुभाषितगोष्ठीपुरस्सरं मित्रैः सहावासः चन्द्रकिरणसम्पर्कः इत्याद्यन्ये सौख्योत्पादका विहारा सुखं सेवनीयाः ।

**अपथ्यम्**—रात्रौ अवश्यायसेवा, क्षारपदार्थाः, अधिकभोजनं, दधि, तैलं, सूर्यातपः, तीक्ष्णमद्यानि, दिवास्वापः, पूर्ववायुः इत्यादीन् परिहरेत् ।

**स्वास्थ्यरक्षकौषधीनां सेवनम्**—धामार्गवः, त्रायमाणा, मुस्तकः, श्वेतचन्दनं, मधुयष्टी, द्राक्षा, समांशिकानामेतेषां मधुमधुरीकृतः क्वाथो विरेचन-पुरःसरं पित्तं संशमयति । अन्ये च पित्तशामका-रसयोगा मुक्ताप्रवालादीनां प्रयोगाः सुतरां हिताय भवन्ति । भवति चात्र—

> वर्षाकाले प्रकृत्या प्रचयमुपगतः पित्तदोषः प्रकामं
> सूर्योष्माभिः प्रकोपं वहति शरदि सः स्वादुतिक्तैः कषायैः ।
> जेतुं शक्यस्तदानीं रसय सुखकराण्यन्नपानानि गोष्ठीम्,
> मद्यं क्षीराणि तैलं दधिरविकिरणान् पूर्ववायुं त्यज त्वम् ॥

# वाङ्मयीना तपश्चर्या

मुख्यलेखकः—
**श्री सदाशिव कृष्ण फड़के**

—अनुवादकः
**श्री 'अङ्गारः'**

— ४ —

एकदा तर्ककुमारस्य चेतो नैकेषु प्रलोभनपरेषु बाह्यविषयेषु लीनमासीत्। नवमतवादस्य विविधमाकर्षकञ्च साहित्यं तस्मै सुबहु रोचते स्म। पाखण्डविचारप्रणालीं मोहकयुक्तिवादसंभृतां स भृशं स्पृहयति स्म। समाज-परिष्कारक-वाङ्मयस्य हेत्वाभासाः, कुटिलराजनैतिक-वादविवादस्य कुशलं शब्दताण्डवम्, काव्याऽऽख्यायिकादीनां मनोहारिणी अवास्तविकता, इतिहासस्य सत्यानृतमिश्रो भूतार्थवादः, वृत्तपत्राणां साम्प्रतिक-विषयजात-विमिश्रो हरितो घासस्तस्मैऽतितरां रोचते स्म। किन्त्वद्य न जाने कुतोऽनेन वाङ्मयजातेन सोऽरुचिं प्रदर्शयन्नवालोक्यते। तेषु सर्वथा तिरस्कारबुद्धिस्तस्मिन्नद्य परिदृश्यते। अजीर्णजया अरुच्या सर्वमप्यन्नं यथा कटु प्रतीयते, तथैव स्थितिस्तस्य विषयेष्वेतेषु सञ्जाता। उक्तपूर्वमेव यद्धार्मिकवाङ्मयविषये तस्य कदापि प्रेम नासीत्, केवलम् अन्धश्रद्धा पठितुं न प्रभवतीति स तद्वाचयित्वा तां श्रावयति स्म। तस्यामपि अरुचौ अद्य कुमारचेतसि किमपि अन्तरं नागतम्। अत एव किंकर्तव्यविमूढस्य रुग्णस्येव तस्य स्थितिः समभवत्। कोऽस्य प्रतीकारोपाय इत्येव बुद्धौ नायाति स्म।

महात्मनां श्रीं योगानन्दानामुपरि तस्य प्राक्तिकी श्रद्धाऽऽसीदित्यपि न वक्तुं शक्यते। आधुनिकवाङ्मये नैकेषामाधुनिकविदुषामन्तरङ्गाण्यपि तेन स्वबुद्ध्या समाकलितान्यासन्। तेनैते आधुनिका विद्वांसः स्वस्मै मार्गदर्शनाय प्रभवेयुरित्यपि तस्य धारणा नासीत्। तथापि नैकैः आंग्लपदवीधरैस्तेन मिलितम्, तैः सह समपेक्षितः स्वल्पो विचारविनिमयश्चापि कृतः। एतेन तन्मनसि नूत्नरूपेण इदमाविरभूत् तत्त्वं यदेतेषामाधुनिकविदुषां मनांसि तेषां लेखेभ्योऽप्यधिकम् अगभीराणि क्षुद्राणि च भवन्तीति।

इत्थं तस्याविश्वासो वर्धमानस्तन्मनः परमचाञ्चल्योद्विग्नानाकोटौ पातयामास। तदीयेन सर्वथाऽविश्वस्तेन मनसा विचारितम्—काममियं स्थितिरस्तु, मया किमपि कर्तव्यमेवास्य प्रतीकारकरम्। सुदैवादत्रान्तरे तदन्तरे योगानन्दपादानां दर्शनेच्छा समुल्लसिता। नैकानि वस्तूनि अनिच्छतोऽपि मानवस्य प्रारब्धकर्मानुसारेणैव जायन्ते। तेष्वेव अन्यतमोऽयं योगोऽभवत् यत् तर्ककुमारेण विचारोऽयं स्वधर्मपत्न्यै श्रद्धायै श्रावितः। यदा श्रद्धयाऽपि तत्र गन्तुं समीहा प्रकटीकृता, तदैकस्मिन् शुभदिने तौ दम्पती महात्मनां योगानन्दपादानां दर्शनाय प्रस्थितौ। उभावपि सममेव गच्छन्तावास्ताम्, परं मनसी उभयोः परस्परतः सुदूरतरे आस्ताम्। अन्धश्रद्धाया हस्तं गृहीत्वा तर्ककुमारस्तां नयन्ना-

सीत्, परमयं तु केवलः शारीरिकव्यवहार एवाऽभवत्। अन्धश्रद्धायाः कृते मार्गो गृहञ्चैकरूपमेवेति सा स्वभावतोऽप्रवासिन्येव आसीत्।

अन्धायाः श्रद्धाया चक्षुष्मतश्च तर्कस्येदं नूत्नं युगलं यदा योगानन्दपादानां सविधे गतम्, तदा ते महात्मानो नित्यवत् स्वीयाङ्गारिकाया निकटे स्थिता आसन्। तेषां मुखमण्डलं प्रसादविकसितमासीत्। दंपत्योः सप्रश्रयमभिवादनानन्तरं महात्मना एकस्मिन्नासने समुपवेशितुमाज्ञाप्य स्वयमेव प्रथमं भाषितुं समारब्धम्। तैरुक्तम्—'श्रद्धादेवि, अपि प्रकृतिस्तु स्वस्था किल ते ? किं पुनर्दृष्टिलाभः काम्यते ?'

अन्धश्रद्धया प्रोक्तम्—( हस्ताञ्जलिमाबद्ध्य ) 'नहि महाराज ! अस्यामन्धस्थितावपि मह्यं मम पूज्यानां मातृदेवानां पितृदेवानाम् आचार्यदेवानां पतिदेवानाम् उपास्यदेवानाञ्च मूर्तयः सुस्पष्टं दृश्यन्ते। इतोऽधिकं किमपि दर्शनीयं वस्तु नाहं भावये' इति।

योगानन्दपादैरुक्तम्—'साधु, साधु। एते ते पतिदेवाः ! अपि त्वां किमपि वाचयित्वा श्रावयन्ति ?'

अन्धश्रद्धा प्रावोचत्—( हस्ताञ्जलिं बद्ध्वा ) आम् ! किन्तु भवतां कृपया मह्यमधिकश्रवणस्य इच्छाऽपि न भवति। अज्ञानपरिप्लुताया अस्या बालिकाया इमामुद्दण्डतां क्षमत्व महाराज !'

योगानन्दपादा ऊचुः—'सुदृढापरोक्षाय निश्चितसमये सच्छ्रवणं करणीयमेव। न च तत्र काऽपि क्षतिः।'

अन्धश्रद्धया उक्तम्—( हस्तौ बद्ध्वा ) 'यथा महाराजानामाज्ञा !'

योगानन्दपादाः प्रावोचन्—किं भोः तर्ककुमार ! कीदृशं ते वृत्तम्, अपि शोभनं प्रचलति ?'

तर्ककुमारः प्राह—'महाराज ! मनाक् विनयं विहाय वच्मि, तदर्थं क्षमस्व। श्रद्धादेव्या इयं नित्यसन्तुष्टा वृत्तिः, अचिरादेव सम्पन्नो भवद्भिः सह तस्या वार्तालापश्च श्रुत्वा एतयोः कतरदुचितम् ? इत्येव नावगच्छामि। 'शोभनम्' इत्यस्य 'समाधानकरम्' इत्येव वास्तविकोऽर्थश्चेत्, नाहं किञ्चिदपि अवगन्तुं पारये। **वागैवेदं सर्वम्** इदमुच्यते। मन्यते च शब्द एव निखिलं विश्वं धारयति पोषयति च। प्रायो मानवानां व्यवहारः शब्देष्वेव निर्भरः। रात्रावपि प्रकाशकरः, अन्धस्यापि मार्गप्रदर्शकोऽयं शब्द-मार्तण्डः सुप्रथितः किल। शब्दावच्छिन्नं चैतन्यमेव शास्त्रम्। वेदान्तदर्शनकृद्भिः शब्दे एव अनन्यसाधारणं प्रामाण्यं व्यवस्थापितम्! इत्थं शब्दावगुण्ठिता ज्ञानोपासनैव वाङ्मयं तप उच्यते। प्रौढावस्थायां सम्प्राप्तायां मयेदं वाङ्मयं तपोऽन्यूनं द्वादश वर्षाणि यावत् समाचरितम्; तथापि न मे यत्किञ्चिदपि समाधानम्। प्रत्युत यथा अतिभोजनेन अजीर्णत्वं सम्प्राप्तो जीवो दुरवस्थो भूत्वा वैकल्यं भजते, तथैव मे शोचनीया स्थितिः संवृत्ता। अस्य कश्चित्समुचित उपायश्चेत् कृपया सूचनीयः। एतदर्थमेवाहं तत्र भवतां चरणेसु सविनयं समुपस्थितोऽस्मि।'

योगानन्दपादाः प्राहुः—'युक्तमेतत्। पाण्डित्यप्रचुरां प्रस्तावनामिमां श्रुत्वा सन्तुष्टोऽहम्। अवधेयमेतत् यत् परमध्येयस्वरूपस्य ब्रह्मात्मज्ञानस्य तत्सम्पादनादीनाञ्च विचारपूर्वकं दृढनिश्चयः सम्पन्नश्चेत्, जिज्ञासायामेव च ते वास्तविकी अनन्यगतिकता परिणता चेत्, भगवानपि मुखेनानेन ( मम ) उपायविशेषं नूनं संसूचयेत्। किन्तु तेषामुपायानां योग्यायोग्यत्वनिश्चयस्त्वयि नाधिकृतः। रुग्णस्य परं कर्तव्यं यत् सद्वैद्यतोऽधिगतमौषधम् अतिचिकित्सायाः ( विचिकित्सायाः ) परिवर्जनेन श्रद्धया ग्राह्यमि'ति।

तर्ककुमारः प्रोवाच—'तत्र भवतां युक्तिवादोऽयं सप्रश्रयमनुमन्ये ।'

योगानन्दपादा आहुः—'अलम् ! यदि भवान् मां मनसा वैद्यं मन्तुं प्रस्तुतस्तदा यथाऽहं कथयिष्यामि तथा कर्तुमपि सन्नद्धः किम् ?' इति ।

तर्ककुमारेण उक्तम्—'यथाशक्त्या प्रयतिष्ये ।'

योगानन्दपादा आहुः—'प्रयतनमन्तरा किन्नामास्ति ते सविधे ?'

तर्ककुमार उवाच—'इदमपि इदानीमवगच्छामि । अतः साम्प्रतं किमहं करोमीति आज्ञापयन्तु तत्र भवन्तो भवन्तः' इति ।

योगानन्दपादा ऊचुः—'बाढं बाढम् ! शृणु, अहं समपेक्षितं स्वीयं वक्तव्यं सूत्रवत् कथयिष्यामि । तत्र च यन्नावगच्छेत्, तन्निरभिमानतया यथावकाशं स्वीयया श्रद्धादेव्या अवधेही'ति ।

तर्ककुमार आह—'यथा भवद्भ्यो रोचते ।'

योगानन्दपादाः प्रावोचन्–'तर्ककुमार ! ( १ ) प्रथममिदं ध्येयं यद् भवान् वाङ्मयं तप इति यद्वदति, न तद्वाङ्मयं तपः । ( २ ) तपसो लक्षणे मनोनिग्रहः सारासारविचारश्च मुख्ये । स्वभावतोऽज्ञायाः भ्रान्तायाश्च बुद्धे रुचिकरस्य वाङ्मस्य पठनं न तपोऽन्तर्गतं वास्तविकमिष्टञ्च वाङ्मयम् । त एव ईशप्रासादिकाः ग्रन्था पठनाय त्वया समादरणीयाः, येषामनुबन्धे फलश्रुतिरियं समुल्लिखिता स्यात् यद्भवता समपेक्षिते सुख-शान्ती अनेन नूनमधिगम्ये' इति । ( ३ ) एतादृशेषु ग्रन्थेषु समुल्लिखिता फलश्रुतिर्नूनमधिगता स्यादिति दृढनिष्ठाभावोऽपि अपरं महत्त्वपूर्णं वस्तु ।

( ४ ) तपसोऽपि कश्चिद्विधिर्भवति । एकस्मिन् हस्ते धूमवर्तिकामादाय, विश्रामकाष्ठपीठे कोट-पतलूनादिवस्त्रैर्देहं परिवेष्टच शयानो भूत्वा पठनं न वास्तवं पठनं नाम । एवमेव यात्रासु म्लेच्छाऽस्पृश्यादिभिः सह संयुज्य ग्रन्थावलोकनमपि वास्तविक-पठनकोटौ न प्रविशति । स्नात्वा, धौतवस्त्रं परिधाय, पवित्रस्थाने, एकान्ते, आसने समुपविश्य, स्वस्थेन चेतसा, अन्तःकरणानुरूपस्यैव ग्रन्थस्य निष्ठापूर्वकम् अवधाय, सावकाशपठनमेव पठनस्य वास्तविको विधिः ।

( ५ ) पठनकालो नियमितो भाव्यः, तेन सहजत एव वेधशक्तिः प्राप्यते । ( ६ ) स्वस्थतया वैखरीवाण्या पठनीयम् । तच्च इत्थं यद् ग्रन्थगतं प्रत्यक्षरं चक्षुषा सावहितं विलोकनमन्तरा कथमपि न पठनीयम् । एवमेव वाणी, नेत्रे कर्णौ–त्रिधारायामस्यां मतिर्मीनवत् अनुस्यूता स्यात् । इत्थमखण्डसावधानतया योग्यग्रन्थानां पठनमेव वास्तविकं पठनं किल । तेन सहजत एव मनोनिग्रहः साध्यते ।

( ७ ) **कर्मण्येवाधिकारस्ते मा फलेषु कदाचत्** इति भगवदुक्त्यनुसारं कर्मषु आस्था भाव्या, फलश्रुतिविषये अधीरेण न भाव्यम् । ( ८ ) योग्यग्रन्थानाम् उपरिनिर्दिष्टयोजनोत्तरं पुनः पुनः पारायणं विधेयम् । नैके ग्रन्था लेखाश्च न पठनीयाः । अद्यावधि मया यदुक्तम्, तत्सर्वं ते बुद्धौ समारूढमेव स्यात् ?' इति ।

तर्ककुमार उवाच—'श्रीमहाराज ! तथापि के के ग्रन्थाः पठनीयाः ? इत्यस्य निश्चये मे मतिः न प्रभवति, पूर्वग्रहदोषैस्तत्र प्रमादोऽपि आशङ्क्यते । अतस्तेषां ग्रन्थानां योजनेऽपि तत्र भवतामाज्ञा भाव्ये'ति ।

योगानन्दपादैः प्रोक्तम्—( ९ ) 'साधु, साधु ! अहं किल 'रामगीता'सदृशः स्वल्पतरो ग्रन्थो भवतोऽध्ययनाय निर्धारयितुं समभिलषन्नासम् । परमेतादृशे स्वल्पतरे ग्रन्थे भवतो निष्ठा स्थिरा न भवेदिति

( शेषांशः ३२ पृष्ठे )

# क्रियाविशेषणविभक्तेः पाणिनीयता-विचारः

—श्री आचार्यः केदारनाथ ओझा—

१.

[ विहारप्रदेशस्य 'गम्हरिया' ( सारन )-वास्तव्यैः सुप्रसिद्ध-वैयाकरण-दार्शनिकै विद्वद्भिः श्री ओझा-महाभागैः क्रियाविशेषणविभक्तिं विषयीकृत्य प्राचामुदीचाञ्च प्रचलिताः सर्वा विप्रतिपत्तीः समुपन्यस्य सूत्र-वार्तिक-भाष्याध्ययनाधारेणऽत्र निबन्धे दश निष्कर्षाः साधिताः, ये च नूनं व्याकरण-महोदधितस्तलगतानि रत्नानि विचिन्वतां सङ्ख्यावतां परप्रमोदाय भवेयुरिति सादरं दृढं भावयन्तोऽपि वयं स्थानसङ्कोचात्तान् धारावाहिकरूपेण क्रमशो द्वि-त्र्यङ्केषु प्रकाशयामः। समग्रस्य निबन्धस्य प्रकाशनोत्तरं निबन्धस्यास्य समीक्षणमपि कैश्चित्प्रे येत चेत्तदपि सोल्लासं प्रकाशयिष्याम इति निवेदयति।—सम्पादकः ]

*यस्माद् वाग् विनिवर्तते च रमते यस्मिन् पदं सत्परम्,*
*वाक्ये स्फोटमये च लिङ्गवशतोऽखण्डं सदा नृत्यति।*
*रूपं नाम विवर्तते विविधतां धत्तेऽद्वयं राजते,*
*वाचं ब्रह्म विचिन्तयामि शरणं यामि स्वतो भासताम्॥*

प्राचामुदीचाञ्च बहूनामाचार्याणा विपरीतानि व्याख्यावचांसि समुपेक्ष्य सूत्र-वार्तिक-भाष्याण्येव प्रमाणत्वेनाऽऽधारीकृत्य वचनसिद्धम् अनुपपत्तिगम्यं ज्ञापकसिद्धञ्च सिद्धान्तमुररीकृत्य प्रवृत्तमिदमध्ययनम्।

**तत्र एते निष्कर्षाः**

( १ ) क्रियाविशेषणस्य कर्मसञ्ज्ञायां किमपि पाणिनीयानामनुशासनं नास्ति।

( २ ) कतिपये व्याख्यातार आचार्या क्रियाविशेषणस्य कर्मसञ्ज्ञां ब्रुवाणा अपि शेखर-शब्दरत्नकृतौ विहाय क्रियाविशेषणस्य कर्मसञ्ज्ञायै 'कर्तुरीप्सिततमं कर्मे'ति सूत्रं न सङ्गमयन्ति, अग्रेतनानां व्याख्यानन्तु शेखरादिमूलकम्।

( ३ ) नागेशादयः फलान्वयिन एव विशेषणस्य कर्मसञ्ज्ञां समीहन्ते, न व्यापारान्वयिनः। बहुधा तथैव लेखः। क्वचित्को विपरीतलेखः प्रामादिको मूलकृतो लेखकस्य वा भवेत्।

( ४ ) कस्यचित् क्रियाविशेषणस्य द्वितीयान्ततायां ज्ञापकदानमन्यथासिद्धं नादरणीयम्।

( ५ ) अकर्मकस्थले व्यापारान्वयं विना केवले फले विशेषणान्वयो व्याकरणशास्त्रसिद्धान्तविरुद्धो भाषाविज्ञान-शास्त्रविरुद्धश्च।

( ६ ) 'द्रुतं गच्छति, मन्दं गच्छती'त्यादौ धात्वर्थव्यापारे एव द्रुतत्व-मन्दत्वा-

देरन्वयो न तु फले। केषाञ्चित् फलान्वय-वादो भाषास्वभावानभिज्ञतामूलको भाषा-विज्ञानविरुद्धश्च।

( ७ ) धात्वर्थनिरूपणे फल-व्यापारयोः साध्य-साधनभावो जन्य-जनकभावोऽनुकूलत्वं वा भासते तत्र साध्यत्व-साधनत्व-जनकत्वादिः संसर्गतयैव भासते, न तु प्रकारत्वेन, गौरवादनुभवविरोधाच्च। तदाधारेण केषाञ्चित् साध्यत्वस्योत्पत्तेः फलतावच्छेदकस्य च फलत्ववर्णनं कल्पनामात्रं प्रमाणशून्यमनुभवविरुद्धञ्च।

( ८ ) क्रियाविशेषणकर्मणः कर्मतयाग्रहणे दोषाः सूत्रभाष्यादिविरोधश्च।

( ९ ) क्रियाविशेषणकर्मणि अभेदे साध्य-साधनभावविरोधो भाष्यविरोधश्च। यद्यपि अनेकस्थले बुद्धिसिद्धं पदार्थमादाय साध्य-साधनभावो वर्ण्यते, तथापि अभेदो भेदश्च युगपद् विरुदध्यत एव।

( १० ) कर्म - द्वितीयायाः सर्वत्र आश्रयत्वमाश्रयो वाऽर्थो न तु क्वचिदभेदः।

एतेषु संक्षेपतः किञ्चिद्विवेचयामि, पाठकान् अध्ययनशीलान् विदुषो निवेदयामि च यत् सूत्र-वार्तिक-भाष्यविरुद्धमत्र यद् भासेत तद् विरोध-प्रदर्शनपुरस्सरं कृपया कथमपि सूचयन्तु, अन्येषां विरोधप्रदर्शनस्य नावश्यकता, तत्र नावधानं मम।

१. **प्रथमनिष्कर्षः**

तत्रापि सम्प्रदायः—बहूनि पाणिनिसूत्राण्युल्लिखन्तः क्वचिन् महाभाष्यमपि निर्दिशन्तो गदाधर-भट्टाचार्या व्युत्पत्तिवादे क्रियाविशेषणस्य कर्म-सञ्ज्ञायै पाणिनीयमनुशासनमपश्यन्तोऽनुशासना-न्तरमिव लिखन्ति। तस्य कृष्णंभट्टीटीका पददर्थं पाणिनीयमनुशासनं नास्ति इति स्फुटं वक्ति। अन्ये टीकाकारा अतिदिष्टं कर्मत्वं व्याचक्षते। पाणिनीयानुशासनविरहादेव शब्दशक्तिप्रकाशिकायां जगदीशतर्कालङ्काराः कर्मत्वमनङ्गीकुर्वाणाः प्रकारा-न्तरेण द्वितीयासाधनाय क्लिश्यन्ति। पाणिनि-सूत्रानुसारं कारकार्थं व्याचक्षाणाः खण्डदेवप्रभृति-मीमांसकाः अनुशासनाभावादेव कथमपि द्वितीयां साधयन्ति। पाणिनीयव्याकरणस्यापि व्याख्यातार आचार्याः **क्रियाविशेषणम्, क्रियाविशेषणद्वितीयान्तम्, क्रियाविशेषणं कर्म** इत्यादिशब्दैरसकृद् व्याहरन्ति ग्रन्थेषु। तथा च क्रियाविशेषणस्य द्वितीयान्ततया भूयान् प्रचारः प्रतिभाति। द्वितीया-विधाने प्रकारभेदः परं संभवति।

भूषणसार-दर्पणधात्वर्थनिरूणे 'स्तोकं पचती'-त्यादिप्रसङ्गे "अन्ये तु 'ओजः सहाम्भसा वर्तते' इत्यधिकारे **तत्प्रत्यनुपूर्वमीपलोमकूलम्** इति सूत्रे द्वितीयान्त-तच्छन्दग्रहणं ज्ञापकं क्रियाविशेषणाद् द्वितीयेत्यस्यार्थस्य, न तु स्तोकाद्यर्थस्य कर्मत्वमपि, फलस्य फलाश्रयत्वाभावात्" इत्यादि लिखितं वर्तते। तथा च पाणिनीय-वैयाकरणानामपि कश्चित्सम्प्रदायः क्रियाविशेषणकर्मत्वाभावस्य।

प्रायः १९३६ ईशाब्दे काश्यां स्वर्गीया अर्च-नीयचरणा महामहोपाध्यायाः **श्री हाराणचन्द्र भट्टाचार्याः** "क्रियाविशेषणे कर्मसञ्ज्ञार्थं किमपि पाणिनीयानुशासनं महाभाष्यस्वारस्यं वा नास्ति, पाणिनीय-व्याकरणानुसारिणी प्रातिपदिकार्थे प्रथमैव युक्ता, शेखरादौ द्वितीयाप्रसिद्धिमनुरुद्धय नागेशादयः क्रियाविशेषणस्य फलान्वयिनः कथमपि कर्मसञ्ज्ञां विदधति, व्यापारान्वयिनः क्रियाविशे-षणस्य तन्मतेऽपि प्रथमान्तत्वमेव। शेखरकृता 'तत्-प्रत्यनुपूर्वमीपलोमकूलमि'ति सूत्रे प्रथमैवोक्ता, मम गुरुपरम्परागतोऽयं विषयः" इत्युब्रुवन्।

तदानीमेव काश्यां प्रसिद्धाः पञ्चषा महा-

वैयाकरणा मया पृष्टा नान्वमोदन्त इमं सम्प्रदायम्। परं क्रियाविशेषणस्य कर्मतायां भाष्यस्वारस्यमपि न प्रादर्शयन्।

शब्देन्दुशेखर - कारकशेखरदीपकाभिधटीकायामेतत्प्रसङ्गे सप्तमनिष्कर्षसूचितफलवर्णनद्वारा क्रियाविशेषणस्य कर्मसञ्ज्ञा सम्पादिता वर्तते, तदाधारेणैव कालिकातास्थ-विशुद्धानन्दविद्यालयीयनैकविरुदावलीभागा **श्री सीतारामशास्त्रिणा** 'क्रियाविशेषण-तत्त्वम्' नाम लघुपुस्तकं प्रणीतम्, तच्च 'मञ्जूषा'-संस्कृतपत्रे प्रकाशितं वर्तते। १९५७ ईशाब्दे अयोध्यास्थे 'संस्कृतं'-पत्रे एतद्विषये बहुषु अङ्केषु अनेकलेखाः प्रकाशिताः, तत्र ममाऽपि लेखा आसन्। विवेचका विद्वांसो विचारस्य मार्गान्तरमाश्रितवन्त इति न तादृशं सन्तोषमवापमिति पुनः प्रस्तौमि।

श्री नित्यानन्दपर्वतीयकृते शेखरदीपके एतद्विषये इत्थमपि लिखितम्—'परे तु फलस्य कर्मत्वाभावेऽपि 'नीलं घटमानये'त्यादौ कर्मवाचक-घटादिपदसमानाधिकरणनीलादिपदानां कर्मत्वेतरकरणत्वादिसम्बन्धानवच्छिन्नप्रकारताप्रयोजकत्वात् तेभ्य इव फलवाचकपदादपि द्वितीया सेत्स्यतीत्याहुरि'ति।

तत्रेदमेव मम वक्तव्यम्—शेखरकृतप्रकारे केनचिदस्वरसेन प्रवृत्तमिदं प्रकारान्तरम्। अस्वरसबीजं कदाचन शेखरकृत-प्रकारस्य भाष्यादिस्वारस्यविरह एव भवेत्। इदमपि मतं क्रियाविशेषणस्य कर्मत्वाभावेऽपि द्वितीयान्तत्वाग्रहेण। कल्पना चेयं दुर्बला भाष्यस्वारस्यविहीना अप्रामाणिक-गौरवग्रस्ता च। कर्मत्वेतर - करणत्वादि - सम्बन्धानवच्छिन्नप्रकारताप्रयोजकाद् द्वितीयेति 'कर्मणि द्वितीया'-सूत्रस्य, एवं करणत्वेतर - कर्मत्वादिसम्बन्धानवच्छिन्नप्रकारताप्रयोजकात् तृतीयेति 'कर्तृकरणयोस्तृतीये'त्यादिसूत्राणामर्थवर्णने अप्रामाणिकगौरवम्, 'सतां गतम्, मातुः स्मरती'त्यादावेव कथमपि कर्तृत्वकर्मत्वादेः संसर्गत्वसंभवेऽपि अन्यत्र प्रकारतयैव भानादसम्भवग्रस्तम्, **कटमपि कर्म, भीष्ममपि कर्मे**त्यादि-भाष्यविरुद्धञ्च। कर्मत्वादेरप्रातिपदिकार्थत्वात् कर्मादिद्वितीयादेर्बाधकत्वाच्च कर्मत्वादिसम्बन्धानवच्छिन्नप्रकारताप्रयोजकात् प्रथमेति अर्थात् सिद्धादर्थादनया रीत्या प्रथमाया युक्तत्वाच्च।

तथा च **सुपां कर्मादयोऽर्था** इत्यादि-भाष्यस्वारस्यात् फलाश्रयस्यैव कर्मसञ्ज्ञा, न तु फलस्य, न वा फलान्वयिनो विशेषणस्येति परिशेषात् प्रातिपदिकार्थमात्रे प्रथमेति मम प्रतिभाति।

यत्तु प्रथमास्वीकारे 'निपुणस्त्वं पचसि, मृदु त्वा राजा द्रविणेन योजयति' इत्यादौ **सपूर्वायाः प्रथमाया विभाषा** इति सूत्रस्य प्रवृत्त्या अन्वादेशे वैकल्पिकत्वादेशापत्तिरित्युच्यते। तन्न विशेषाधायकम्; वैकल्पिकाप्रवृत्तेस्त्रिमुनिप्रमाणकत्वाभावात्। त्रिमुनिमतेऽत्र क्रियाविशेषणस्य प्रथमान्तत्वे वैकल्पिकस्येष्टत्वाच्च। शेखरकारदिशा फलान्वयिनो विशेषणस्यैव द्वितीयान्तता, व्यापारान्वयिनो विशेषणस्य प्रथमान्तत्वं तिष्ठत्येव। लोकप्रसिद्धिस्तु क्रियाविशेषणमात्रे द्वितीयायाः, शेखरकृतापि लोकानुरोधस्त्यज्यत एव।

गदाधरभट्टाचार्यास्तु यदि व्याकरणान्तरानुशासनमभिप्रयन्ति, तदा नात्रासौ विचारविषयः, अतिदिष्टं कर्मत्वन्तु मुनित्रयानुक्तत्वान्न पाणिनीयानामादृतम्।

**उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।**
**द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥**

इति वार्तिके **अन्यत्रापि दृश्यते** इत्यनेन भाष्यानुक्तेषु द्वितीयाविधानं न पाणिनीयानां सम्मतम्। तेन जगदीशतर्कालङ्कार - खण्डदेवमीमांसकयो-

र्थावस्था न पाणिनीया। ततश्च क्रियाविशेषणस्य कर्मत्वं द्वितीयान्तत्वं वा न त्रिमुनिप्रमाणकम्।

यदपि 'सक्रुल्ल्वौ' इत्यादौ क्रियाविशेषणस्य सक्रुदित्यस्य कर्मत्वाभावे कारकत्वाभावेन गतिकारकेतरपूर्वपदस्य यण् निषेधापत्तिः। तदपि न; प्रातिपदिकार्थसूत्रस्य क्रियायोगे प्रवृत्त्या क्रियान्वयस्य सत्त्वाच्च कारकत्वाक्षतेः।

तत्प्रत्यनुपूर्वमीपलोमकूलम् इति सूत्रे वर्तते योगे तत्पदं क्रियाविशेषणं द्वितीयान्तमिति बहूनां व्याख्यानमपि न भाष्याद्यनुकूलमित्यशुद्धम्। अत एव तत्र शेखरे प्रथमाया युक्तत्वमुक्तम्। अकर्मकवर्ततियोगे व्यापार एव तत्पदार्थस्यान्वयात् नागेशमतेऽपि प्रथमाया एव युक्तत्वात्। प्रथमान्तस्वीकारे भाष्यादिविरोधाभावात्।

तृतीयनिष्कर्षस्यापि नागेशमतस्येदमप्युदाहरणम्।

चतुर्थनिष्कर्षस्य अन्यथासिद्धिरप्येवमेव ऊह्या। अस्य सम्बन्धः पञ्चमनिष्कर्षनिरूपणेऽप्यायास्यति।

करणे **स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य** इति सूत्रे करणग्रहणस्य प्रयोजनं 'स्तोकं पचती'ति दीयते। कर्मत्वाभावे तन्न सङ्गच्छते, अतः क्रियाविशेषणस्य कर्मत्वमिति केचन वदन्ति। तदपि आपाततः; व्यावृत्तौ प्रथमा-द्वितीययोर्विशेषाभावात्। असत्त्ववचनत्वमात्रमपेक्षितम्, धात्वर्थसाध्यावस्थापन्नक्रियायामन्वयादसत्त्ववचनत्वाक्षतेः।

**पूजनात् पूजितमनुदात्तमिति** सूत्रादपि केचन क्रियाविशेषणस्य कर्मत्वं निस्सारयन्ति। मलोपवचनात् तत्सूत्रमसमासे प्रवर्तते। 'दारुणाध्यापक' इत्युदाहरणम्। क्रियाविशेषणस्य कमद्वितीयान्तत्वे न मलोपवचनं सार्थकम्। अन्यथा 'दारुणोऽध्यापक' इत्यत्र विसर्गादिलोप उपसंख्यायेत इति। तदपि यत्किञ्चिदेव; क्रियाविशेषणस्य प्रथमान्तत्वेऽपि नपुंसकत्वान्मलोपवचनस्य सार्थक्यात्, द्वितीयालोपो नोच्यते येन प्रथमान्तत्वं विरुद्ध्यते। यथा द्वितीयायामेकदेशान्वयो नपुंसकत्वञ्च तथा प्रथमायामपि, क्रियाविशेषणं द्वितीयान्तमिति व्याख्यातृभिरुक्तं न तु भाष्यकृता, मलोपप्रत्याख्यानपक्षेऽपि यथा द्वितीयायां कर्मधारयस्तथा प्रथमायाम्। प्रथमा च प्रथममुपस्थिता, 'स्तनाभ्यां स्तोकनम्रे'त्यादिवत् दारुण्येन साकं सामानाधिकरण्यम्। अत एव त्रिमुनिसम्मतेरभावात् स्तोकं करोतीत्यर्थे कर्मण्यण् अप्रामाणिकः।

**समर्थः पदविधिः** सूत्रस्य भाष्य-प्रदीपोद्योता अवलोकनीयाः। तत्र विधिशब्दस्य कर्मसाधनमुक्त्वा भाष्यकारो ब्रूभूते—**किं पुनर्विधीयते ? समासो विभक्तिविधानं पराङ्गवद्भावश्च** इति। तत्र क्रियाया एकवचनान्तत्वेन प्रत्येकमन्वयात् **विभक्तिविधानं विधीयते** इत्युत्तरस्यावान्तरवाक्यं फलति। तत्र विधानस्य विधानकर्मत्वं विरुध्यते इत्यनुसन्धाय प्रदीप आह—**तत्र विभक्त्यवच्छिन्नत्वाद्विशिष्टं विधानं कर्म सामान्यविधानक्रियाया भवति, यथोक्तम्—सामान्यपुषेरवयवपुषिः कर्म** इति। एवञ्च भाष्ये प्रदीपे च क्रियाविशेषणत्वात् कर्मेति नोक्तमस्ति। प्रदीपे कर्म उक्तं कीदृशं कर्मेति नोक्तम्। अधुना विभक्त्यवच्छिन्नेति प्रदीपस्य प्रतीके उद्योतो लिखति—**एवञ्च पाकं पक्ष्यतीतिवत् सामान्यविशेषभावेनान्वय इति भावः। क्रियाविशेषणत्वाच्च कर्मत्वम्** इति।

इदं तत्र चिन्तनीयम्—दार्ष्टान्तिके कर्मणि विधाने विभक्त्यवच्छिन्नत्वविशिष्टत्वेन विशेषत्वम्, दृष्टान्ते 'पाकं पक्ष्यति' इत्यत्र कथं कर्मपाकस्य विशेषता ? यदि घञर्थ-धात्वर्थयोर्मेलनाद्विशेषता तर्हि दार्ष्टान्तिके विभक्तित्वावच्छिन्नस्य योजनं प्रदीपस्य व्यर्थम्। ल्युडर्थ-धात्वर्थयोर्मेलनादेव विधानस्य विशेषत्वसंभवात्। प्रदीपस्य 'यथोक्तमित्यनेन **कर्मवत्कर्मणा-**

तुल्यक्रियः इति सूत्रस्य भाष्यं गृह्यते, तत्रैव तस्य व्याख्यानं द्रष्टव्यम्। वस्तुतस्तु सार्वधातुके यक् सूक्तभाष्यरीत्या कृदभिहितभावस्य द्रव्यवत्तया क्रियया समवायाच्च पाकं विधानमित्यादि फलाश्रयकर्मैव, न तु क्रियाविशेषणं कर्मेति बोध्यम्। सामान्यविशेषभावस्य अभेदस्य वा आश्रयत्वस्य वैलक्षण्ये एव कथमप्युपयोगः। 'कर्मवत् कर्मणा तुल्यक्रियः' सूत्रभाष्येण धात्वर्थस्य धातूत्तरकर्मप्रत्ययार्थत्वं विरुद्ध्यते, विलक्षणस्य कृदर्थभावस्य फलाश्रयकर्मतैव एतादृशेषु भाष्यसम्मता। विभक्तिविधानं विधीयत इति कर्मलकारस्योदाहरणम्, क्रियाविशेषणकर्मणि कर्मलकारो न भवति, अन्यथा 'स्तोकस्तण्डुलं पच्यत' इत्याद्यापत्तेः। तथा च कर्मलकारे क्रियाविशेषणकर्मवर्णनमेतद् भाष्यविरुद्धम्। कर्मषष्ठ्या कर्मलकारे च कर्तृसाहचर्येण भेदान्वयि कर्मैव गृह्यते इति अन्यत्र निरूपयन्तो नागोजीभट्टमहोदयस्य स्वोक्तिविरोधः। इदञ्च भाष्यं क्रियाविशेषणस्य कर्मत्वसाधकतया केचन समुद्धरन्ति, परं तद्विपरीतं क्रियाविशेषणस्य कर्मतां विरुणद्धि। इदमष्टमनिष्कर्षनिरूपणेऽपि योज्यम्।

(क्रमशः)

( २२७ पृष्ठस्य शेषांशः )

'श्रीमद्भगवद्गीता'नामकमेव ग्रन्थं संसूचयामि। तस्यैव उपर्युक्तदिशा नियमितकाले नित्यं यावन्ति पारायणानि कर्तुं शक्यन्ते, करणीयानि। पारायणसमये अन्यत् किमपि न पठनीयमि'ति।

तर्ककुमार आह--'महाराज, प्रश्नं पृच्छामीत्येतदर्थं क्षन्तव्योऽयं जनः। प्रतिदिनं गीतापाठोत्तरं शिष्टे समये किं कार्यम्? वाचनस्य तु मम व्यसनमेवास्ति।'

योगानन्दपादा आहुः—'आम्, तत्तु मयाऽपि ध्यातमास्ते। किन्तु तथा व्यसनं व्यर्थमेव। निकषा नदीः प्रवहति। तत्र गत्वा स्नातव्यम्। (१०) अहं भवते मन्त्रमेकं समुपदिशामि। तस्य नित्यं नियमितरीत्या शुचिर्भूत्वा यथा वच्मि, तथा जपः कार्यः।' तत्र भवतो मनो न समाकृष्टं स्यात्तदा एकान्ते गीतायाश्चिन्तनं मननञ्च विधेयम्। अधिकाधिकं भगवत्पादानां श्री शङ्कराचार्याणां भाष्यं तदनुकूला काचन टिप्पणी पठनीया। अथवा अन्यस्मिन् सात्त्विके व्यवहारे कालो यापनीयः। यावच्छक्यं वाचनं स्वल्पतां नेयम्। अतिवाचनं हि न वाङ्मयं तपः। 'मौनमे'व कालेन सुखशान्तिकरं वाङ्मयीनं तपोऽस्ति' इति।

## परिवर्तनीयम्

उल्लङ्घयन्तु सरितः परितः प्रमत्ताः क्षुद्रा निजस्थितिममूर्जलदागमेन।
उच्चैर्हरस्य शिरसि स्थितिमाप्तवत्या गङ्गे त्वया न चरितं परिवर्तनीयम्॥ १॥
वाग्देवतार्चनवशाद् गुरुसन्निधाद् अभ्यासतोऽपि कविता वृणुते पुमांसम्।
तस्मात् परस्य सुकवेर्न कदापि काव्यं सर्वापहारविधया परिवर्तनीयम्॥ २॥
रम्यप्रसूननिवहां न विनोदवाटीमाटीकते भुजग! भीतिभरेण लोकः।
गर्वं त्यज त्वमुपसीददति नीलकण्ठः स्थानं त्वया ननु स्यात् परिवर्तनीयम्॥ ३॥

—श्री बटुकनाथशास्त्री खिस्ते—

# मानस-भारती--देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए०, साहित्याचार्यः—

दम्भस्य सेच्छस्य बलं हि लोभे
नार्या बलं पञ्चशरे प्रसिद्धम् ।
कठोरवाक्यस्य बलं च कोपे
विचार्य मान्या मुनयो वदन्ति ॥३८॥ (ख)

शिवो वक्ति शिवे रामस्त्रिगुणातीत उच्यते ।
चराचरेशः सर्वान्तर्यामी सन्नपि लौकिकः ॥
दर्शयित्वा वने कामिजनाना-मतिदीनताम् ।
द्रढयामास धीराणां चित्ते वैराग्यपादपम् ॥
कोपकामौ मदो लोभो माया चेति महानयम् ।
प्रपञ्चो नश्यते रामचन्द्रस्य दयया ध्रुवम् ॥
तस्मिन् नटेऽनुकूले तु नेन्द्रजाले भ्रमेन्नरः ।
गिरिजे कथयामि त्वामहं स्वानुभवं त्विमम् ॥
सत् केवलं हरेर्भक्तिः स्वप्नतुल्यं जगत् पुनः ।
ततो रामोऽगाधपम्पासरसस्तीरमाययौ ॥
सरसस्तस्य पानीयं निर्मलं सन्मनो यथा ।
चत्वारो घटिता घट्टास्तस्मिन् सरसि सुन्दराः ॥
यत्र तत्र च पानीयं पिबन्ति विविधा मृगाः ।
याचकानां सङ्कुलत्वमुदारस्य गृहे ननु ॥

पाथोजपत्रैर्निबिडैर्निगूढं
न ज्ञायते संस्थितमत्र पाथः ।
मायानिगूढं गुणसङ्गहीनं
न ज्ञायते ब्रह्म यथा परं सत् ॥३९॥ (क)
तत्रातिगम्भीरजले वसन्तो
मीनाः समानं सुखिनः सदैव ।
सद्धर्मशीलाः पुरुषा यथैव
सुखान्विताः सङ्गमयन्त्यहानि ॥३९॥ (ख)

नानाविधानि पद्मानि तस्मिन् विकसितानि च ।
मञ्जु गुञ्जन्ति बहुधा बहवो मधुपा मुदा ॥
कलहंसा नदन्त्यत्र तथैव जलकुक्कुटाः ।
ननु सर्वे प्रभुं दृष्ट्वा तं स्तुवन्ति दयाम्बुधिम् ॥
चक्रवाक-बकादीनां खगानां दृश्यते कुलम् ।
परं वर्णयितुं नैव शक्यते सर्वमोहनम् ॥
आकारयन्ती पथिकान् पक्षिणां भासते नु वाक् ।
मुनीनामाश्रमास्तत्र पम्पाया निकटे स्थिताः ॥
परितो दिक्षु शोभन्ते विविधाः काननद्रुमाः ।
चम्पका बकुला आम्राः कदम्बाश्चातिगन्धिनः ॥
तमालाः पाटलाः पर्णाः पनसा इतरे तथा ।
नवीनैः पल्लवैर्नानागन्धिपुष्पैश्च संयुताः ॥

[ क्रमशः ]

## भारते सूर्योदयः

भाद्रमासस्य द्वादश्यां कृष्णपक्षे तथैव हि ।
स जातश्च महानात्मा मोहनो मुक्तिकारकः ॥१॥
त्यक्त्वा स्वार्थं च सर्वस्वं यो वै राष्ट्रस्य मुक्तये ।
युयुधे प्राप ध्येयं च स महात्माऽऽश्चर्यकारकः ॥२॥
प्राग् द्वाविंशतिवर्षेभ्यः स्वातन्त्र्यार्को यदोदितः ।
पारतन्त्र्यतमो नष्टं तदा भास्वरभारते ॥३॥
भारते हि यदा राज्यं पारदेश्यं प्रदुःखदम् ।
सर्वत्र शुष्कता चासीद्यथा ग्रीष्मे सरित्सु वै ॥४॥
भारतीयं च भूपृष्ठं नीरसं नीरसं खलु ।
सर्वत्रारसिकत्वं च दैवीवाचि विशेषतः ॥५॥
अहो बत ! महच्चित्रं गणराज्ये प्रशासति ।
शुष्कत्वं च हतं तुच्छं संस्कृतस्योदयः पुनः ॥६॥
स सूर्योदय आयुष्मान् कृतवान् भारते पुमान् ।
तत्समो राष्ट्रनिर्माता, न भूतो न भविष्यति ॥७॥

—श्री या० वि० देवासकरः
( वटपत्तनस्थः )

# ❀ स्वाध्याय-महिमा ❀

—सर्वतन्त्रस्वतन्त्राः पूज्य श्री अमृतवाग्भवाचार्याः—

★

तत्तद्राष्ट्रे मानवानां व्यवस्थां
शोभा - सम्पच्छालिनी - मार्यरीत्या ।
प्रेम्णा लोके स्थापयँस्तत्त्वदर्शी
श्रीस्वाध्यायः कल्पतां विश्वभूत्यै ॥ १ ॥

शान्तिप्राप्तौ स्वहृदभिमते भुक्तिमुक्ती उभे ते
वाञ्छन् दृष्टो जगति सकलो जीवलोकः स्वभावात् ।
वाञ्छापूर्तिः कथमिव भवेदन्तरा सत्प्रयत्नं
स्वाध्यायोऽयं मनसि सुतरां स्फारयेत्तं प्रयत्नम् ॥ २ ॥

राष्ट्रालोके प्रसृमररुचौ सर्वतन्त्रस्वतन्त्रे
शान्ते स्वान्ते प्रसरति गतेऽनार्यभावे विनाशम् ।
आनन्दाप्तिर्भवति नियतं वैरिवर्गे विलीने
स्वाध्यायोऽयं प्रथयति जने तत्त्वमेतत् समस्तम् ॥ ३ ॥

स्वाराध्यानां दिशति सरलं मार्गमाराधनायाः
स्वाराज्यस्य प्रथयति पथि प्रस्थितानां प्रतिष्ठाम् ।
स्वापं तापं शमयति च यो राष्ट्रियाणां समं स
स्वाध्यायोऽयं भवतु भवतां भूतये भूतलेऽस्मिन् ॥ ४ ॥

राष्ट्रे रायं रचयति रणे रंहसो रक्षणानां
प्रज्ञानाय प्रभवति पुनः प्रापितः सम्प्रदायात् ।
संसारेऽस्मिन् रूपदि सकलाः सम्पदः सम्प्रसूते
स स्वाध्यायो जयतु जगतां जागरूको जयाय ॥ ५ ॥

कृतघ्नानां दुःशासन - निपतिताना - मविदुषां
नृणामीक्षामात्रा - द्विदलयति गाढां कुधिषणाम् ।
सृतिं स्वातन्त्र्यस्य प्रसृमररुचिं स्फारयति तं
कृताय स्वाध्यायं भरत - जगती जागरयतु ॥ ६ ॥

अविद्यामुन्मील्य प्रथयति सुविद्यां जगति यः
सुखोपायाँल्लोकान् सरलसरलान् बोधयति च ।
चतुर्वर्गापेतां क्षपयति कुरीतिं सपदि तं
विहाय स्वाध्यायं जगति न सहायो विजयते ॥ ७ ॥

जिघांसाऽनाऽऽर्याणां समुदयति चित्तेष्विति मतं
समास्थाय भ्रान्त्या ननु कतिपये मूढमतयः ।
अहिंसां भाषन्ते सुरजनहितां पद्धतिमिमा-
मितीमं स्वाध्यायं सदवगमनाय स्पृहयत ॥ ८ ॥

विनीतानां वन्द्या प्रसभमविनीतैरपटुभि-
र्गृहीता दुष्टानामहह पतिता सा पदतले ।
रुदत्याक्रोशन्ती प्रतिदिनमहिंसाऽत्र भवती
सहायं स्वाध्यायं सपदि बुधसङ्गेन वृणुताम् ॥ ९ ॥

अहन्ता का का वा भवति ममता दुःखजननी
चिरं चिन्ता येषां हृदयमिय-मालम्बितवती ।
विहायाऽनाश्वासं सकृदपि गतभ्रान्तिमनसा
जनास्ते स्वाध्यायं विदधतु सहायं सुखकरम् ॥ १० ॥

रमन्ते स्वर्लोके सुकृतपरिपाकेन सुजना-
श्च्यवन्ते दुष्कृत्या झटिति नरकान्तश्च कुजनाः ।
रहस्यं कृत्यानां सकलमवगन्तुं सदसता-
ममुं श्रीस्वाध्यायं विमलगुरुभावेन भजत ॥ ११ ॥

ससारं वाऽसारं जगदवितथं वाऽस्ति वितथं
सदा येषामेवं तुदति हृदयं संशयगणः ।
भजन्तां निःशङ्कं कृतिशतसमीड्यं जगति ते
जनाः श्रीस्वाध्यायं सपदि परमं निर्णयपदम् ॥ १२ ॥

समर्घं स्यादन्नं जगति नु महर्घं तदथवा
कदैवं जिज्ञासा वसति हृदि येषां बलवती ।
कृते तेषां क्लेशप्रशमनचणं धन्यमतुलं
विहाय स्वाध्यायं न किमपि परं साधनमिह ॥ १३ ॥

समर्प्य स्वान्तं स्वं विषयरुचये वस्तुनिचयं
नरः संगृह्णानः प्रकृतिकृपणो वित्तमिव चेत् ।
अनर्हः कल्याणं कलयितुमयं चित्रमिह किं
विहाय स्वाध्यायं क इह सदुपायं कथयतु ॥ १४ ॥

स्वतो नो नेदीयान् भवति न दवीयानपि च यः
स्वयंज्योतिः स्वात्मा स्वहृदि निरपेक्षो निवसति ।
सलभ्योऽलभ्यो वा भवति गदितुं केन सुशको
विना श्रीस्वाध्यायं दलितभवभेदं बुधवराः ॥ १५ ॥

सुखं वा दुःखं वा भवति यदधीनं तदुदितं
विचाराणां जातं हृदयमिति संशीतिरहितम् ।
पवित्रीकर्तुं तत् स्वहितरचनायै समुदितं
भजन्तां स्वाध्यायं कविवृषनिषेव्यं कृतिवराः ॥ १६ ॥

चमत्कारं कश्चिद्रसयति कवेः कर्म परमं
बुधाः प्राहुः काव्यं रुचिररुचि-शब्दार्थ-कलनम् ।
अनेवं तत्कर्म व्रजति खलु नो काव्यपदवी-
मिति श्रीस्वाध्यायः प्रभवति रहस्यं गमयितुम् ॥ १७ ॥

भजन्ते ये भोगान् कृपणगतयस्ते निरयिता-
मयन्ते यान् भोगा रुचिरमतयस्ते विबुधताम् ।
प्रपद्यन्ते नारायणपदमहो योगनिपुणा-
स्तदेतत् स्वाध्यायः प्रभवति रहस्यं गमयितुम् ॥ १८ ॥

अबुद्धान् संबुद्धान् सहजमलिनान् निर्मलगुणान्
प्रकृत्या वैधेयान् करकलित-शास्त्रार्थनिकरान् ।
अशान्तान् संशान्तान् सपदि भजतः स्वं विरचय-
न्नयं श्रीस्वाध्यायो नरमखिलभद्राणि नयतु ॥ १९ ॥

स्वतन्त्राणां वार्ता अथ विविधवृत्तीः परवतां
सखीन् स्वान् साकं तैर्व्यवहरणयोग्यां बुधकलाम् ।
प्रचारं चारीणां गमयति चरणां विचरणं
स नः श्रीस्वाध्यायः प्रलयमवसादं गमयतु ॥ २० ॥

तमःस्तोमं नेतुं शममतुलमन्तर्हृदि ततं
सुधांशुर्यः साक्षान्मति - कुमुदिनी - प्राणनकरः ।
सतां सेव्यो नित्यं भवति गणनातीतमहिमा
महान् श्रीस्वाध्यायः स शमतनु तन्वन् विजयताम् ॥ २१ ॥

वैरस्यं विषयेषु वीक्ष्य परमं मोदं स्वशाकेऽमलः
प्रोद्यद्भक्तिरसः सबाष्पनयनः शक्त्या स्तुवन् शङ्करम् ।
नादं बिन्दुभवं विमृश्य कलया स्वाध्याय - नुत्याकर-
ग्रन्थो नास्ति भुवीति तस्य महिमस्तोत्रं व्यधात् स्तावकः ॥ २२ ॥

स्वाध्यायमहिमस्तोत्रमिदं स्वाध्यायकर्मणे ।
राष्ट्रभव्यायाऽर्पयते विद्वानमृतवाग्भवः ॥ २३ ॥

# महाराणा-प्रतापभूः-उदयपुरम्

—श्री व्रजवल्लभ द्विवेदो दर्शनाचार्यः—

[ व्याख्याता—योगतन्त्रविभागस्य, वा० सं० वि० वि० वाराणसी ]

औदीच्या वयम्। गुर्जरनृपतिना मूलराजेन राजधान्यां सिद्धपुरे यज्ञार्थमाहूता अस्माकं पूर्वजाः सहस्रसंख्याका उदीचीतो गुर्जरान् जग्मुः, तत्र 'सहस्रौदीच्य' इति संज्ञां भेजिरे, भूमिदानादिना सत्कृतास्तत्रैव न्यवसंश्च। "निश्शेषशास्त्रसदनं किल मध्यदेशः" ( ३७.३८ ) इत्याह स्म अभिनवगुप्त-पादाचार्यस्तन्त्रालोके। "हिमवद्विन्ध्ययोर्मध्यं यत्प्राग् विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः॥" ( २.२१ ) इति च परिभाषितो मध्यदेशो मनुना। गङ्गायमुनयोर्द्रोणी 'अन्तर्वेदि' इति नाम्ना परिचीयते। पवित्रतमेयममन्यत भूमिः कदाचन भारते वर्षे। इत एव अभिनवगुप्तस्य पूर्वजम् अत्रिगुप्तं निनाय ललितादित्यो नृपतिः कश्मीरान्, वेणीसंहारनाटककर्तुः भट्टनारायणस्य वंशजान् गौडीया नृपतयस्तत्र आहूतवन्तः। इत एव च तैस्तैर्नरपतिभिराकारिताः शैवाचार्या मालवान्, लाटान्, सौराष्ट्रान्, कर्णाटांश्च जग्मुः।

गच्छता कालेन औदीच्याश्च तदनु गुर्जराश्च अस्माकं पूर्वजा राजस्थानीयैः नरपतिभिरितो द्विशत-वर्षेभ्यः पूर्वं सादरमाहूय 'अजमेर'-मण्डलान्तर्वर्तिनि 'केकड़ी'-नाम्नि ग्रामे भूमिदानादिना सत्कृतास्तत्रैव न्यवसत्। ( अजमेर ) अजयमेरुर्हि नाम चाहमानस्य ( चौहान ) नृपतेः पृथ्वीराजस्य राजधानी। तीर्थराजपदव्या अलङ्कृतं पुष्करं नाम तीर्थमत्रैव नातिदूरं विद्यते, यत्र हि भारते वर्षे विरलतरमवशिष्टं भगवतो ब्रह्मणो देव्याः सावित्र्याश्च मन्दिरं राजतेतराम्। इतो दक्षिणस्यां दिशि वर्तते चित्रदुर्गम् ( चित्तौड़ ), उदयपुरं च महाराणा-प्रतापस्य शौर्येण वीर्येण उद्दामेन स्वातन्त्र्याभिलाषेण चाभिरक्षितम्। अत्रैव नातिदूरवर्तिनि 'हल्दीघाटी'-नाम्नि स्थाने समरः स समजायत, यत्र हि स्वातन्त्र्यवीराणां शौर्येण चकम्पिरे चेतांसि मुगलसैनिकानाम्। अत्रैव वर्तते 'नाथद्वारा' नाम वैष्णवानां वल्लभसम्प्रदायस्य प्रथिततमं तीर्थम्। 'कांकरोली'-स्थानमपि समीप एव वर्तते।

अत्र हि राजसिंहेन नृपतिना राजसमुद्रंनाम महत्सरः प्रायस्त्रिशतवर्षेभ्यः पूर्वं निर्मापितम्। यैराधुनिका बन्धा ( बांध ) दृष्टास्तैरत्रत्योऽथ च जयसमुद्रवर्ती बन्धोऽपि द्रष्टव्यः। निर्माणसमकालमेवाऽऽधुनिका बन्धाः क्षतिग्रस्ताः प्रायो भवन्ति, दृश्यतां च निर्माणसौष्ठवं दाढर्यं चानयोः प्राचीनयोर्बन्धयोः। कांकरोली-मन्दिरतः कियद्दूरं राजसमुद्रस्य तटबन्धो राजते। भव्यं प्रासादोपममेतत् स्थानं स्थापत्यकलाया निदर्शनभूतम्। अत्रैव शिलाखण्डेषु उत्कीर्णमष्टादशसर्गात्मकं राजप्रशस्ति-काव्यम्। उत्कीर्णेषूपलब्धेषु च प्राचीनेषु शिलालेखेषु बृहत्तममेतत्। राजसिंहनृपतेः विजययात्रा-वर्णनात्मकेऽस्मिन् शिलालेखे वर्तते 'केकड़ी'-स्थानस्यापि वर्णनम्। तदेतत् नगरकमस्माकं जन्मभूः।

अत्रैव निवसन्तोऽस्माकं प्रपितामहा रूपशङ्कर दवे महोदया अनुष्ठानप्रसङ्गेन 'कोटा'नगरं गतास्तत्रत्यं राजप्रासादमन्तःपुरं च भीषणाभिर्दहनज्वाला-मालाभिर्दन्दह्यमानं संरक्षन्तो नरपतिना स्वर्णकण्ठ-हारेण कनकखचितया कृपाणिकया च सत्कृताः।

साम्प्रतं गोवर्धनपीठाधीश्वराणां गृहस्थाश्रमे श्री चन्द्रशेखरशास्त्रिणां मातामहा अस्माकं च पितामहा रघुनाथ दवे महोदया अजयमेरुस्थे राजकुमाराणां महाविद्यालये 'मेयो कालेज'-इत्याख्ये छात्रावास-निरीक्षकत्वं धर्मशास्त्राध्यापकपदवीं चालङ्कुर्वन्तः स्वदार्ढ्येनारक्षन् तत्रत्याधिकारिभिर्विदेशीयैर्नाश्यमानं शिवमन्दिरं तत्रत्यम्। तदेतस्या जन्मभूमेर्दर्शनाय पर्यगामहं सपरिवारं ग्रीष्मावकाशे। कतिचिद्दिनानि च तत्रोषित्वा उदयपुर-नगरावलोकन-मनीषया वयं तत्र गताः।

दिल्ली-अहमदाबादलौहयानमार्गे वर्तते अजयमेरु-( अजमेर ) नगरम्। अजयमेरु-नगरतोऽपरो लौहयानमार्गः प्रचलति मालवजनपदान् खण्डवास्थानकं यावत्। अत्रैव समायाति चित्रदुर्गम् ( चित्तौड़ )। चित्रदुर्गतः पुनरपरो मार्गः प्रवहति उदयपुरं प्रति। साम्प्रतम् अहमदाबादनगरतोऽपि समायाति लौहयानम् उदयपुरं यावत्। उदयपुरं हि नाम स्वातन्त्र्य-वीराणां मेवाड़नृपतीनां विशेषेण स्वनामधन्यस्य राणाप्रतापस्य राजधानी। वर्ततेऽत्रैव फतहसागरं निकषा 'मोतीमगरी' इत्याख्ये शैलशिखरे प्रतापस्य वसतिगृहम्। कदाचन शुष्कप्रायं शैलशिखरमेतत् सम्पूर्णं साम्प्रतं हरितशाद्वलाभिर्वृक्षततिभिस्तृणावलीभिर्धारायन्त्रैश्च शोभितेन कृत्रिमारामेण राजितं कामप्यनिर्वचनीयां सुषमां बिभर्ति। अत्र पर्वतशिखरे नवस्थापिता चेतकारूढस्य महाराणाप्रतापस्य विशाला प्रतिमा प्रतिष्ठापयति दर्शकानां हृदयेषु स्वातन्त्र्यगौरवम्। इतः सम्पूर्णमुदयपुरं तारकितं नभ इव तथैव दृश्यते, यथा हि मलाबारपर्वताधित्यकायां स्थितेनोद्यानेन ( हेंगिंग गार्डन ) विद्युद्दीपकैरालोकिता मुम्बापुरी ( बंबई )।

पर्वतोपत्यकासु शीतलजललहरीः प्रवाहयद्

## उदयपुरस्य भौगोलिकं चित्रम्

राजस्थानप्रदेशस्य प्रसिद्धतममेतद् राज्यम्। अस्य उत्तरे अजयमेरुः ( अजमेर ), मेरवाडा च वर्तते। पूर्वस्मिन् बूँदी, कोटा, नीमचमण्डलम्, टोंकराज्यस्य निम्बहरामण्डलम् प्रतापगढराज्यञ्च। दक्षिणे बाँसवाडा, डूंगरपुरम्, प्रतापगढराज्यम्। दक्षिण-पश्चिमभागे गुर्जरप्रदेशे महिकण्ठाराज्यं पश्चिमे च अरावलीपर्वतश्रेण्यो वर्तन्ते, याः किल मारवाड-सिरोहीराज्याभ्यामसुं पृथक् कुर्वन्ति। राज्यस्य सर्वाधिकी दीर्घता पूर्वतः पश्चिमं यावत् १६३ मीलमिता क्षेत्रफलञ्च १२६७० वर्गमीलमितं वर्तते।

सरोवराणां जलाशयानाञ्च नगरमेतत्। बृहत्तराणि समुद्रकल्पानि लघुसराणि च प्रायोऽत्र पदे पदे दृश्यन्ते। सर्वोत्तमं सर्वतो बृहच्च सरोवरं 'ढेबरा'-परनामकः जयसमुद्रः। ततः परं राजसमुद्रः, उदयसागरश्च। जयसमुद्रो नगरतः प्रायः १० क्रोशे दक्षिण-पूर्वभागे वर्तते। भूमौ निर्मितेषु जलाशयेषु सर्वेषु जलाशयेषु कदाचित् सर्वतो बृहत् जलाशयः। प्रायोऽयं सार्धचतुष्टयक्रोशदीर्घ, सार्धद्वयक्रोशमित आयतः, २१ वर्गमीलमितप्रदेशे प्रसृतः प्रवहति। अस्य सुदृढो बन्धः १००० फुटमितो दीर्घः, ९५ फुटमित उच्चश्चास्ते। राजसमुद्रजलाशयः सार्धक्रोशमितो दीर्घः, सार्धमीलमित आयतः राजधानीतः सार्धद्वादशक्रोशोत्तरे भागे कांकरोली निकषा वर्तते।

वर्तते फतहसागरम् । फतेहसागरस्य मध्ये द्वीपीभूतायां धरायां महीशूर ( मैसूर )-नगरस्थ-वृन्दावनोद्यानमिवापरं नूतनमुद्यानं चित्रविचित्रविद्युत्प्रकाशपुञ्जखचित - विविधाकृतिधारायन्त्रराजितमवलोक्यते । नौयानेनात्र गम्यते । वृन्दावनोद्यानसदृशं बृहद्धारायन्त्रमपि निर्माणाधीनमत्र फतेहसागरस्य मध्ये । फतेहसागरस्यान्तिमे भागे पर्वतभागाभावात्तद्रक्षायै संरचितस्य तटबन्धस्याधोभागे विराजते प्राचीनमुद्यानं 'सहेलियों की बाड़ी' इत्याख्यं नानाफलाभिस्तरुततिभिः धारायन्त्रैश्च शोभमानम् । उद्यानमध्यवर्तिनि प्रासादे तत्परितश्च निर्मितानि धारायन्त्राणि विविधाकृतीनि नृपतीनां तेषां कलाप्रेम शिल्पिनां निर्माणसौष्ठवं च प्रकटयन्ति । नानुभूयेतात्र निवसद्भिः प्रचण्डेषु निदाघदिवसेष्वपि रवितापः ।

उदयपुरं नाम सरोवराणां नगरमभिधीयते । सर्वप्रथममत्र वर्तते 'दूधतलैया' इत्याख्यं लघुसरः । ततः परं प्रवर्तते 'पीछोला' इति नाम्ना प्रथिततमं सरोवरम् । अस्य सरोवरस्य मध्ये 'जगमन्दिर-जगनिवास' इत्याख्यौ प्रासादौ राजेते । साम्प्रतं जगमन्दिर-प्रासादो यात्रिणामावासत्वेन (होटल) परिणामितः । अत्रापि नौयानेन गम्यते । 'पीछोला'-सरोवरस्य दक्षिणे तटे वर्तते राजप्रासादः । पूर्वमत्रासीद् महार्घ्याणां वस्तूनां महान् संग्रहः । अत्रैव वर्तते 'शीशमहल' इत्याख्यः कक्षः, यत्रैकस्या व्यक्तेः शतशः प्रतिबिम्बाः पतन्ति भित्तिसंलग्नेषु दर्पणखण्डेषु । पादतले शीर्षभागे च जटितेषु दर्पणखण्डेषु प्रतिबिम्बिता रमण्यो वस्त्रप्रावृता अपि स्वात्मानमत्र नग्नप्रायामेव अवलोकयेयुरसावधाना यदि स्युः । अत एवात्र कक्षे न प्रविशन्ति पुरुषैः सह रमण्यः । 'पीछोला'-सरस उत्तरे तटे 'जगमन्दिर'-प्रासादसमक्षं वर्तते नृपतीनां मृगयास्थलं 'टेकरी' इत्याख्यम् । इतः प्रत्यहं पुरा वनसूकरेभ्योऽन्नं प्रविकीर्यते स्म, सदन्तानां भीषणानां सूकराणां चाखेटो राजपुत्रैः कुन्तायुधेन क्रियते स्म ।

राजप्रासादस्य दक्षिणे भागे ब्रह्मपुरीं निकषा वर्तते 'गुलाबबाग' इत्याख्यं बृहदुद्यानम् । वनस्पत्युद्यानमेतन्नो यद्यपि कलिकातास्थ-वनस्पत्युद्यानवद्विशालतमम्, तथाप्यस्य नानाविधानां फलतरूणां समृद्ध्या किमपि वैशिष्ट्यं विराजते । एतदेवोद्यानं वर्तते नानाजातीनां पशूनां पक्षिणां च निवासभूः । अस्यैव मध्यभागे विद्यते सरस्वतीभवनं नाम पुस्तकालयभवनम् । पूर्वमत्र हस्तलिखित-ग्रन्थानां संग्रहोऽप्यवर्तत । साम्प्रतं स संग्रहो राजप्रासादस्यैकस्मिन् भागे स्थापितः, जोधपुरस्थ-राजस्थान-पुरातत्त्वमन्दिरस्याङ्गतां नीतश्च । ग्रन्थानामेषां सूची प्रकाशिता वर्तते । गृहीतावकाशतयाऽधिकारिणोऽत्रत्यस्य मया ग्रन्था नैव द्रष्टुमशक्यन्त ।

चित्रदुर्गं निकषाऽऽसीत् प्राचीना मध्यमिका नाम नगरी । अत्रैव साम्प्रतिके 'घोसुण्डी'-ग्रामे समुपलब्धे विष्णुवाटिका-शिलालेखे दृश्येते वासुदेव-संकर्षणयोर्नामनी । आसीत् स्थलमेतत् कदाचन वैष्णवमतस्य प्रचारभूः । अपरतश्च उदयपुर-नाथद्वारामार्गे वर्तते कैलाशपुरी, यत्र भगवत एकलिङ्गस्य मन्दिरं राजते । एतच्च लकुलीश-पाशुपत-सम्प्रदायानुयायिना हारीतेन मुनिना तच्छिष्येण 'बाप्पा रावल' इत्याख्येन च मेवाड़ाधिपतिनाऽष्टम्यां शताब्दौ स्थापितमिति श्रूयते । एवं चात्र पाञ्चरात्रानुयायिनां भागवतानां पाशुपतानां च लाकुलीशानां ग्रन्था उपलब्धा भवेयुरित्ययं विश्वासोऽस्माकं न फलितोऽस्य सरस्वतीभवन-पुस्तकालयस्य मुद्रितसूची - ग्रन्थावलोकनेन । केवलमत्र सिद्धान्तशैवागमीया 'वरुणपद्धतिर्' वर्तते विशिष्टग्रन्थेषु ।

उदयपुर एव वर्तते राजस्थान विद्यापीठान्तर्वर्ति साहित्य-संस्थानम् । अत्रापि संस्कृतस्य हस्तलिखिता ग्रन्थाः संगृहीताः सन्तीति श्रुत्वा तदवलोकनाय गतवानहम् । तत्र च व्यवस्थापकमन्त्रिणां श्रीमताम् उमाशङ्कर शुक्ल महोदयानां साहाय्येन दृष्टास्तत्रत्याः संस्कृतग्रन्थानां पाण्डुलिपयः । अत्र वर्तन्ते वैखानस-संहिता - नारदीयसंहिता-विश्वामित्रसंहिता-प्रभृतयो भागवतसम्प्रदायस्य, रामकण्ठीया मदङ्गवृत्तिः, त्रिलोचनशिवाचार्यस्य सिद्धान्तसारावली, मतङ्ग-पारमेश्वर-अजितागम-सूक्ष्मागम-उत्तरकामिकागम-कारणागम-प्रभृतयश्च सिद्धान्तशैवागमस्य ग्रन्थाः । भट्टोजिदीक्षितेन तन्त्राधिकारिनिर्णये स्मृतो नृसिहारण्यस्य 'विष्णुभक्तिचन्द्रोदय' नामा ग्रन्थस्तु उभयोरपि ग्रन्थालययोर्वर्तते । परं हन्त ! नकुलीशपाशुपत सम्प्रदायग्रन्था नोपलब्धाः कुत्राप्यस्माभिः ।

'केकड़ो'-निवासी बालसखाऽस्माकं पण्डित श्री मदनमोहनो व्यासः केनचिद् गार्हस्थ्यकार्येण समागत उदयपुरम् । सहैव आवामगच्छाव व्याकरण-शास्त्रिणां श्रीमतां पण्डित बिहारीलालशर्मणां गृहान् । एकलिङ्गस्य भगवतो विशेषतो भगवत्यास्त्रिपुर-सुन्दर्याश्चोपासका एते उदयपुरस्था विशिष्टा विद्वांसो व्याकरण-ज्यौतिष-तन्त्रशास्त्राणाम् । लेखने व्यापृता एते विद्यन्ते साम्प्रतं 'त्रिपुरसुन्दरी-सपर्या-पद्धति'ग्रन्थस्याऽभिनवस्य । नात्राप्यस्माभिः पाशुपतागमविषयिणी काचन विशिष्टा सूचनाऽधिगता । ततः परमावां कैलाशपुरीं प्रति भगवंत एकलिङ्गस्य दर्शनार्थं गतवन्तौ । परमत्रत्यापि सामग्री मेवाड़-राजगुरवो भगवत एकलिङ्गस्य प्रधानार्चकाश्च बदरीकेदारयात्राप्रवासिन आसन्निति हेतोर्नैव दृष्टिपथमायाता । यथापि तस्मिन्नेव मन्दिरे स्थापितस्य महात्मनो लकुलीशस्य प्राचीनस्य विग्रहस्य दर्शनेन पावित आत्मा ।

साहित्यसंस्थानस्य दक्षिणपार्श्वे वर्तते उदयपुर-नगरनिगमभवनम् । अत्र शिशूनामाक्रीडनकं विद्यते निर्मितम् । मध्यभागे शोभते लघुसरः । अत्र बालका लघुना नौयानेन जलविहारानन्दमनुभवन्ति । परितो लघुसरो वर्तते गमनागमनिका-मार्गः ।

अत्र प्रचलद् अजायानं न केवलं शिशूनां बालकानाम्, अपि तु यूनां वृद्धानां चाप्याश्चर्योन्मीलितं मनोऽनुरञ्जयति । चत्वारो बालका अत्र समुपविशन्ति । तच्च स्थूलकायोऽजापुत्रः शिक्षितो धीरगभीरया गत्या वाहयति । अजापुत्राणां नूतनः कोऽप्युदन्तोऽत्र उन्मीलयते ।

अस्मिन् बालोद्यानेऽपि वर्तन्ते नानाविधानि धारायन्त्राणि । न केवलमत्र, 'सूरजपोल' इत्याख्यस्य पूर्वतनस्य नगरप्रवेशद्वारस्य बहिर्भागेऽपि वर्तन्ते धारायन्त्राणि विद्युदालोकेन प्रकाशितानि । अत्र हि विद्युदालोकेषु प्रतिफलिता जलधारा दीपावलीदिनेषु बालकैः प्रज्वालितानां हुताशन-धारोत्पादकानां क्रीडनकानां भ्रममिवोत्पादयन्ति । अपरमप्यत्र निर्मीयते बृहद्धारायन्त्रं 'सुखाड़िया सर्किल' इत्याख्ये चतुष्पथे । एवं च साम्प्रतिकमुदयपुरं सरोवराणां धारायन्त्राणां च नगरमित्युक्तिस्तथ्यानुगुणैव ।

'जावरा'-खनिप्रदेश उदयपुरतो नातिदूरं विद्यते । अत्र त्रपुषः, सीसकस्य, रजतस्य च खनयः सन्ति । उदयपुरं निकषा वर्तते बृहती कर्मशाला प्रायो दशकोटि-मुद्राव्ययेन साम्प्रतमेव निर्मिता, यत्र धातूनामेतेषां शोधनकर्म प्रचलति । भारते वर्षे प्रमुखमेतद् रजतोत्पादनकेन्द्रम् । एवं च शूरवीराणां स्वातन्त्र्यसैनिकानां खनिरेषा भूमिः साम्प्रतिके औद्योगिकेऽपि जगति किमपि स्वकीयं वैशिष्ट्यं गौरवं च ख्यापयन्ती राजते ।

## शारदीय-नवरात्र-महोत्सव-महायज्ञ-समारोहः

❀

वाराणसी। विगताश्विनशुक्ल-प्रतिपत्तिथितः ( दिना १२-१०-'६९ दिनाङ्कतः ) नवमीं ( २०-१०-'६९ दिनाङ्के ) [या]वत् श्री भारतधर्ममहामण्डलस्य श्री गायत्रीमन्दिरे शारदीयनवरात्र-महोत्सवः प्रतिवर्षानुसारं महता समारोहेण [स]म्पन्नः। तदन्तर्गतः श्री चण्डीमहायज्ञश्च महताऽऽटोपेण समाचरितोऽभूत्। काशिकविशिष्टविद्वद्भिः भगवत्याः [परा]म्बायाः प्रीतये विश्वकल्याणाय च चण्डी पाठो यज्ञादिश्च सम्पादितः। प्रतिदिनं भगवत्याः पराम्बायाः [श्र]ी गायत्रीदेव्याः महाश्रृङ्गारः कथा-कीर्तनादिकं च जायते स्म। नवम्यां महायज्ञस्य पूर्णाहुतिर्महत्या श्रद्धाभक्त्या [वि]धिविधानानुसारं समजायत। ततो ब्राह्मणानां सम्भावनम्, भोजनम्, प्रसादवितरणादिकञ्च सर्वं साङ्गताकृत्यं [स]म्पन्नम्। सर्वमिदं श्रद्धामूर्तीनां श्री विद्यादेवी महोदयानां संरक्षकत्वे साधु पूर्णतामगात्।

●

---

## अनुक्रमः

●



●

पञ्जीकृत-संख्या—एल० १८९७

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराणसी।

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—[illegible] वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य
मासिकं मुखपत्रम्





वर्षम् ४५



अङ्कः ११



सम्पादकः
गो० न० वैजापुरकरः



नवम्बर
१९६९



वार्षिक-मूल्यम्
५) रूप्यकाणि



प्रत्यङ्क-मूल्यम्
अर्धरूप्यकम्



## चल, कालिन्दी-कूलम् !



हे सखि चल कालिन्दी-कूलम् !
कुसुमितहरितलतासु चन्द्रिका विलसति यत्र सलीलम् ॥

२.

यत्र रहसि वादयति मुरलिकामतिमधुरं वनमाली।
यस्या नादो वृन्दाविपिनं मदयति नवरसशाली ॥

३.

वेणुरवः श्रुतिविवरं प्रविशति चित्तं नन्दकिशोरः।
नैव रोचते परिजनभवनं न सुखं न हि परिवारः ॥

४.

पीतवसन - वरबर्हविभूषित - मोहनमुख - माधुर्यम् ।
हा पास्यामि कदा नयनाभ्यां तृषा विकलयति कायम् ॥

—डॉ० शिवशरण शर्मा

## श्री गुरुनानकदेव पादेभ्यः श्रद्धाञ्जलिः

अचिरादेव अखिलेन भारतेन शिष्य ( सिख )-सम्प्रदाय-प्रवर्तकाचार्याणां श्री गुरुनानकदेव पादानां पञ्चशती-समारोहो महता समारोहेण समायोजितः। गुरुपादैरेभिः परकीयधर्माक्रमणेन देशस्य सर्वथा संस्कृतिनाशक्षणे यावत्प्रयतितम्, हिन्दूवैदिकधर्मश्च यथा पुनरक्षुण्णतां नीतस्तदर्थं सर्वोऽपि भारतीयस्तेषां चरणयोर्नतमस्तको नूनं स्यात्। वयमपि सप्रश्रयं तेषां चरणयोः सादरं श्रद्धाञ्जलिं समर्पयामः।—सम्पादकः

●

---

## अनुक्रमः

●

| प्रपानकम् | पत्रपुटम् | परिवेषकः |
|---|---|---|


●

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षे ] वाराणसी, कार्तिकः २०२६ : नवम्बर १९६९ ई० [ ११ अङ्कः


## जयति कालिदासः कविः

तुषारगिरिशेखर - स्रवदमन्दमन्दाकिनी - प्रवाहरसमाधुरी - सहजमाधुरीतिस्पृशः ।
गिरः सहृदयाशयं सुरभयन्ति यस्याऽनिशं स भारतशिरोमणिर्जयति कालिदासः कविः ॥ १ ॥

क्वणत्कनकनूपुरोच्चलित-चारुसिद्धाङ्गनाकदम्बक-समन्विता तुहिनशैलमालान्तरे ।
यदीयकवितानटी त्रिदशवृन्दनेत्रोत्सवं विवर्धयति कौतुकात् स खलु कालिदासः कृती ॥ २ ॥

प्रसन्नशशिशेखरार्पितशशाङ्कलेखारसैः प्रसूनशरचेतनामभिनवां विनिर्माय किम् ।
व्यधाद् भुवि शकुन्तलां भुवनलोभनीयामसौ कवीन्द्रकुलवन्दितो जयति कालिदासः सुधीः ॥ ३ ॥

असह्यविरहव्यथाविकल-यक्षरक्षाविधौ विधौतहृदयो दयोपनत-दूतभावोऽम्बुदः ।
कुबेरनगरीमगाद् यदुदितेन दीर्घाध्वना स कारुणिकशेखरो लसति कालिदासः कृती ॥ ४ ॥

यदि वहसि पिपासां काव्यपीयूषपाने मति-मुकुरमलानां मार्जनं चेन्मतं ते ।
निरुपम-निगमार्थोन्मेषचन्द्रातपश्री-विलसितमधुमासः सेव्यतां कालिदासः ॥ ५ ॥

—कविवराः श्री बटुकनाथशास्त्रि खिस्ते महोदयाः—

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

## —स्वर्गीयाः श्रीविन्ध्येश्वरीप्रसाद शास्त्रिणः—

तपस्विनश्चापि महायशस्विनो महात्मनस्तस्य वरस्य योगिनः ।
वचस्तु कल्याणकरं मनोहरं स दूरदर्शी गुरुरभ्युपागमत् ॥ २१ ॥

२२. प्रतिष्ठितेरत्र महोत्सवे शुभे
यतीश्वरोऽर्वाक् सह विद्भिराययौ ।
पराम्बसंस्थापन - हेतुकोऽखिलो
विभिन्नसंभारचयोऽपि चाऽऽगमत् ॥

२३. विशालभूमौ लसितेऽत्र राधिका-
समाह्वयोद्यानवतीद्ध - मन्दिरे ।
श्रुतेर्विदः काशिक-वङ्ग-मैथिल-
प्रसिद्ध-काश्मीरपुरेभ्य आगमन् ॥

२४. पराम्बिकेयं कतरद्-विधानतो
विराजिता दक्षिण-वामयोर्भवेत् ।
स केशवानन्दमुने - र्महात्मनो
बभूव वामो विधिरेव सम्मतः ॥

२५. विपश्चितो ये निगमागमेषु सत्-
प्रसिद्धिमाप्ता वरकर्मकाण्डिनः ।
समागतास्ते यजमानमानसो-
द्गतं मतं तत् परितोऽन्वमोदयन् ॥

२६. जगज्जनन्याः प्रतिमाप्रतिष्ठिति-
र्ध्रुवं हि सा वामपथानुसारिणी ।
विनिश्चिता श्वो भविता शुभे दिने
समागतै - रन्यजनै - र्बुधैरपि ॥

२७. ततस्तु पूर्वेद्युरनेन योगिना
प्रणष्ट - सर्वेन्द्रिय - बाह्यवृत्तिना ।
प्रशान्त - सांसारिक - सर्वकमकं
निशीथमासाद्य समाधिभृद्धृदि ॥

२८. समीक्षिता काचिदतीव सुन्दरी
प्रसारयन्ती निजतेजसन्ततिम् ।
चतुर्भुजैः पाशवराभयाङ्कुशान्
सुबिभ्रती कान्तिमती शुचिस्मिता ॥

२९. उवाच योगी वद मातरम्बिके
निजं निदेशं तव सेवकोऽस्म्यहम् ।
तवाज्ञयाऽस्मिन् विचरामि भूतले
यथा निदिष्टोऽस्मि तथा करोमि च ॥

निवेदिता साऽखिल-लोकसुन्दरी जगाद हे पुत्र शृणोतु मद्वचः ।
इदं हि वृन्दावनधाम मामकं समादृतं वैष्णवनामतश्चिरात् ॥ ३० ॥

( क्रमशः )

# हिन्दू-विश्वविद्यालय-विषये किञ्चित्

मासस्यास्य प्रारम्भे महामनसां मदनमोहन मालवीय महाभागानां हिन्दूविश्वविद्यालयस्य उपकुलपतिपद-कण्टककिरीटं तत्रभवद्भिः केन्द्रीय-शिक्षामन्त्रिचरैः श्री कालूराम श्रीमालीमहाभागैः महता साहसेन स्वात्मनः शिरसि समलङ्कृतम्। अवसरेऽस्मिन् वयं तेषां हार्दिकं स्वागतं व्याहरन्तो भगवन्तम् अन्नपूर्णाजानिं विश्वनाथं प्रार्थयामहे यत्ते अद्यावधि सर्माजितं साफल्यं पदस्यास्य सुनियोजितनिर्वहणमुखेन परां कोटिं नेतुं पारयन्त्विति। नूनं विश्वविद्यालयस्यास्य उपकुलपतिपदमेतादृशमेव, यस्य कण्टकैर्विद्धा महामनीषिणो श्री रामस्वामि अय्यर-अमरचन्द्र जोशीप्रभृतयोऽचिरादेव तत्किरीटमुत्तार्य दूरं गताः। वी० एन० झा महाभागा पुनरेके कण्टकानामेतेषां शोधनाय दृढया धृत्या स्थिताः। तदात्वे केन्द्रीयशिक्षामन्त्रिपदमलङ्कुर्वद्भिरेभिरेव श्रीमाली महोदयैस्तेषां कण्टकशोधनकर्मणि नैतिकं बलं प्रदत्तमासीत्। इदानीं कण्टकशोधनस्यायं भारः साक्षात्तेषामेव उपरि विन्यस्तो भारतशासनेन। आशास्महे च स्वीयया दृढनिष्ठया तटस्थवृत्त्या शासकपदीन-नैकविध-दीर्घानुभवेन पदस्यास्य नियतं समग्रमवधिं समधिवाहयन्त एते विश्वविद्यालयममुं परिष्कृताम् उर्वरितां विचक्षणप्रसूं क्षेत्रभूमिं विधास्यन्तीति।

एते किलाऽस्यैव विश्वविद्यालयस्य स्नातकाः, महामनसां मालवीय महाभागानां शासनेन साक्षादनुशासिताः महात्मनस्तस्य हार्दस्य प्रत्यक्षं द्रष्टारः सन्ति। महामनसा तेन महात्मना यदर्थमयं नूत्नो विश्वविद्यालयो महता शारीरिकश्रमेण जनता-जनार्दनतोऽर्थसञ्चयेन चिरं माधुकरीं वृत्तिमवलम्बता संस्थापितः, स उद्देश्योऽद्यापि इह पत्रलिखितः परत्र च तेषामन्तःपटलाङ्कितश्चैव आस्ते। दौर्भाग्यादद्यापि स कार्यरूपतां न परिणत इति महत्खेदास्पदम्। जानन्त्येव जना यदर्थसंग्रहकाले महामनसा तेन सार्वजनिकरूपेण संघुष्टमासीत् यद् 'अनेन विश्वविद्यालयेन तादृशाः स्नातका निर्मास्यन्ते ये प्राच्य-पाश्चात्त्य-विद्याविशारदास्तासां तुलनात्मकेनाध्ययनेन विश्वस्य पुरतः प्राचीन-भारतीय-संस्कृतेर्बहुमूल्यं दायं प्रस्तोतयिष्यन्ति। दशसहस्रमिताश्च स्नातकाः प्रत्यूषे भगवतो दिनमणेरर्घ्यदानाय समवेताः कामपि सुषमां प्राचीन-स्वर्णिमभारतस्य प्रसारयिष्यन्ति, येन निखिले विश्वस्मिन् शान्ति-सौमनस्यस्य साम्राज्यं प्रतितिष्ठति। एतादृशानां स्नातकानामुदरे जीर्णमन्नं समर्पयन्तः कियन्तो धन्याः स्युरिति कल्पनातीतं वस्तु। अतः स्व-शक्तिमनतिक्रम्य प्रत्येकेन भारतीयेन धन-जन-बुद्ध्यादिसाहाय्येन समनुग्राह्योऽयं नूत्नो विश्वविद्यालय' इति। परीक्षका एव विचारयन्तु किमयं महामनस उद्देश्यो विश्वविद्यालयेनाद्य प्रायो दशकपञ्चकाभ्यन्तरेऽपि पूर्णतां नीतः ?

सत्यमेतद्, अनेन विश्वविद्यालयेन पाश्चात्त्य-शिक्षाविधौ वैज्ञानिकज्ञानधारासु च नैकाः स्नातका उपायनीकृताः। तथैव नैकैस्तुलनात्मकमध्ययनं कृत्वा बहूनि प्राच्य-प्रतीच्य-ज्ञानरत्नानि विश्वस्य पुरतः प्रस्तोतितानि। इत्थं विज्ञानक्षेत्रे समुल्लेख्याऽस्य प्रगतिरतीते वर्तमाने च वक्तुं शक्यते। परं महामनसस्तद् भारतीयसंस्कृतिसमुन्नयनस्य उद्दिष्टं प्रायोऽनेन विश्वविद्यालयेन विस्मृतमिव। केवलं भौतिकविज्ञानस्पर्द्धायामेव सर्वं बलं संयोजितम्। भारतीय-संस्कृति-समुन्नायकं ज्ञानं नाममात्रेण

मुमूर्षुदशागतमिव परिचालितम्, अद्यापि तथैव परिचाल्यते च। अस्य फलमपि स्पष्टमेव। विज्ञानं सर्वथा समुपयोगि सदपि अध्यात्मेनाऽनियन्त्रितं विनाशैव कल्पतेति मतिमतां सुनिर्धारितः सर्वतन्त्रसिद्धान्तः, तथैव चानुभवः। अध्यात्ममन्तरा को नाम साम्प्रतिकीं सर्वघस्मरीं आणविकीं शक्तिं नियन्त्रयितुं प्रभुः ? विश्वविद्यालयेनाप्यनेन केवलं भौतिकतामालिङ्गता अतीताभिर्नैकाभिरनपेक्षितघटनाभिरस्य फलं समुपभुक्तं यासां कथाऽपि अश्रेयसे अलम्।

महामनसा तेन महात्मना अध्यात्मधारासंवर्धनाय विशालतमो विश्वविद्यालयान्तर्गतः संस्कृतमहाविद्यालयः स्थापितः। भगवतो विश्वनाथस्य मन्दिरनिर्माणाय धनपतिः श्री युगलकिशोर बिरला समुत्साहितः। प्रतिरविवासरे गीताप्रवचनञ्च सर्वेषां छात्राणामध्यापकानां कृते समायोजितम्। सर्वमेतदद्यापि प्रचलति, केवलं कर्मकाण्डरूपेण कतिपयैर्निष्ठावद्भिस्तत् परिचाल्यते। परं तत्र प्राणपदं तत्त्वं न दृश्यते। न च तत्र सर्वेषां विश्वविद्यालयीनां तादृश उत्साह आदरभावो वाऽवगम्यते। सौभाग्यमेतद् यन्नवोपकुलपतीनां श्रीमाली महाभागानां प्रथमे गीताप्रवचने तादृशस्य समपेक्षितस्य उत्साहस्य कियानंशो दृष्टिगोचरतामुपगतः। स्वयमेव तैस्तदा प्रवचनं कृतम्, भाषितञ्च यद् 'गीताप्रवचनेऽस्मिन् मे शिक्षणकालत एव निर्विशेषा अभिरुचिरस्ति। गीता कमपि प्रश्नमनुत्तरणीयमपि मननेन समुत्तारयतीति मदीयोऽनुभवः। ग्रन्थोऽयं धर्म-पन्थ-जातिनिरपेक्षः। विश्वविद्यालयेनापि यद्ययं मनसि क्रियेत तथा नूनं तेषां सर्वे प्रश्नाः समाहिता भवेयुः। छात्राणामध्यापकानां च विशालपरिवारस्य शासनादेशात्सुम्पन्नो गृहपतिरहं तत्रभवद्भ्य इदमेव कामये' इति।

उपकुलपतिमहाभागः प्राविधिक शिक्षानिकायद्वारा समायोजिते स्वीये स्वागतसमारोहे पुनरपरं महत्त्वपूर्णं भारतीय-संस्कृत्यनुगृहीतं तत्त्वं प्रकटीकृतम्। तैरुक्तम्—'प्राविधिकशिक्षणेन सह मानविकी-शिक्षणस्याप्यद्य नितान्तमावश्यकता वर्तते। तदन्तरा विश्वमद्य अनाथ इव संवृत्तं भौतिकताभौमासुरेण। पञ्चपञ्चाशद्वर्षतः पूर्वमेवामुं सन्देशं सूचयद्भिः क्रान्तदर्शिभिः महामनसैः मालवीय महाभागैरत्र तस्या मानविकीशिक्षायाः समुचिता व्यवस्था कृता। तदुद्धरणेन सहैव प्राविधिकीशिक्षामपि सहस्रशाखिनीं कृत्वा वयं विश्वविद्यालयीया विश्वमङ्गलाय बद्धपरिकरा भवेम' इति।

श्रीमाली महोदयानां विचारैरेभिस्तटस्थानां भारतीय-संस्कृति-समुन्नयनप्रणयिनां नूनं तोषो भवेत्। प्रत्यक्षं साक्षात्काराभावेऽपि वयमपि तेषामेतैर्विचारैः अपेक्षाकृतसमाश्वस्तास्तान् मनसाऽभिनन्दयामः। परमद्य समग्रेऽस्मिन् विश्वविद्यालये एव किम्, समग्रे वाराणसीनगरे, किं बहुना, निखिलभारतीय-विश्वविद्यालयेष्वपि यानि यानि महान्त्यस्य विचारस्य परिपन्थीनि तत्त्वानि प्रसृतानि सन्ति, तानि दर्शंदर्शं चेतः सङ्कुचितमिव जायते। अन्तरात्मा सन्दिहीते यदस्मिन् कज्जलाप्लुते भवने प्रविष्टः कियानपि स्वच्छतरो जनः कथं नाम कज्जललेशासंसक्तो बहिर्निगच्छेदिति ?

शिक्षैव कस्यापि राष्ट्रस्य सर्वोत्कृष्टसमुन्नतेर्निदानम्। भारतराष्ट्रस्य कृते त्विदं कथमपि नानुपेक्ष्यम्। यतो हि अतीते अनेनैव महाराष्ट्रेण जगद्गुरुत्वमासादितम्। ज्ञानस्यास्य नैकासु खनिषु काशी सर्वातिशायिनी। भूतकाले स्वात्मनः स्थितिरियमनया नगर्या महता साफल्येन निर्व्यूढा। अत एव महामनसा मालवीय महाभागेनात्रैव भारतीयसंस्कृतेर्युगानुरूप-सर्वाङ्गीणपरिपोषाय काशी-हिन्दू-

विश्वविद्यालयोऽयं संस्थापितः। ततः परं क्रमशोऽत्र विश्वविद्यालयत्रयं संस्थापितं प्रचलच्चास्ते। द्वयं तत्र केन्द्रियम्, तृतीयं पुनः प्रादेशिकमास्ते शासनदृष्ट्या, यद्यपि तेन स्वात्मनो रूपमन्ताराष्ट्रिय-मुद्घुष्यते। सत्यप्येवं शिक्षासमुन्नतिविषये चारित्रिकाऽऽध्यात्मिक-समुत्कर्षविषये त्रिभिरपि विश्वविद्यालयैरद्य कियान् दायः कथं वा दीयते, तत् तटस्थानां न तिरोहितम्। वस्तुतो राष्ट्रमूर्धन्यानामेतेषां विश्वविद्यालयानां साम्प्रतिकी रीतिनीती दृष्ट्वा चेखिद्यते चेतो विचक्षणानां मध्यस्थानाम्।

वाराणसेय-संस्कृत-विश्वविद्यालयः काशिक-राजकीय-संस्कृत-महाविद्यालयस्य पदमासाद्य द्वादशवर्षेभ्यः प्रचलति। विचारितं तत्संस्थापकैर्यदयं महाविद्यालयस्यातीतस्य कार्यं शत-सहस्रशाखा-सम्पन्नं विधास्यतीति। परं तथ्यमन्यदेव दृष्टिपथं समायाति। महाविद्यालयेन यादृशाः स्नातकाः प्रस्तुतास्ते प्रातिस्विकरूपेण साम्प्रतिकविश्वविद्यालयस्य उपकुलपतिपदमपि साफल्येन वोढुं समर्था आसन्। परमद्य तु प्रायो जायमानः स्नातकः पूर्वतनीयमहाविद्यालयस्य प्राथमिकीं माध्यमिकीं वा कक्षामपि नातिशेते। घोरतमा दुर्विनीतता, बाह्याडम्बरमात्रोपास्तिः, सर्वसाधारण-साम्प्रतिक-विश्वविद्यालयीय-नैकविध-दोषानामनुकरणम्, एवमादयो नैकेऽनपेक्षिता दोषास्तदीयछात्रेषु दृश्यन्ते। अस्य हेतुसमुदाये न केवलं छात्रा एव दोषभाजिनः, वस्तुतोऽधिकांशतोऽधिकारिणो विद्वांसश्चैव, ये किल स्वार्थमात्रदर्शिनः, सङ्कुचितजातीय-दलीयानुचित-पक्षपातेषु आमूलचूलं मग्ना दृश्यन्ते। अपवादस्तु सर्वत्र भवत्येव, तादृशानां गौरवं कुर्वन्तोऽपि वयमिदं प्रायोवादेन निरूपयाम इति तु सावहितं ध्येयम्।

अपरस्य केन्द्रीय-विश्वविद्यालयपदं बिभ्रतः सङ्घट्टनस्य दशाऽपि तादृशी एव। अनेन विश्वविद्यालयेन अतीते राष्ट्रधुरं दृढया निष्ठया वाहका नैके राजनयिकाः स्नातकाः प्रदत्ताः। परमद्य तु यादृशं विप्लवाऽव्यवस्था-दृश्यं तत्र विलोक्यते, कस्यापि विवेकशीलस्य कृते सर्वथाऽरुन्तुदं तत्। न वयमेतेषां सङ्घट्टनानां द्वेषाय एतान् दोषान्निरूपयामः। प्रत्युत राष्ट्रोन्नयन-केन्द्रस्थानानां तादृशीं दुरवस्थां विलोक्य सर्वथा निराशीभूतानामेव उद्गारा एते। विस्तरशो निरूपणाय तान् सङ्केतरूपेण समुल्लिख्य प्रकृतमनुसरामः।

विश्वविद्यालयद्वयतस्तत्त्वतो ज्येष्ठः श्रेष्ठश्च विश्वविद्यालयः काशी-हिन्दू-विश्वविद्यालयो नाम। परं तस्यापि एतादृशीमेव दुरवस्थां साम्प्रतं दृष्ट्वा काशिका वयमतितरां खिन्ना लज्जामनुभवामः। अस्य दोषजातस्य सबीजस्य यथा परिमार्जनं भवेत्, यथा च स्वस्थे अनुशासिते, सौहार्दपूर्णे आदर्श-सांस्कृतिके परिसरे छात्रा पौर्वात्य-पाश्चात्यशिक्षायां विज्ञा भूत्वा राष्ट्रशकटभरवहनक्षमा भवेयुस्तथाकर्तुं स्वकीयां सर्वामपि शक्तिं बुद्धिं संयोजयितुमेते नूतना उपकुलपतिमहाभागा अस्माभिः साग्रहं सप्रश्रयञ्च प्रार्थ्यन्ते।

विश्वविद्यालयो हि विशुद्धतया शिक्षासङ्घटनमेव भाव्यम्। तत्र राजनीतेः, विशेषतो दलगतराजनीतेः मनागपि अवसरो न देयः। छात्रेषु विनयानुशासनाधानाय सर्वप्रथममधिकारिभिरेव आत्मनः शोधनं विधेयम्। विश्वविद्यालयो नाम विश्वस्य वस्तु। कस्यापि व्यक्तिविशेषस्य, तदीयानां सम्बन्धिनां जातीयानां प्रान्तीयानां वा न कदाप्येकाधिकारस्तत्र भाव्यः। अवकाशप्राप्तानामपि पुनःपुनः दीर्घकालं यावत् तत्रैव पदे स्थापनमपि एकाधिकारममुं दृढं परिपुष्णाति। अस्माकं तु मतमिदं यद् उपकुलपतिरिव विश्वविद्यालयप्रशासनाधिकारिणोऽपि पञ्चभिर्वर्षैः परिवर्तनीयाः। अधिकारिभिः पुनश्छात्रा अध्या-

पकाश्च मित्र-पुत्रवद् द्रष्टव्याः। स्वाधिकारमदं दूरतः संस्थाप्य तेषां न्याय्याः प्रस्तावा उदारतया पूरणीयाः। मूलतस्तैर्ध्येयं यद्वयं सर्वसाधारणप्रशासनस्य नाधिकारिणः, अपि तु भाविराष्ट्रप्रशासकानामधिकारिणः स्मः। अतो यावन्ताः सामान्यव्यक्तिसुलभाः प्रमादास्ते नूनमस्माभिर्वर्जनीया एव। इयमस्ति प्रशासकानां व्यवहारशुद्धिः, दलादिसंकुचितसीमानिरपेक्षता च। तेषामर्थशुद्धिविषये पुनः किमु वक्तव्यम्? अर्थशुद्धिमन्तरा सामान्यमपि प्रशासनं न प्रचलतीति राष्ट्रप्रशासकनिर्मातृप्रशासनस्य कृते तस्या अनिवार्यत्वं सुस्पष्टमेव। अस्मिन्नेव प्रसङ्गे प्रशासनयन्त्रनिर्मातॄणामपि शुद्धिर्नितरामावश्यकीति विस्मतुं न शक्यते। कामं प्रशासनं कियदपि शुद्धं क्रियाशीलमनधिकृतधनानपेक्षि स्यात्, तन्निर्मातृयन्त्रमेव भ्रष्टं चेद् गतः सकलस्तेषां प्रयासो रसातलम्। अन्ततस्तदर्थं शिक्षायाः सर्वथा शासननिरपेक्षत्वसिद्धान्तोऽनुग्राह्य एव स्यात्।

शासनयन्त्रस्य शोधनेन सहैव अध्यापक-तन्त्रशोधनमपि सविशेषं महत्त्वमाधत्ते। सर्वप्रथममत्र पदे सर्वथा योग्या एव नियोज्याः। कथमपि कीदृशोऽपि पक्षपातोऽत्र राष्ट्रघाताय भवेदिति दृढमवधेयम्। यदि नाम एतादृशः पक्षपातः केनापि काम्येत चेत् विश्वविद्यालयक्षेत्रं मुक्त्वा अन्यत्र क्रियतां नाम। अत्र तु स सर्वथा निषिद्ध्यते। इत्थं योग्यशिक्षक-नियोजनानन्तरं तैरपि छात्रा यथा शीघ्रातिशीघ्रं सर्वाङ्गीणरूपेण समुद्बुद्धाः स्युस्तथा प्रयतनीयम्। तेषां कालयापनं कथमपि न सह्यम्। अधिकाधिकशिक्षाभरस्तेषु परमेण प्रेम्णा स्थापनीयः, स च तैः कियतांशेन निर्व्यूढ इत्यपि परीक्षणं शिक्षकस्य अनिवार्यं कार्यम्। एवं कृते तन्निर्वहणे एव मग्नाश्छात्राः सहजत एव विविधदृश्यमानोत्पातेभ्योऽनुशासनहीनताभ्यश्च वर्जिता भवेयुः। ते इदमपि विचारयिष्यन्ति यदेतेऽस्माकं जीवननिर्मातारः सुतनिर्विशेषप्रेम्णाऽध्यापयन्ति। एतेषां मनोविपरीतं किमपि कर्मास्माकं पापकृत्यं विश्वासघातकल्पमेव स्यात्। अस्माकं दृढं मतं यदद्य छात्रेषु प्रसृताया अनुशासनहीनताया परं निदानमस्माकमध्यापकानां प्रमादः, अध्यापनकर्मणि आलस्यमुद्रा च। प्रेम्णा सपरिश्रमं पाठने मानवताभावं धारयन् को नाम छात्रोऽध्यापकस्य वधाय प्रवर्तेत? अतोऽध्यापकैः विशेषतो विश्वविद्यालयाध्यापकैः, ये किलान्येषां विद्यालय-महाविद्यालयानामादर्शभूताः, अत्र दृढमवधेयम्।

प्रशासनाऽध्यापकवर्गानन्तरं छात्रवर्गस्यापि कृते समासतो विवक्ष्यतेऽस्माभिः। शासनेन कामं सर्वे शिक्षिता विधेयाः। उच्चशिक्षा तु तेभ्य एव देया ये तीक्ष्णमतयः, उच्चशिक्षाग्रहणलालसाः, जगति शिक्षाक्षेत्रे किमपि कर्तुं वाञ्छन्ति च। अन्यथा माध्यमिकशिक्षोत्तरं साधारणैश्छात्रैः प्राविधिकीं शिक्षां गृहीत्वा स्वजीवनयात्रा राष्ट्रसहयोगश्च विधेयः। ये पुनरुच्चशिक्षाग्रहणाय विश्वविद्यालये प्रविशन्ति तैरिदं सावहितं ध्येयं यत्कर्मकरवत् सङ्घ-(यूनियन)-निर्माणं तत्सञ्चालनमेव वा न तेषां कर्तव्यस्य साङ्गता। एतत्तु शिक्षाग्रहणस्थानं नाधिकारप्रख्यापन-प्रयोगयोः। शिक्षाधिकारिणः शिक्षकाश्च तेषां पितृतुल्याः। को नाम स्वगृहे कीदृशं तथाकथितं 'यूनियना'भिधं सङ्घटनं करोति। सांस्कृतिककार्यसञ्चालनाय छात्रसङ्घो न वार्यते। समासतो विद्यार्थिभिरिदं सुभाषितं सदैव ध्येयम्—

**सुखार्थिनः कुतो विद्या कुतो विद्यार्थिनः सुखम्।**

विद्यार्थिभिः सर्वथा दलगतराजनीतिः परित्याज्या, तदर्थं वा विद्यासेवा सर्वथा त्याज्या। विद्या-दलगतराजनीतिरूपे वाहनद्वये समारूढाः कर्तव्यतोऽधिकार-

प्राप्तये सतृष्णाश्छात्रा यावत् क्षिप्रं शिक्षासंस्थानं परित्यजेयुस्तावदेव राष्ट्रस्य कृते मङ्गलमित्यस्माकं निर्विचिकित्सितं मतम्।

इत्थमत्र प्रसङ्गतोऽस्माभिः शिक्षाविषये ये विचाराश्चेतसि विशुद्धे स्फूर्तास्ते समुपस्थापिताः। मान्या उपकुलपतिमहाभागाः श्रीमालीमहोदयाः अन्ये च उपकुलपतिपदासीना प्रार्थ्यन्ते यत्ते सावहितमेतेषां कार्यान्वयनेन शिक्षाक्षेत्रं विशेषतः शिक्षामातृगृहकल्पस्य काशीनगरस्य निखिलं शिक्षाक्षेत्रं परिशोध्य, भौतिकाध्यात्मिकशिक्षयोः सामञ्जस्यं विधाय तादृशाः स्नातका राष्ट्राय सुलभा कारयन्तु ये सङ्कुचितस्वार्थपूर्ण-दलीयराजनीतितोऽसम्पृक्ताः सर्वथा विज्ञानयुगानुरूपाश्च सन्तो राष्ट्रमिदमुन्नतेश्चरमपदे नेष्यन्तीति।

## साधूनामुद्बोधनम्

अस्मिन्नेवाङ्केऽन्यत्र भारत-साधु-समाजस्य अध्यक्षचरणानां तत्र भवताम् अखण्डानन्द सरस्वतिस्वामिपादानामेकम् उद्बोधनात्मकं पथप्रदर्शनात्मकं च प्रवचनमस्माभिः प्रकाश्यते। अस्माकं भारतीयसंस्कृतौ वर्णाश्रमधर्मस्य महत्त्वं यावच्चन्द्रदिवाकरौ सर्वथाऽविचलमेव। वस्तुतः स एवास्माकं लौकिके वेदानुसारिणि प्रवृत्तिपथि प्रचलतामास्तिकानामाचारस्य चरम उत्कर्षः। निवृत्तिपथि प्रचलतामग्रे एतादृशी स्थितिः समायाति, यस्य कृते शास्त्रकृद्भिरुक्तम्—'निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेध' इति। तत्र तु 'यत्र सर्वमात्मैवाभूत् तत्र केन कं पश्येत्' इति श्रुतिभगवतीरप्यनुवदति। सत्यप्येवं सर्वमपि विज्ञानं दर्शनं च रक्षिते राष्ट्रे एव प्रचलितुं प्रभवति। राष्ट्रविप्लवप्रसङ्गे सर्वप्रथमं यथा तदेव रक्षितं भवेत्तथा प्रयतनीयमिति सर्वतन्त्रसिद्धान्तः। राष्ट्रविप्लवश्च न शस्त्रप्रहारैरेव जायते। वैचारिकशस्त्रप्रहारो नाम ततोऽपि भीषणतरः। तेन सर्वा सांस्कृतिकी पृष्ठभूमिरेव विशकलिता जायते।

अतीते वैधर्मिकाणां शस्त्रप्रहारैः बलाद्धर्मपरिवर्तनैश्च हिन्दूसमाजस्य यदा महत्तरो विनाशः समुपस्थितस्तदा एभिरेव साधुभिः अनादिकालप्रवृत्तोऽपि सामान्यतः स्थितो भक्तिमार्गः सहस्रशाखतां नीतः, तदधोदेशे च सर्वे एते परपीडिता बान्धवाः सङ्घट्टिताः। इत्थं नामशेषतां गच्छन् हिन्दूसमाजोऽस्माकं भक्तवरैः भक्तिप्रस्थापनाचार्यैः सविशेषं धृतः। स्पष्टमेव यदा जीवनस्यैवाऽऽशा दुराशायते, ततोऽधिक आपत्कालः कः स्यात्? आपत्कालिकं कृत्यमपि पुनरन्यदेव भवति। तदा सर्वसामञ्जस्याधायको नियम एव प्रचलति, स एव च समागतविपत्तेर्निदानम्। विशेषधर्मविश्लेषणं तदा न हितकृद् भवति।

दौर्भाग्यादद्य हिन्दू-समाजस्य उपरि, न केवलं हिन्दू-समाजस्य, विश्वस्योपरि जडस्य साम्यवादस्य वैचारिकं भीषणमाक्रमणं प्रवृत्तं वर्तते। बौद्धानां शून्यवादस्य सफलो नियन्त्रकः अद्वैतवादः, वैधर्मिकाणां शस्त्रप्रहारकालिकोऽनुभूतसाफल्यो भक्तिपन्थश्चैवास्य अभूतपूर्वस्याऽऽक्रमणस्य प्रतीकाराय शक्नोति। साम्यवादेन विश्वमिदं कीदृशं छिन्नभिन्नं विधीयते, इति तु स्वामिपादैरेव प्रवचनेऽस्मिन् विस्तरश उक्तम्। 'तमिममद्वैतवादं भक्तिवादञ्च सम्मेल्य यथाशक्ति प्राचीनमान्यतारक्षणपुरस्सरं राष्ट्रोत्थानस्य विश्वशान्तेः जडवादविघटनस्य च य उपायः स्वामिपादैरत्र प्रवचने समुपन्यस्तः, तदर्थं च प्रज्ञाशक्ति-प्रतीकं साधुसमाजमुद्बोध्य प्राणशक्ति-प्रधाने गृहस्थे स्वीयप्रज्ञाशक्तिसंक्रमणस्य पन्थास्तद्वर्गस्य कृते प्रदर्शितः, नूनमिदं वयं राष्ट्रस्य कृते परं श्रेयोवहं मन्यामहे। साधु-

( शेषांशः ३ आवरणपृष्ठे )

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

—श्री पूज्य करपात्रस्वामिनः—

तत्रापि दिव्यदम्पती-चरणारविन्दयुगल-गलितामृतधारया स्वात्मानं परिप्लाव्य जार-ध्यानादिभिः भगवदभिध्यानप्राप्त-भगवदाश्लेषनिर्वृत्या रसात्मकत्वं पोष्यते। तद्वियोगाग्निजन्यतीव्रतापैश्च अवशिष्टप्राकृतत्वदाहः, तत्तप्ततनूनामेव तत्संभोगप्राप्तिश्रवणात्। तेन रसात्मकैरेव देहेन्द्रियादिभी रसात्मको भगवान् भुज्यते।

अत एव नानाविधैस्तपोभिरुपासनैः कुसुमसरोवराद्यमृतोपस्पर्शनैः व्रजभक्तप्रसादविशेषैश्च नारदस्य तादृशतनुप्राप्तिः। दण्डकारण्यवासिभिः महर्षिभिश्च राघवेन्द्रदर्शन-तत्प्रसादजनित-व्रजगोपकन्याजनुःप्राप्तिः। ततश्च कात्यायिन्यर्चनव्रताचरणम्, चीरहरणादिप्रसङ्गे तद्दर्शनम्, निरावरणब्रह्मसंसृष्टतया निरावरणब्रह्मभावापन्न-दुकूलकुचोत्तरीयादि-परिधानादिभिः निरावरणकर्णकुहरद्वारा तन्मुखचन्द्रनिर्गत-वेणुगीतपीयूषमय-तदधरामृतप्राप्त्या च तद्भावप्राप्तिः। तत्रापि देहेन्द्रियादेः प्राकृतत्वावशेषे रसात्मकत्वापरिपोषे च सति भगवत्संप्रयोग-विप्रयोग-वैशेष्येणैव तत्पूर्तिः। तदुक्तम्—

> दुःसह - प्रेष्ठ - विरह - तीव्रताप-धुताः शुभाः।
> ध्यानप्राप्ताच्युताश्लेष - निर्वृत्या - क्षीणमङ्गलाः॥
> तमेव परमात्मानं जारबुद्ध्याऽपि सङ्गताः।
> जहुर्गुणमयं देहं सद्यः प्रक्षीणबन्धनाः॥
>
> इति।

अत्र दुःसहप्रेष्ठविरहतीव्रतापेन धुतानि अशुभानि तद्देहादिगतानि प्राकृतत्व-भौतिकत्वादीनि यासां ताः। ध्यानप्राप्तस्य अच्युतस्य आश्लेषेण जन्यया निर्वृत्या उद्रिक्तपरमानन्देन अक्षीणानि पुष्टिंगतानि मङ्गलानि तद्देहादिगतानि रसात्मकत्वादीनि यासां तास्तथोक्ताः। सद्यः प्रक्षीणबन्धनाः तत्कालप्रक्षीण-तत्प्राप्तिप्रतिबन्धाः। जारबुद्ध्याऽपि तमेव परमात्मानं प्रापुरिति भावः।

तत्पदार्थात्मिकाः तद्रश्मिरूपाः तच्छक्तिरूपास्तु नित्यसिद्धा एव। श्रुतिरूपा अपि सिद्धप्रायाः। तन्माधुर्यसारसर्वस्वरूपा वृषभानुनन्दिनी तु ततोऽपि अन्तरङ्गेत्युक्तमेव। परस्परभावात्मकत्वेनापि परस्परात्मानौ। स्वतःसिद्धानां यः स्वभावसिद्धस्तापः, स एव साधकानामभ्यसनीयः साधनरूपात्मकः। गूढब्रह्मसच्चिदानन्दरूपः श्रीकृष्णः परात्परः। स च स्वामिनीहृदयस्थितः विप्रलम्भादि-स्थायिभावात्मकः। गूढस्त्रीभावभावात्मा विप्रलम्भस्थायिभावरूपे कैवल्यात् स्त्रीभावोऽव्यक्तत्वाद् गूढ एव भवति। संयोगे तु स्त्रीभावोऽपि स्फुट एव। भोग्यतारूपस्त्रीभावोऽपि भगवतो विप्रलम्भे गूढ एव भवति। प्रकटरूपेण तत्तद्धर्मराहित्येऽपि भाव्यमानत्वात् सर्वधर्मसाहित्यमस्त्येव। ततो भावभावात्मा भगवान् सर्वलीलारूप-कलात्मको भवति।

धर्मसहितः केवलश्चेति द्विविधो रसः। केवलो नाट्ये, धर्मसहितश्च सम्भोगे। स च समुद्बुद्ध-संयोग-विप्रलम्भात्मकोभयविध - शृङ्गाररससिन्धु-रूपः सर्वात्मभावात्मक-स्त्रीभावरूपो विह्वलः।

> श्रीकृष्णः सच्चिदानन्दो गूढब्रह्म परात्परः।
> गूढस्त्रीभावभावात्मा स्वामिनीहृदयस्थितः॥
> स्थायिभावात्मकः सर्वलीलारूपफलात्मकः।
> रासलीलापरो नित्यो भावाभावात्मकः परः॥
> स्वामिनीवृन्द - मध्यस्थस्तदेक - रसमग्नकः।
> जीववत्तदधीनश्च लभ्यः सर्वात्मभावकैः।
> संयोगे राधिकायुक्तः संयोगात्मा तदात्मकः॥ इति।

(क्रमशः)

# क्रिया-विशेषणविभक्तेः पाणिनीयता-विचारः

— श्री आचार्यः केदारनाथ ओझा —

इत्थमेव **कर्मवत्कर्मणा तुल्यक्रियः** इति सूत्रस्य प्रदीपोद्योते क्रियाविशेषणं कर्म नागोजीभट्टमहोदयेनोक्तम्, तदपि भाष्यं क्रियाविशेषणस्य कर्मतासाधकं वदन्ति। परमेवमेव तादृक् कर्मतां विरुणद्धि। तथा हि—**सकर्मकाणां प्रतिषेधो वक्तव्य** इति वार्तिकप्रत्याख्यानाय **तपस्तपःकर्मकस्यैव** इति सूत्रं द्विर्नियमार्थमुक्तम्। द्वितीयनियमप्रतिपादकं भाष्यम्—

> "तस्य तपःकर्मकस्यैव। तस्य च तपःकर्मकस्यैव कर्ता कर्मवद् भवति नान्यकर्मकस्येति। किमिदं तप इति? तपेरौणादिकोऽस्कारो भावसाधनः। कः प्रकृत्यर्थः? कः प्रत्ययार्थः? स एव सन्तापः। कथं पुनः स एव नाम प्रकृत्यर्थः स्यात्, स एव च प्रत्ययार्थः? सामान्यतपेरवयवतपिः कर्म भवति। तद् यथा स एतान् पोषानपुषत्, गोपोषमश्वपोषं रैपोषमिति सामान्यपुषेरवयवपुषिः कर्म भवति। एवमिहापि सामान्यतपेरवयवतपिः कर्म भवति" इति।

**तपेर्वा सकर्मकस्य वचनं नियमार्थम्** इति भाष्यवार्तिकमादाय एतद्विषयकः मदीयो निम्नाङ्कितप्रकारः—तप इति योगविभागेन नियमः क्रियत इति भावः। ननु 'तप्यते तपस्तापस' इत्यत्र कर्मस्थया क्रियया तुल्यक्रियत्वं कर्तुर्नास्ति, उपवासादेस्तपसः कर्तृत्वे तपेर्दुःखार्थत्वात्, तापसस्य तु कर्तृत्वेऽर्जनार्थत्वात्। नैष दोषः; शरीरसन्तापलक्षणायाः क्रियायास्तुल्यत्वादवस्थाद्वयेऽपि शरीरसन्तापलक्षणमेवार्जनं तापस्य, यतो व्यापारः। कः प्रत्ययार्थ इति भाष्यप्रतीके 'तापसेन तपस्तप्यते' इति कर्मणि लकारोत्पत्तौ प्रकृत्यर्थस्य क्रियारूपस्य प्रत्ययार्थत्वं दृश्यते, क्रियाकर्मणोश्च साध्यसाधनभावाद् भेदेन भाव्यम्। इह तु भेदाभावात् प्रकृतिप्रत्ययार्थानुपपत्तिः। अथवा 'तपःकर्मकस्ये'ति वचनात् प्रकृत्यर्थस्यैव कर्मत्वमाश्रितम्। तच्च विरुद्धमिति भावः। 'अवयवतपिरि'ति भाष्यप्रतीके विशेषतपिर्ज्ञानलक्षणं तप इत्यर्थः।

उभयोः सारांशः—पूर्वपक्षे अभेदे साध्यसाधनभावस्य क्रियाकर्मभावस्य धात्वर्थ-कर्मप्रत्ययार्थभावस्य चानुपपत्तिर्दर्शिता, 'सामान्यतपेरवयवतपिः कर्म भवति इत्युत्तरवाक्येन धात्वर्थकर्मणोर्भेद एव भाष्यकृता बोधयितुमिष्टः। सामान्यशब्दं ब्रुवाणोऽपि भाष्यकारो विशेषशब्दं नोल्लिखति। अन्यथा सामान्यविशेषभावेऽभेदापत्तेः, पूर्वपक्षस्य तदवस्थितत्वापत्तेश्च। प्रदीपः—अवयवशब्दस्थाने विशेषशब्दं ब्रुवाणोऽपि ज्ञानलक्षणमनुवदन् धात्वर्थादर्जनलक्षणात् संतापलक्षणाद् वा तपसः कर्मणो भेदं व्यनक्ति। यदि सामान्यविशेषभावेनाऽभेदान्वयः प्रदीपस्य समीहितो मन्येत, तदा ज्ञानलक्षणार्थभेदकथनं तस्य व्यर्थं स्यात्, भेदे च सामान्यविशेषभावानुपपत्तेः। क्रियाविशेषणं कर्मेति भाष्येण प्रदीपेन च नोच्यते। कर्मलकारस्य चेदमुदाहरणम्। क्रियाविशेषणे कर्मणि कर्मलकारो न भवतीति तपसः क्रियाविशेषण-कर्मतावर्णनं भाष्यादिविरुद्धम्।

अहन्तु युक्तं मन्ये—अनुपदमेव भाष्यकारः **किमिदं तप इति? तपेरौणादिकोऽस्कारो भावः**

**साधनः** इत्यवोचत्, तदनुरोधेनैव उत्तरवाक्ये अवयव-शब्दं ब्रूते। अन्यथा एवं तपःशब्दव्युत्पादनस्य प्रकृते क उपयोगः स्यात्? तथा च अवयवस्तपिर्यत्र भाव-साधनास्प्रत्ययान्त-तपःशब्दे तादृशतपःशब्दार्थः कर्म स च कृदभिहितभावो द्रव्यवत् क्रियासमवायमुपैति। धात्वर्थस्तु साध्यावस्थापन्नाऽद्रव्यभूता न क्रियासम-वायमुपैति। तथा च फलाश्रयः कर्मैव कर्मलकारार्थो न तु क्रियाविशेषणकर्मेति। किञ्च–तपिरत्र सकर्मकः क्रिया-विशेषणकर्मणा सकर्मकत्वं नायाति, अतः फलाश्रय-कर्मणाऽपि अन्येन केनापि अवश्यं भाव्यम्, तपःपदार्थ-मन्तरा सूत्रभाष्यानुकूलं किं स्यात् फलाश्रयकर्म?

उपरिलिखितस्य प्रदीपस्य प्रतीकेऽधोलिखित उद्योतः—कैयटे शरीरसन्तापपदेन स व्यापार एव। तदेव चार्जनमिति बोध्यम्। तत्र क्रियाविशेषणत्वात् 'स्तोकमेधते' इत्यादाविव तपसः कर्मत्वमिति। प्रकृत्यर्थ-स्यैवेति प्रतीके सन्तापस्येत्यर्थः। तस्यैव तपःपदार्थ-त्वादिति भावः। प्रत्ययार्थत्वं प्रतीके तिङ्प्रत्ययार्थ-कर्मरूपत्वम्, यद्यपि क्रियाविशेषणरूपे कर्मणि लकारो न, कर्तृसाहचर्येण धात्वर्थे भेदेनान्वयिकर्मण एव तत्र ग्रहणात्; तथापि भाष्यप्रामाण्यात् सामान्यविशेष-भावेनान्वयिनि क्रियाविशेषणकर्मणि लकारो भवत्येव। अत एव स्तोकमित्यादेः क्रियाविशेषणस्य एकत्वनपुं-सकत्वे अपि। 'एतान् पोषानपुषदि'त्यादौ पुंस्त्वबहु-वचने इति बोध्यम्। ज्ञानलक्षणं तप इति प्रतीके ज्ञानजनकोपवासादिरूपमित्यर्थः। भाष्ये 'एतान् पोषान्' इत्यस्य विशेषसमर्पकाणि 'गोपोषमि'त्यादीनि घञन्तानि बोध्यानि इति।

'स्तोकमेधत' इति दृष्टान्तदानं चिन्त्यम्। दृष्टान्ते एधतिरकर्मकः प्रकृते तपिः सकर्मकः, अकर्मकवर्तति-योगे **तत्प्रत्यनुपूर्वमीपलोमकूलम्** इत्यत्र प्रथमात्व-स्वीकारेण अकर्मक-धातुस्थले क्रियाविशेषण-कर्मत्वा-नङ्गीकारात्। यद्यपि परमलघुमञ्जूषायाम् अस्ति-**भवतिवर्ततीनां व्यापारमात्रमर्थः** इत्युक्तमस्ति। वर्ततियोगे फलान्वयाभावाद् व्यापारान्वयेन क्रिया-विशेषणकर्मत्वाभावात् प्रथमान्तत्वमेव युक्तम्। एधति-योगे तु फलान्वयात् कर्मत्वं संभवतीति वक्तुं शक्यते; तथापि अकर्मकस्थले व्यापारान्वयं विना फलान्वयः पृथङ् न भवति। अत एव धात्वर्थनिरूपणे लघु-मञ्जूषादौ एधतेर्वृद्धिरूपा क्रियेत्यर्थो वर्णितः। एक एवार्थः फलं व्यापारश्च, फलत्वेनान्वयं कृत्वा कथ-मपि कर्मत्वसम्पत्तिरूह्या। ममरीत्या तु ''स्तोकमेधते' इत्यादौ क्रियाविशेषणे प्रथमैव। 'तापसेन तपस्तप्यते' इत्यत्र क्रियाविशेषणं कर्म स्वीकृत्य कर्मणि लकारानु-पपत्तिं प्रति बहु क्लिश्नाति उद्योतकार इति 'यद्यपि-तथापि'-भाष्यप्रामाण्यात् प्रभृतिशब्दैरभिव्यज्यते। नाभेदान्वयो नापि क्रियाविशेषणं कर्म, किन्तु फला-श्रयकर्मैव कृदभिहितभावस्य धात्वर्थभिन्नत्वाद् भेदे-नान्वय इत्यादिविषये एतद्भाष्यं प्रमाणम्। धात्वर्थाभेदान्वयिनि कर्मणि लकारे 'स्तोकस्तण्डुलं पच्यत' इत्याद्यापत्तेः। सामान्यविशेषभावेनेति उद्योत-वचसा न कश्चिद्विशेषः। सर्वत्र सामान्यविशेषयो-रेवाभेदान्वयो न तु सामान्ययोर्विशेषयोर्वा इति तु मम प्रतिभाति।

अधुना भाष्यस्थः 'स एतान् पोषानि'त्यादिदृष्टा-न्तार्थो विवेचनीयः। 'एतान् पोषानि'त्यत्र पोष-पदार्थस्य द्वितीयार्थकर्मतायां धात्वर्थक्रियायां वाऽन्वयः? धात्वर्थक्रियायामन्वये पुंस्त्वबहुवचने कथमुपपद्येताम्? घञन्तस्य नित्यपुंस्त्वेऽपि बहु-वचनन्तु क्रियाविशेषणत्वेऽनुपपन्नमेव। तथा च नेदं क्रियाविशेषणकर्मण उदाहरणम्। तथा च दृष्टान्तानुरोधेनापि न तपसः क्रियाविशेषणकर्मत्वम्। पोषणेऽपि काचित्पुष्टिरिति फलाश्रयकर्मैव। एवमेव 'गोपोषं पुष्णाती'त्याद्यपि। गोकर्मकं यत्पोषणं तत्कर्मकं पोषणमित्यादिरीत्याऽर्थः। केचन 'गोपोषमि'त्यादौ

त्वे पुषः विहितणमुलमुदाहरन्ति। तेषां 'घञन्तानीति' उद्योतोक्तिस्तु प्रतिकूलैव। युक्तमपि न प्रतिभाति। **यथाविध्यनुप्रयोगः** इति सूत्रम्, 'उदपेषं पिनष्टि, उदकेन पिनष्टी'त्यादिकौमुद्युक्तिञ्चष्टि अनुसृत्य 'गोपोषं पुष्णाति' इत्यस्य गवा पुष्णातीत्यर्थः। द्विर्धात्वर्थभानस्य प्रसङ्ग एव नास्ति, यत्र क्रियाकर्मभावेनाऽन्वयः स्यात्। न वा सामान्यविशेषभावस्य प्रसङ्गः।

धात्वर्थ-कृदर्थभावयोः प्रकृतोपयोगिवैलक्षण्यप्रतिपादकं **सार्वधातुके यक्** इति सूत्रस्थं भाष्यमित्थम्—

"अस्ति खल्वपि विशेषः कृदभिहितस्य भावस्य तिङभिहितस्य च? कृदभिहितो भावो द्रव्यवद् भवति। किमिदं द्रव्यवदिति? द्रव्यं क्रियया समवायं गच्छति। कं समवायं गच्छति? द्रव्यं क्रियाऽभिनिर्वृत्तौ साधनत्वमुपैति। तद्वच्चास्य भावस्य कृदभिहितस्य भवति। पाको वर्तत इति। क्रियावन्न भवति। किमिदं क्रियावदिति? क्रिया क्रियया समवायं न गच्छति, पचति पठतीति। तद्वच्चास्य कृतभिहितभावस्य न भवति पाको वर्तत इति।

अत्र च समवायो भेदसम्बन्धः प्रसिद्ध एव, 'साधनत्वमुपैती'त्यनेन स्फुटीक्रियतेऽपि। अतः कृदभिहितभावस्य धात्वर्थेऽभेदान्वयो भाष्यविरुद्धः। किन्तु साधनत्वेन कर्तृत्वेन कर्मत्वादिना च। तथा च 'पाकं पक्ष्यति, तापसेन तपस्तप्यते, पोषानपुषदि'त्यादौ धात्वर्थफले घञन्तार्थकर्मणोऽभेदेनान्वयो न युज्यते। किन्तु द्वितीयार्थ-तिङर्थाश्रय-कर्मण्येवेति भावः।

धात्वर्थाभेदविशेषणस्य भावार्थकृदन्तार्थस्य प्रथमाबहुवचनस्य भावाख्यातबहुवचनस्य चोदाहरणम्; भावकृदन्ते द्विवचन-बहुवचने भवतो न तु भावाख्याते। तत्र कारणम्—यत्र प्रकारान्तरेण धात्वर्थभावभेदावभासस्तत्र द्विवचन-बहुवचने, यत्र न धात्वर्थभावभेदावभासस्तत्र एकवचनमिति व्यवस्थापयन् भाष्यकारो ब्रूते—**तिङभिहिते चापि तदाभावे बहुवचनं श्रूयते। तद्यथा उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्त इति।**

उष्ट्रा यथा आसते तथा देवदत्तेन आस्यते। यथा हताः शेरते तथा देवदत्तेन शय्यते, देवदत्तकर्तृकाणि उष्ट्रकर्तृक-नानाविधासन-सदृशानि आसनानि, देवदत्तकर्तृकाणि हतकर्तृक-नानाशयनसदृशानि शयनानि इति 'देवदत्तेन उष्ट्रासिका आस्यन्ते, देवदत्तेन हतशायिकाः शय्यन्ते' इत्यादिभावाख्यात-वाक्यस्यार्थः। सादृश्यवाचकपदाभावेऽपि रूपकमिव वाचकलुप्तोपमेव वा सादृश्यबोधः। उपमानानि आसनानि शयनानि च नानाविधानि अनेकानि, अत उपमेयान्यपि अनेकानीति धात्वर्थभेदावभासो बहुवचननिमित्तम्। व्यापारान्वयिनः क्रियाविशेषणस्य नागेशमतेनापि प्रथमान्तता।

अत्र प्रदीपः—'उष्ट्रासिका आस्यन्त' इति भाष्यप्रतीके, अत्राश्रयाणामुष्ट्राणां भेदादनेकप्रकारयुक्तानि आसनानि भिन्नानि, तत्सामानाधिकरण्याच्च आख्यातवाच्यभावभेदाद् आस्यन्त इति बहुवचनमित्यर्थः। इवशब्दप्रयोगमन्तरेणापि चेवार्थगतिर्भवति।

तदयमर्थः—यादृशानि उष्ट्राणामनेकप्रकाराणि आसनानि तादृशानि देवदत्तादिभिः क्रियन्ते इति। 'भवद्भिरास्यत' इत्यत्र तु आश्रयभेदादाश्रितभेदस्य आप्रतिपन्नत्वात् प्रयोजनाभावाद् भावो भेदं नोपादत्त इत्येकवचनमेव भवति। यथा 'ताम्रः पलाशेषु बभूव राग' इति। न च सर्वत्र आश्रयभेदादाश्रितभेदस्य प्रतीतिः; 'घटान् पचती'त्यादौ पाकस्याभिन्नस्यैवावगमात्।

'केचितु उष्ट्रासिका आस्यन्त' इति कर्मणि लकारमिच्छन्ति, उष्ट्रासिकालक्षणस्य भावस्य कर्मत्वात्, यथा 'गोदोहः सुप्यत' इति। एवं तु विवक्षान्तरे भवत्येवेति भाष्यकारेण भावेऽपि लविधाने बहुवचनमुपपादितमिति।

( शेषांशः ६४ पृष्ठे )

# मानस-भारती--देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए०, साहित्याचार्यः—

तेषु द्रुमेषु गायन्ती भ्रमरालि - रितस्ततः।
सुगन्धी शीतलो मन्दो रम्यो वाति सदागतिः॥
कुर्वन्ति मधुरं ध्वानं कोकिलाश्च कुहू-कुहू।
मुनीनामपि येनेह ध्यानं विघ्नयुतं स्थितम्॥

**द्रुमाश्च सर्वे फलपौष्कलेन**
**भूमिं स्पृशन्तः परितो लसन्ति।**
**परोपकारे निरता मनुष्या**
**यथा युताः सन्नवसम्पदैव॥ ४०॥**

रामोऽतिरम्यां सरसीं दृष्ट्वा स्नात्वा सुनिर्वृतः।
सानुजो मञ्जुतरुगां छायामालोक्य संस्थितः॥
ततस्तत्राऽऽगता देवा मुनयश्चास्तुवन् प्रभुम्।
स्तुत्वा यातेषु तेषूपविष्टो रामः कृपानिधिः॥
अनुजेन समं नाना करोति सरसाः कथाः।
दृष्ट्वा वियोगिनं देवं चिचिन्ते नारदो बहु॥
यन्ममाङ्गीकृत्य शापं जगदीशोऽपि राघवः।
सहते बहुदुःखानां भारं पश्यामि तं प्रभुम्॥
ईदृशोऽवसरो भूयो नैव लभ्यो मया क्वचित्।
विचार्येति सवीणोऽसौ संस्थितं राममागतः॥
गायन् प्रेम्णा रामवृत्तं मृदुवाचाऽतिवर्णयन्।
आगत्य दण्डप्रणतिं कृतवान् राघवाय सः॥
रामश्चिरायाश्लिष्योत्थाप्य नारदमागतम्।
पृष्ट्वा तं कुशलं पार्श्वे उपावेशयदासने।
पादप्रक्षालनं चक्रे ततः सौमित्रिरादरात्॥

**नानाप्रकारं विनयं विधाय**
**विज्ञाय देवं मुदितश्च चित्ते।**
**संयोज्य हस्तौ कमलोपमौ स्वौ**
**महर्षिरूचे वचनं तदानीम्॥ ४१॥**

शृणु स्वाभाविकोदार रघुनायक सद्गुण।
रम्यो वरप्रदोऽगम्य सुगम्यश्च भवान् प्रभो॥
अन्तर्यामी वेत्ति सर्वं भवान् यद्यपि मानद।
तथाप्येकं वरं याचे भगवांस्तं ददातु मे॥
रामः प्राह मुने त्वं तु प्रकृतिं वेत्सि मामकीम्।
कदापि स्वजनैः साकं दुर्भावं विदधामि किम्॥
किं मे प्रियं वस्तु शक्यं मुनिश्रेष्ठ न याचितुम्।
भक्ताय किञ्चिदपि मे नास्त्यदेयं जगत्त्रये॥
विश्वासं मा समत्याक्षीरेतं मद्विषये मुने।
तदोचे नारदो हृष्टो याचे धृष्टो वरं त्वमुम्॥
तवानन्तानि नामानि वेदोक्तानि मतानि च।
तथापि तेभ्यः सर्वेभ्यो रामनामाधिकं भवेत्॥
तच्चास्तु पापपक्षिभ्यस्तापकं मृगयुर्यथा।

**भक्तिस्त्रियामा तव पूर्णिमायाः**
**सुधाकरो राघव रामनाम।**
**अन्यानि नामानि च भानि भूत्वा**
**भक्तस्य हृद्व्योम्नि वसन्तु नित्यम्॥४२॥(क)**

(क्रमशः)

# द्रव्योर्जाप्रसङ्गे ध्वन्यूर्जा-विवेचनम्

—श्री रामनारायणदासः—

[ शोधच्छात्रः—वाराणसेयसंस्कृतविश्वविद्यालयस्य, वाराणसी ]

[ अस्मिन्निबन्धे आधुनिकवैज्ञानिकैः यद् द्रव्योर्जाभ्यां जगतो निर्माणम्, द्रव्योर्जयोश्च परस्परं परिवर्तनम्, अकारादिध्वन्यूर्जाया विद्युद्रूपेण, अकारादिध्वनिधर्मसमाविष्ट-विद्युदूर्जायाश्च ध्वनिरूपेण परिवर्तनमन्वेषितम्, तद् ऋग्वेदे व्याकरणदर्शने च समुपलभ्यते, न किमपि नवीनमन्वेषणमित्येव प्रतिपाद्यते। विशेषविवरणाय लेखोऽयं पठनीय इति ।—सम्पादकः ]

नित्यं नवं नवम् आविष्कुर्वद्भिः पाश्चात्यविद्वद्भिः कृतानि विस्मयकारीणि नूतनपदार्थानां गवेषणानि तेषां चमत्कारवैभवञ्च प्रायः सर्वे विजानन्ति । इदं सर्वं चराचरात्मकं जगद् द्रव्योर्जाभ्यां निर्मितमिति तेषां राद्धान्तः । द्रव्योर्जयोर्लक्षणञ्च अलवर्ट आइनस्टीन नामकेन वैज्ञानिकशिरोमणिना, तदनुयायिना डोनाल्डवार महोदयेन च 'परमाणुशक्ति'इत्यभिधेये ग्रन्थे यत्कृतम्, तदित्थं समासतोऽधस्तात् प्रस्तूयते ।

काठिन्यं भारवत्त्वञ्च द्रव्यमुच्यते । यथा—पृथ्वीजलतेजोवायवः । पार्थिवञ्च यत् सुवर्णरजतकाष्ठेन्धनादिकञ्च एतत्सर्वं द्रव्येष्वन्तर्भवति । एतद्विपरीतञ्च ऊर्जायाः स्वरूपं विद्यते । ऊर्जा शक्त्यपरनाम्नाऽभिधीयते । तद् यथा अमरकोषस्य क्षत्रियवर्गे पञ्चसप्ततितमे श्लोके—**ऊर्जस्वलः स्याद् ऊर्जस्वी** इति । व्याख्यावसरे पण्डित शक्तिधरशर्मा ऊर्जशब्दं व्याख्यातुं **ऊर्जस्तु कार्तिकोत्साहबलेषु प्राणनेऽपि च** इति मेदिनीकोशमुद्धृतवान् । अत्र ऊर्जापर्यायत्वं बलशब्दस्य दृश्यते । बलशब्दस्य च शक्तिपर्यायत्वं सर्वैर्विदितचरमेवेति नास्त्यत्र प्रमाणापेक्षा ।

अभारवत्त्वं निर्गतकाठिन्यं द्रव्यं स्थानान्तरितं रूपान्तरञ्च कर्तुं क्षमत्वमिति ऊर्जाया सरलतमं लक्षणं वेदितव्यम् । तद् यथा—सौरप्रकाशः, विद्युद्, अग्निरिति । अस्मत्प्रकोष्ठे यः सौरादिप्रकाशस्तमोपनोदादिकार्येषु प्रयुज्यते, तस्मिन् भारवत्त्वं काठिन्यञ्च नानुभूयेते । केवलं तापमात्रं तण्डुलादिद्रव्येषु विक्लृत्यादिजनकत्वं प्रत्यक्षीक्रियते । एवं द्रव्योर्जयोर्महान् भेदः परिलक्ष्यते । तथापि द्रव्यस्य ऊर्जारूपेण ऊर्जायाश्च द्रव्यरूपेण परिवर्तनं कर्तुं शक्यते । द्रव्यस्य ऊर्जारूपेण परिणामो यथा काष्ठेन्धनादिकमग्निना प्रदाह्य तेजोरूपेण परिवर्त्यते । ऊर्जायाश्च द्रव्यात्मना परिणामो यथा—रविकिरणनिष्ठोर्जा, वृक्षनिष्ठ-हरितकणनामकः कश्चित् पदार्थविशेषः स्वस्मिन् संश्लिष्य काष्ठादिरूपेण विपरिणमते । सर्वेषां काष्ठेन्धनादिकानाञ्च मूलभूतं सूर्यस्य प्रकाश एव । रविकिरणनिष्ठोर्जैव काष्ठादिद्रव्यरूपेण परिणतेति आधुनिकरसायनशास्त्राभिज्ञानामपि मतम् । श्रुतिरपि तदेव पोषयति । तथा चोक्तम्—**सूर्य आत्मा जगतस्तस्थुषश्च** इति । चराचरस्य जगत आत्मा स्वरूपं सूर्य इति श्रुत्यर्थः ।

अयं परिणामो न केवलं द्रव्योजयोरेव परस्परं निष्पद्यते, अपि तु ऊर्जाया अपि स्वविजातीयोर्जारूपेण परिणामः परिलक्ष्यते । तद् यथा डायनामोनामिका यान्त्रिकी ऊर्जा विद्युद्रूपेण विपरिणमते । तस्या विद्युतश्च यदा काचनिर्मितस्य बल्वेति नाम्नाऽभिहितस्य पदार्थस्यान्तर्भागे संश्लिष्टेन धातुनिर्मित-तन्तुना सह संयोगो सञ्जायते तदा विद्युदूर्जा प्रकाशरूपेण परिवर्तते, येन अन्धकारस्यापनोदे घटपटादिपदार्थाश्चक्षुषा प्रत्यक्षीक्रियन्ते ।

किञ्च भौतिकशास्त्रनिपुणैः अकादिध्वनिरपि ऊर्जा इति स्वीक्रियते। ध्वनिनिष्ठोर्जाया विद्युद्रूपेण, ध्वनिधर्मसमाविष्ट-विद्युदूर्जायाश्च ध्वनिरूपेण परस्परं परिवर्तनं कर्तुं शक्यते। अयं विषयो ललितकिशोरसिंह (एम० एस-सी०) कृते 'ध्वनिविज्ञाने'ति ग्रन्थे बहुशो व्याख्यातः। अकारादिध्वनेः विद्युतश्चेदं परस्परं परिवर्तनं न काऽपि नवीना गवेषणा। किन्तु अलवर्ट आईनस्टीन प्रभृतितोऽतीव पूर्वं भर्तृहरिप्रभृतयोऽपीमं विषयं विजानन्ति स्म। तथा चोक्तं वाक्यपदीये—

**समनोभावमापद्य तेजसा पाकमागतः।**
**वायुमाविशति प्राणामथासौ समुदीर्यते॥**
**अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।**
**तद्धर्मेण समाविष्टस्तेजसैव विवर्तते॥**

—(ब्रह्मकाण्डे, कारिका ११३, ११४)

अत्र तेजःपदेन कायाग्नेर्ग्रहणं कर्तव्यम्। कायाग्निमेव अत्र विद्युत्स्थानापन्नं जानीयात्। यतो हि प्रकाश-विद्युद्-दावाग्नीत्यादयः सर्वेऽग्नेरेव भेदाः, न तु तद्भिन्नाः। ज्ञानस्यैव शब्दरूपेण परिणाम इत्येवं वैयाकरणा मन्यन्ते। अन्तःकरणस्थितं ज्ञानमपि एकम् ऊर्जातत्त्वमिति स्वीकर्तव्यम्। सूक्ष्मशब्दस्वरूपेण स्थितं घटपटादिविषयकं ज्ञानं 'कम्बुग्रीवादिमद्रूपार्थे घटशब्दः प्रयोक्तव्यः, पटशब्दश्च न प्रयोक्तव्यः' इत्याकारक-सङ्कल्पविकल्पात्मकमनसा सह संयोगे सति तद्रूपेण परिणमते इति 'स मनोभावमापद्ये'त्यस्य तात्पर्यं स्पष्टं जातम्। ज्ञानञ्च सूक्ष्मवाक्स्वरूपमेवेति सूक्ष्मावाग्-ज्ञानयोः नास्ति भेदः। तथा चोक्तम्—

**अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः।**

—(ब्रह्मका०, ११२)

सूक्ष्मशब्दस्वरूपाया घटपटादिविषयक-ज्ञाननिष्ठोर्जाया मनोरूपेण परिवर्तने जाते सति मनोऽपि सूक्ष्मशब्दनिष्ठधर्मेण समाविष्टं सञ्जायते। सूक्ष्मशब्दनिष्ठ-धर्मसमाविष्टस्य मनसो यदा कायाग्निना सम्बन्धः सञ्जायते, तदा कायाग्नौ कम्पनं प्रादुर्भवति। यथा बहिःप्रदेशे दूरध्वनिप्रेषणयन्त्रे (टेलीफोन) इस्पातनिर्मितेऽतीव सूक्ष्मे 'डायफामे'ति नामके पदार्थे यदा ध्वनिः समापतति, तदा 'फ्लक्स'-नामकं तत्त्वं सङ्कोचविकासावस्थां प्राप्नोति। फ्लक्स-नामकतत्त्वस्य सङ्कोचविकासौ च ध्वनेरनुरूपावेव भवतः। येन क्रमेण ध्वनिना फ्लक्स-तत्त्वं परिकम्पते, तेनैव क्रमेण कुण्डलीनिष्ठविद्युदधारायां कम्पनं जायते। तेन ध्वनिनिष्ठोर्जाया विद्युदूर्जारूपेण परिवर्तनं सम्पद्यते। एवमन्तःकरणेऽपि वक्तुरिच्छया सूक्ष्मशब्दसमाविष्टं सङ्कल्पविकल्पात्मकं मनस्तत्त्वं येन क्रमेण जठराग्निमभिहन्ति, तेनैव क्रमेण जठरनिष्ठविद्युति परिकम्पनं समुत्पद्यते। तेन सूक्ष्मध्वनिनिष्ठोर्जाया विद्युदूर्जारूपेण परिवर्तनं निष्पद्यते। 'स मनोभावमापद्य तेजसा पाकमागतः' इति भर्तृहरिकारिकाया इदमेव तात्पर्यम्। अनेन 'भर्तृहरिविरचितवाक्यपदीये ध्वनेर्विद्युद्रूपेण परिवर्तनं प्रतिपादितम्' इति स्फुटम्।

ध्वनिधर्मसमाविष्ट-विद्युतश्च ध्वनिरूपेणाऽपि परिवर्तनं बहुशोऽधुना दृष्टिपथं समायाति। ध्वनिप्रेषणयन्त्रेषु ध्वनिं विद्युद्रूपेण परिवर्त्य ये विद्युत्तरङ्गाः प्रेष्यन्ते, त एव ध्वनिग्राहकयन्त्रे ध्वनिरूपेण परिणमन्ते। इयमपि प्रक्रिया शरीरान्तः सञ्जायते। सूक्ष्मवाग्धर्मसमाविष्टमनसा जठराग्नौ कम्पने जाते सति सूक्ष्मवाचस्तेजोरूपेण परिवर्तनं यदा जायते, तदा तैजसः शब्दः प्राणवायुमाध्यमेन ऊर्ध्वं समुत्तिष्ठति। अन्तःकरणनिष्ठ-सूक्ष्मध्वन्यनुरूपकम्पितं तेजश्च वायुः ध्वनिग्राहकयन्त्रस्थानापन्नमनुनादकयन्त्रस्थानापन्नञ्च कण्ठताल्वादिस्थानं प्रापयति।

'वायुमाविशति प्राणमथासौ समुदीर्यते' इति उपर्युद्धृताया भर्तृहरिकारिकाया इदमेव तात्पर्यम्। कण्ठतात्वादिस्थानानि च वायुसाहाय्येन समागतं सूक्ष्मवाग्धर्मसमाविष्टेन मनसा क्रमशः प्रकम्पितं तेजस्तरङ्गम् अकारादिध्वनिरूपेण परिणमते। यथा अस्माकं मुखाद् समुद्गीर्णा वाग् ध्वन्युत्तेजकयन्त्राभिव्यक्त-ध्वन्यपेक्षया सूक्ष्मा, तथैव अन्तःकरणनिष्ठा वाक् कण्ठतात्वाद्यभिव्यक्त-ध्वन्यपेक्षया अतीव सूक्ष्मा, अनुनादकयन्त्ररूपेषु कण्ठतात्वादिषु च सा वाग् बहुगुणिता सञ्जायते। इत्थं ध्वन्यूर्जाया विद्युद्रूपेण, विद्युदूर्जायाश्च ध्वनिरूपेण परिवर्तनमस्माकं व्याकरणदर्शने परिलक्ष्यते।

यद्वा यथा अग्निनिष्ठोष्मनामिकया ऊर्जया जलं बाष्परूपेण परिणमते, बाष्पेण च इञ्जनस्य विष्टननामकं यन्त्रं गतिमत् सञ्जायते। बाष्पस्य विष्टनयन्त्रेण संयोगे सति स यान्त्रिकोर्जारूपेण विपरिणमते। यान्त्रिकोर्जायाश्च डायनामो-यन्त्रे विद्युद्रूपेण, विद्युदूर्जायाश्च काचनिर्मित-बल्वेति नाम्ना केनचित् पदार्थेन संयोगे सति प्रकाशनामकोर्जारूपेण परिणामः सञ्जायते। अयं विषयो डोनाल्डवार-कृते 'परमाणुशक्ति नामके ग्रन्थे बहुशो व्याख्यातः। एवं सूक्ष्मवागात्मज्ञाननिष्ठोर्जाया मनसा सह संयोगे सति तस्या मनोरूपेण, मानसशक्तेश्च तेजसा सह संयोगे सति तस्याः कायाग्निरूपेण, कायाग्नेश्च प्राणवायुना सह संयोगे वायुरूपेण क्रमशः परिवर्तनं सञ्जायते। सूक्ष्मवाग्संश्लिष्टमनो मनोधर्मेण दाहधर्मेण च समाविष्टो वायुर्यदा कण्ठतात्वादिस्थानं लभते, तदा तत्र कण्ठतात्वादिनिष्ठोर्जासहकारेण तस्य वायोर्ध्वनिरूपेण परिणामः सञ्जायते। यथा यान्त्रिकोर्जायाः स्वविजातीय-विद्युदूर्जारूपेण परिवर्तनम्, यथा वा आकाशात् स्वभिन्नवायुतत्त्वस्य संसृष्टिः सञ्जायते, एवं वायोरपि कण्ठतात्वादिरूपयन्त्रे स्वविजातीय-ध्वनिरूपेण परिणाम इति समवगन्तव्यम्। वायुम् अकारादिध्वन्यूर्जारूपेण परिवर्तयितुं शक्तिः कण्ठतात्वादियन्त्रेष्वेव, नान्यत्। अत एव भस्त्रिकादिवाद्येषु न तादृग् शब्दोऽभिव्यज्यते। रसायनशास्त्रदृष्ट्या भौतिकविज्ञानदृष्ट्या च स **मनोभावमापद्य** इत्यस्याः, **अन्तःकरणतत्त्वस्य** इत्यस्याश्च कारिकाया इत्थमेव व्याख्यानं कर्तुं शक्यते।

वस्तुतस्तु अयं श्रोत्रग्राह्यः अकारादि शब्दो न वायोः न वा तैजसोर्जायाः परिणामः। किन्तु शब्दस्य प्राणे बुद्धौ च या अतीव सूक्ष्मा ऊर्जा विद्यते, सैव कण्ठतात्वादिरूपानुनादकयन्त्रे स्वपरश्रोत्रग्राह्या स्थूलध्वन्यात्मना कादिभेदं प्रपद्यते। तथा चोक्तम्—

**तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता।**
**विवर्तमाना स्थानेषु सैषा भेदं प्रपद्यते॥**

—(वाक्यपदीये, ब्रह्मका० ११७)

एवञ्च सूक्ष्मध्वनिनिष्ठोर्जा एव स्थूलध्वन्यूर्जारूपेण श्रोत्रेण गृह्यते।

किञ्च विद्युन्दमाध्यमेन ध्वनियन्त्रद्वारा दूरदेशेषु वृत्तस्य यः प्रेषणव्यवहारोऽधुना दृष्टिपथं समायाति, तस्य सङ्केत ऋग्वेदे समुपलभ्यते। विद्युच्च अग्नेरेव भेद इति पूर्वं प्रतिपादितमेव। कश्चिद् याजको यज्ञाग्निं दूतरूपेण देवानां पार्श्वे गन्तुं प्रार्थयति—'हे अग्ने! त्वं दूतो भूत्वा देवान् गच्छ। तांश्च आहूय अस्माकं यज्ञे समानय' इति। तथा चोक्तम्—

**त्वं दूतो अमर्त्या आ वह दैव्यं जनम्।**
**शृण्वन् विप्रस्य सुष्टुतिम्॥**

—(ऋ० ६.१६.१०)

'अमर्त्योऽमरधर्मस्त्वं दूतो भूत्वा दैव्यं देवसम्बन्धिनं जनम् आवह, अस्मद् यज्ञे आनय। किं कुर्वन्? विप्रस्य मेधाविनो भारद्वाजस्य सुष्टुतिं

शोभनां स्तुतिं शृण्वन्' इत्येवं सायणाचार्यो व्याख्यातवान्। अस्मिन् मन्त्रे दूरदेशेषु विद्युद्द्वारा वृत्तप्रेषणस्य सङ्केतः सुस्पष्टतया समुपलभ्यते।

इत्थं रसायनशास्त्रविज्ञैः, भौतिकशास्त्रविज्ञैश्च यद् द्रव्यस्योर्जारूपेण, ऊर्जायाश्च द्रव्यरूपेण, ऊर्जानामपि परस्परं विजातीयोर्जारूपेण परिवर्तनं प्रतिपाद्यते, तत्सर्वं **सूर्य आत्माजगतस्तस्थुषश्च** इति, त्वं दूतो अमर्त्या.. इति श्रुतिप्रामाण्येन वेदमूलकमेव, न किञ्चिद् वेदाद् भिन्नं नूत्नं नाम। केवलं प्रकाशनप्रकार-नाविन्यं न वार्यतेऽस्माभिः।

( २५९ पृष्ठस्य शेषांशः )

'गोदोहं स्वपिती'त्यत्र अकर्मकधातुभिर्योगे 'देशः कालो भावो गन्तव्योऽध्वा च कर्मसञ्ज्ञक इति वाच्यमि'-त्यनेन कर्मतया कर्मलकारे 'गोदोहः सुप्यत' इति भवति, तथैव उष्ट्रासिकालक्षणस्य भावस्य कर्मणि लकारे प्रयोग इति केचिन्मतमित्यर्थः। व्यापारान्वयिनः क्रियाविशेषणस्य कर्मसञ्ज्ञा चेदत्रापि द्वितीयाबहुवचनमेव युज्येतेति।

अत्र उद्योतः—'यत्र त्वस्ति तत्कृतभेदावगमस्तत्र भवत्येव बहुवचनमित्याह भाष्ये—तिङभिहिते चापि इति। ननु उष्ट्रासिकेत्यादौ आख्यातवाच्ये भावे कथं भेदावगमोऽत आह—अथाश्रयाणामिति प्रदीपः। तत्साम्याच्चेति प्रदीपः—न ह्येकासने तावत् साम्यसंभवः तत्प्रतिपादने फलञ्चेत्यर्थः। तत्सामानाधिकरण्याच्चेति पाठेऽप्ययमेवार्थः। उपमानोपमेययोः सामानाधिकरण्यादित्यर्थः। ननु साम्यवाचकेवाद्यभावात् कथं तत्प्रतीतिरत आह—इवेति प्रदीपः। परत्र परशब्दः प्रयुक्त इति न्यायादिति भावः। प्रयोजनाभावादिति प्रदीपः—प्रकृते साम्यप्रतीत्युपपादनमेव प्रयोजनमिति भावः। यथेति प्रदीपः—पलाशरूपाश्रयानेकत्वेऽपि राग इत्येकवचनमेवेति भावः। वस्तुतस्तत्र एकजातीयरागप्रतिपादनाय एकवचनमिति बोध्यम्। किञ्च आश्रयभेदादाश्रितभेदप्रतीतेः असार्वत्रिकत्वादपि सा न भावाख्याते द्विवचनादिनियामिकेत्याह—नन्च सर्वत्रेति प्रदीपः। एवञ्च 'आसिका' इत्यादिक्रियाविशेषणं प्रथमान्तम्। क्तिन्नधिकारस्थ-ण्वुलः स्त्रीत्वस्य सत्त्वेन **सामान्ये नपुंसकम्** इत्यस्याप्रवृत्त्या न क्लीबत्वम्।

उपमानोष्ट्रासनाभिन्नानि आसनानीति बोधः। बहुत्वावधारणाच्च नैकवचनमिति बोध्यम्। कर्मणीति प्रदीपः—अत्र पक्षे आख्यातावयव आसादेः परिच्छेदकत्वनिरूपके आसनादौ वृत्तिः, परिच्छेदकत्वरूपफलाश्रयत्वात् कर्मत्वम्। दृष्टान्ते व्याप्त्याश्रयादिव। परिच्छेदकञ्च सादृश्येन। नायं भाष्यार्थ इत्याह—एवन्त्विति प्रदीपः। विवक्षान्तरे प्रदीपः—आसेः परिच्छेदकत्वरूपविवक्षाविशेषे। भावेऽपि लविधाने यदुपपादितं बहुवचनं भाष्यकारेण तन्नोपपादितं स्यादिति शेषः। एवञ्च यथा पाकप्रकारानभिसमीक्ष्य पाकावित्यादि-द्विवचनादि, एवम् आसनप्रकारानभिसमीक्ष्य 'आस्यन्ते' इत्यादिभावे बहुवचनमिति भाष्यार्थः। आख्यातवाच्येऽसत्त्वं लिङ्गकारकानन्वयित्वमेव बोध्यमिति।

एवञ्च एतादृशभाष्य-प्रदीपोद्योतसन्दर्भाः धात्वर्थक्रियायामभेदेन अन्वयिनो विशेषणस्य न कर्मसञ्ज्ञेति द्योतयन्ति। **कर्तुरीप्सिततमं कर्म** इत्यनेन कर्मसञ्ज्ञया 'अकर्मकधातुभिर्योगे' इत्यादिवार्तिकं गतार्थयितुं तदनुकूलं परिच्छेदकत्वगर्भमासधात्वर्थमवर्णयदुद्योतः इति।

( इति प्रथम-निष्कर्षः )

( २४७ पृष्ठस्य शेषांशः )

ाजेनात्र सावहितं विचार्य प्रदर्शितो राजपथः प्रं समाश्रयणीयः।

आत्मोद्धार इव लोकसङ्ग्रहोऽपि साधुसमाजस्य कर्तव्यं यो हि गृहस्थतः किमपि वसनाशनादिकं पेक्षते। तादृशापेक्षारहितेभ्यस्तु किमपि वक्तव्यं वशिष्यते। तेषां कृते 'निस्त्रैगुण्ये पथी'ति कपूर्वमेव। ये किल साधवः स्वीयभक्तजन-प्रदत्त-तेन पाठशाला औषधालयांश्च चालयन्ति, ते ंथा समच्र्याः। परं महता दुःखेन वक्तव्यं भवति सर्वे तादृशाः, नापि बाहुल्येन। यदि नाम ते ामिपानादामनेन समुद्बोधनेन समुद्बुद्धाः ीयं सर्वमपि सङ्ग्रहं प्रामाणिकतया सांस्कृतिक-स्यवर्धनकर्मणि विनियोजयेयुस्तदा 'हिन्दू-धर्मादा'-दृशः सैंहिकेयस्तान् कदापि न ग्रसेत्। मनसि पूर्णां रक्ति संयोज्य गृहस्थदत्तं सर्वमपि धनं समाजस्य, संस्कृतिसमुन्नायकानां निस्स्वानां पण्डितानां छात्राणां रुग्णानां निर्धनानामेवेति विभाज्य अस्माकं साधुसमाजो यदि जीवनस्य प्रतिक्षेत्रमधिकरिष्यति चेन्नूनं तद्देशस्य परमकल्याणाय भवेत्। अतीते भारतस्य प्रधानमन्त्री उटजे कुशासने जीर्णशीर्ण-कायस्तिष्ठन् परमं साधुभावमाधृत्यैव शासनं कुर्वन्नासीत्। तदर्थं साम्प्रतिको राष्ट्रियः पदकृतो महाकलहस्तेन स्वप्नेऽपि न क्रियते स्म। स्वामिपादा-नामनेन उद्बोधनेनास्माकं पूज्यतमः साधुसमाजः पुनरपि स्वीयं तत्पदं गृहीत्वा वाराङ्गनातोऽपि निम्नतां गतां साम्प्रतिकीं राजनीतिं शोधयित्वा राष्ट्रनेतृत्वं करिष्यति, तदा तन्नेतृत्वं न केवलं भारतराष्ट्रस्यैव, अपि तु निखिलस्य विश्वस्य कृते श्रेयःप्रेयस्साधकं भवेत्। भगवन्तं प्रार्थयामो यत्स सर्वानस्मान् सुबुध्या संयुनक्त्विति।

•

## ग्राहकेभ्यो निवेदनम्

•

अग्रिमाङ्केन सह 'सूर्योदय'स्य पञ्चचत्वारिंशत्तमं वर्षं पूर्णतां गच्छति। जनवरी (१९७०)-मासस्याङ्कः षट्चत्वारिंशत्तमवर्षस्य प्रथमाङ्को भविष्यति। अग्रिमाङ्केनैव वर्तमान-वर्षीयं प्रत्नग्राहकाणां शुल्कमपि समाप्यते। अतस्ते प्रार्थ्यन्ते यदेतदङ्कप्राप्तेः समनन्तरं शीघ्रातिशीघ्रं नववर्षस्य वार्षिक शुल्कं ५) पञ्चमुद्रात्मकं प्रेषयन्तु। तेनास्माकं व्यवस्था-कार्ये सौलभ्यं जायते, नववर्षाङ्काश्च सर्वे तेषां सुरक्षिता जायन्ते। तथैव प्रत्नग्राहकैः प्रातिस्विकरूपेण एकैको नूत्नोऽपि ग्राहको दीयेत चेदियं तेषां महती कृपा स्यात्। संस्कृत-भाषाप्रणयिनो ग्राहकाः पाठकाश्चात्र नूनमवधास्यन्तीति।

—व्यवस्थापकस्य

•

पञ्जीकृत-संख्या—एल० १८९७

# सूर्योदयस्य नियमाः

## पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश (मनीआर्डर) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः (जनवरी-अङ्कतः) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-(टिकट) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

## विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठे विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराणसी।

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२०, वाराणसी।

# सूर्योदयः

भारतधर्ममहामण्डलस्य

मासिकं मुखपत्रम्

वर्षम् ४५

अङ्कः १२

सम्पादकः

गो० न० वैजापुरकरः

दिसम्बर

१९६९

वार्षिक-मूल्यम्

५) रूप्यकाणि

प्रत्यङ्क-मूल्यम्

अर्धरूप्यकम्

## हेमन्त-वर्णनम्

हेमन्तः क्षितिपायतेऽतिरुचिरं क्षेत्रं प्रभूतायति-
प्रोद्यन्नूत्नयवाङ्कुरं मरकतप्रत्युप्तपीठायते ।
उद्दालव्यजनायतेऽलिपटली कुन्दप्रभा भासुरा
कौन्दोऽमन्दरुचिः प्रसूननिकरः श्वेतातपत्रायते ॥१॥

वासन्ती सुषमा निसर्गसुभगा ग्रीष्मोऽपि भीष्मो भृशं
नृत्यत्केलिकुलाः पयोदमलिनास्तेऽनेहसो वार्षिकाः ।
चञ्चच्चन्द्रचिता शरच्च रुचिरेत्येतेऽपि सर्वे गताः
कामोत्साहकरस्त्वमद्य भुवने हेमन्त ! विद्योतसे ॥२॥

मासो मार्ग इति प्रथामधिगतः सर्वेषु मासेष्वपि
प्राधान्यं दधदाग्रहायणिकता-सङ्केतमापद्यत ।
तस्मादेव तवर्तुषु प्रथमतां कोषेऽमरः क्लृप्तवान्
एकच्छत्रमतः प्रभुत्वमुचितं सर्वर्तुराजस्य ते ॥३॥

हे हेमन्त ! समन्ततः क्षितितले सर्वत्र शैत्यं गुणं
त्वं सञ्चारयसीति नास्त्यविदितं सर्वानुभूतं किल ।
किन्त्वस्मिन् वरिवर्ति विस्मयभरो यच्छीततापादिका
शक्तिस्ते विरहाग्निहेतिविकले कस्मादभूत्कुण्ठिता ॥४॥

'सर्वत्र प्रभुता मम, प्रभविता को वा मयी'त्थं किला-
ऽहङ्कुर्वन् जगतीतले जडमते ! हेमन्त ! किं वल्गसि ।
सर्वः कालवशाद् गुणेष्वधिकतां धत्ते तथा न्यूनतां
स्वे काले सकलो हि लब्धमहिमा वर्वर्ति सर्वोपरि ॥५॥

—स्वर्गीयाः श्री अनन्तरामशास्त्रि वेतालाः

## ग्राहकेभ्यो निवेदनम्

एतदङ्कतः 'सूर्योदय'स्य पञ्चचत्वारिंशत्तमं वर्षं प्रपूर्यते। अग्रिमोऽङ्कः षट्चत्वारिंशद्वर्षस्य प्रथमाङ्को भविता। कृपालुप्राचीनग्राहकाणां प्रदत्तं वार्षिकं शुल्कमनेनैव अङ्केन समाप्यते। अतस्तैः एतदङ्कप्राप्तेः समकालमेव अग्रिमवर्षस्य कृते पञ्चमुद्रात्मकं वार्षिकशुल्कं त्वरितं धनादेश-द्वारा प्रेषणीयम्। तेन तेषामग्रिम-वर्षीया अङ्काः सुरक्षिताः स्युः। सहैव अन्यूनं ग्राहकद्वयं नूत्नं तैर्विधास्यते चेत् पत्रस्यास्य कृते तेषां महत्साहाय्यं मन्येत। संस्कृतपत्राणां स्थितिविषये ते सर्वमपि जानन्त्येव। विज्ञा ग्राहका एव पत्राण्येतानि उज्जीवयितुं संवर्धयितुं च प्रभवन्ति।

—व्यवस्थापकस्य

## अनुक्रमः

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

४५ वर्षं ] वाराणसी, मार्गशीर्षः २०२६ : दिसम्बर १९६९ ई० [ १२ अङ्कः


## दृष्टिं पुनातु स हि दर्शनतोऽद्य दत्तः

ज्ञातुं यमात्मनि सुनिष्ठितबुद्धिमन्तः सेवापरा स्वगुरुबोधितमर्थयन्तः ।
श्रद्धान्विता भवमुमुक्षुगणा यतन्ते दृष्टिं पुनातु स हि दर्शनतोऽद्य दत्तः ॥ १ ॥

ज्ञात्वा यमात्मनि निजात्मदृशा विरक्ताः सोऽहं समाधिमृतचित्तविकारभेदाः ।
संन्यासिनो भवगतात्ममतिप्रमुक्ता दृष्टिं पुनातु मम दर्शनतोऽद्य दत्तः ॥ २ ॥

शैवाश्च यं शिव इतीह गृणन्ति नित्यं विष्णुस्तथा किल परेऽपि च विष्णुभक्ताः ।
ब्राह्माश्च सृष्टिकृदयं विधिरेव भूयो दृष्टिं पुनातु मम दर्शनतोऽद्य दत्तः ॥ ३ ॥

ईशत्रयीस्वजनघर्षणमत्र वीक्ष्य शान्त्यर्थमेव हि दधार निजैकरूपम् ।
यद्भक्तिरेव किल भक्तिरिति त्रयाणां दृष्टिं पुनातु मम दर्शनतोऽद्य दत्तः ॥ ४ ॥

कोटचादिकोटि - रविचन्द्रमसश्चकासत् स्वाचिर्बृंहत्सुखनिरामयमङ्गलात्मा ।
षड्बाहुराजदतिसुन्दरकोमलाङ्गो दृष्टिं पुनातु मम दर्शनतोऽद्य दत्तः ॥ ५ ॥

माला-कमण्डलुलसद्-विधिरूपमेतद् विष्णुस्वरूपमति यद् धृतशङ्ख-चक्रम् ।
शैवं तथैव मुखतोऽपि हि यत् त्रिरूपं दृष्टिं पुनातु मम दर्शनतोऽद्य दत्तः ॥ ६ ॥

—समर्थानुगृहीत-महात्मा श्री श्रीधरस्वामी—

# श्री महर्षि-ज्ञानानन्द-चरितं महाकाव्यम्

## —स्वर्गीयाः श्री विन्ध्येश्वरीप्रसादशास्त्रिणः—

( पञ्चदशः सर्गः )

अतो मदीय-प्रतिमा-प्रतिष्ठिति-र्भवेद् ध्रुवं वैष्णवशास्त्र-सम्मता ।
समर्थकानामपि दर्शनार्थिनां तथैव कल्याणकारी भवाम्यहम् ॥ ३१ ॥

३२. न वाम आचार इहत्यभूतला-
ऽनुकूल आस्ते सुसमादृतोऽपि सन् ।
वसाम्यहं धामनि नैजवैष्णवी-
स्वरूपमभ्यर्हितमत्र बिभ्रति ॥

३३. स वैष्णवाचार इहास्ति मे प्रियो
विधिं तदीयं ह्यनुसृत्य सर्वथा ।
यदि प्रतिष्ठा मम सम्भवेत्तदा
भवेय - मार्तार्ति - विनाशकारिणी ॥

३४. व्रजे वसन् वैष्णवमाचरन् व्रतं
प्रपद्यते शाश्वत-धाम मामकम् ।
समस्त-शास्त्रादृत - मेतदीरितं
न रोचते मे भुवि वेदबाह्यता ॥

३५. न चेदनुज्ञा मम पालयिष्यते-
ऽन्यथा प्रतिष्ठा मम कारयिष्यते ।
अमङ्गलं जानपदं दुरत्ययं
ह्यपोह्यमेतद् विधिना न केनचित् ॥

३६. इमं तु सन्देशमवाप्य मातृकं
प्रसन्नचेताः स्वसमाधि-संश्रुतम् ।
नतेन मूर्ध्नाऽञ्जलिमावहन् स्वकं
तदाऽम्बिकेयं यतिरग्रहीद् वचः ॥

३७. वचस्तदुक्त्वा श्रुतिसार-संभृतं
परांम्बिका-ऽलौकिक-मूर्तिधारिणी ।
सपद्यदृश्या प्रबभूव सा तदा
यतेः समाधिः प्रशशाम सोऽद्भुतः ॥

३८. मनःस्थ-तच्चिन्मय-मूर्तिचिन्तने
निशा व्यतीयाय च राजयोगिनः ।
समुत्थितः प्रातरयं निजासनाद्
गुरोः पदाब्जं प्रणिपात्य सादरम् ॥

३९. समाधिवार्तां निखिलान्यवेदयद्
गुरुः समाकर्ण्य तु तां मुदान्वितः ।
विदः समस्तान् द्रुतमाह्वयत् सुधीः
परांम्बिकाज्ञां विदितां चकार च ॥

अशेष-वैष्णव्युपचारसम्पदो विचित्य शास्त्रप्रतिपादितास्तु ताः ।
स्तुता पराम्बाऽखिललोकविश्रुता प्रतिष्ठिताऽभूत् प्रथितैः सुधीश्वरैः ॥ ४० ॥

( क्रमशः )

सम्पादकीयम्

# तथाकथित-साम्प्रदायिता-निवारण-प्रश्नः

दिसम्बरमासस्य चतुर्थ-पञ्चमदिनाङ्कयोः भारतीय-लोकसभायां देशस्य साम्प्रदायिक-स्थितिविषये गभीरो विचारः समभवत्, तस्यैव मासस्य अष्टमे दिनाङ्के च स्वराष्ट्रमन्त्रिणा स्वीयस्पष्टीकरणेन सह स उपसंहृतोऽपि । तत्र प्रधानतया कांग्रेससंसदीयदलस्य (सङ्घटनस्य) अध्यक्षाणां श्री मोरारजी देसाई महोदयानां स्वराष्ट्रमन्त्रिणाञ्च श्री चह्वाण महोदयानां भाषणे समुल्लेख्ये । देसाई महोदयैः स्वतन्त्रताप्राप्तेः विगतद्वाविंशतिवर्षैः देशविभाजनोत्तरमपि साम्प्रदायिकतायाः समुन्मूलने परिदृश्यमानस्य असाफल्यस्य उत्तरदायित्वं शासनोपरि निक्षिप्तम्। तेषां मते तादृशोपद्रवकारिणां कृते कठोरतमदण्डनिर्धारणे शासनेन प्रमदितम् । न केवलं प्रमदितमेव, राजनैतिकस्वार्थसाधनाय निर्वाचनादिप्रसङ्गेषु ते सविशेषं प्रोत्साहिता अपि तेन । अस्य महारुज उपशमाय च तैः सर्वेषु भारतीयेषु मूलग्राहिणो भारतीयताभावस्य सर्वाङ्गीणं संवर्धनमावश्यकं निर्धारितम् । स्वराष्ट्रमन्त्रिणः पुनः स्वीये स्पष्टीकरणे साम्प्रदायिकोपद्रवाणां वृद्धेः कारणं धार्मिकोद्देश्यसाधनाय राजनीतेरुपयोगं घोषयन्तः सम्प्रति बहुत्र श्रूयमाणमल्पसंख्यकानां भारतीकरणस्य प्रस्तावं तेषां मानसिकावस्था-विकृतेः हेतुत्वेन परिघोषितवन्तः ।

वस्तुत इयं तथाकथिता साम्प्रदायिकता-पिशाचिनी कूटनीतिज्ञानां वैदेशिकानामांग्लशासकानामेव दुहिता । तैः स्वार्थसाधनाय स्वशासनारम्भत एव अस्या अवतारः कृतः । देशप्रेमतः स्वार्थसाधनं स्वप्रतिष्ठाप्रस्थापनं चाभ्यर्हिततमं मन्यमानैः स्वकीयैरपि देशद्रोहिभिः कतिपयैः पुनः सा पोषिता संवर्धिता च । अवधेयमेतत् यत् सनातनवैदिकधर्मानुयायिनां मूलवसतिभूतं राष्ट्रं सदपि भारतं वर्षं सर्वेभ्यो राष्ट्रेभ्यः स्वभावतः परं सहिष्णु वर्तते । अत एवात्र सर्वथा विभिन्नधर्मानुयायिनो यवन-ख्रिष्टादयोऽवान्तरधर्मीयाश्च भूयसा मतवैभिन्न्यं धारयन्तः सिखाः बौद्धाः जैना अपि स्व-स्वधार्मिकविश्वासानुसारं चिरात् सुखेन जीवनं यापयन्तो निवसन्ति । यदा केनाप्युपासनासम्प्रदायेन बलादपरस्मिन् उपासनासम्प्रदाये हस्तक्षेपो विधीयते, मूलभूतं वा हिन्दूधर्मं विनाशयितुं प्रयत्यते, तदैव कथञ्चन प्रतिक्रियते सः । अन्यथा स्व-स्वविचारानुसारं स्वाभिमतोपास्तौ सर्वोऽपि पूर्णस्वातन्त्र्येण अधिकृत आसीत्, अद्यापि वर्तते च । मध्यकाले पुनर्वैदेशिकैः यवनै राष्ट्रमिदमाक्रम्य बलात् स्वायत्तीकृतम् । तेषां राजत्वकाले एतद्देशमूलधर्मीयाणामिव सर्वेषामपि तत्तद् धर्मावलम्बिनां कियान् लाभोऽभवदिति तु इतिहासे प्रथितमेव । राष्ट्ररक्षार्थं वैदेशिकैः सह प्रस्तुते स्वातन्त्र्यसङ्गरे हिन्दूधर्मावलम्बिभिरिव यावनाद्यन्यान्यधर्मीयैरपि यथा हार्दिकैक्यसहयोगः प्रदत्तस्तत्सर्वं नेतिहासविदां तिरोहितम् । परमनेन दीर्घसङ्घर्षेण देशस्यास्य मूलसंरक्षकाणां शक्तिर्भूयसा विशकलिता । राष्ट्रदौर्बल्यस्यास्य अभिमतमवसरमभिलक्ष्य वैदेशिका आंग्लशासकाः सपद्येव स्वीयकूटनीतिप्रावीण्येन जर्जरितं राष्ट्रमिदं स्वायत्तीकर्तुं दुरभिसन्धिं संयोजयामासुः । तदाऽपि मूलभूतहिन्दूधर्मानुयायिनः राणाप्रताप-शिवाजी-पेशवा-प्रभृतिशासकाः मुहम्मदशाहादयो यवनादिधर्मानुयायिनः शासका

नेतारश्च मिलित्वा तेषां यथा प्रतीकारमकुर्वन्, तदपि इतिहासे सुस्पष्टम्। उपासना-धर्मादिकृतायां भिन्नतायामपि राष्ट्रियैक्यविषये सर्वेषां भारतभू-निवासिनामविशेषेण एतादृशमभूतपूर्वमुत्साहं दृष्ट्वा वैदेशिका आंग्लशासकाः क्षणमतितरां स्तब्धा अभवन्। परं कूटनीतिपाटवेन तैरत्र अपर उपायश्चिन्तितो राष्ट्रसंरक्षणनिदानभूतस्य ऐक्यस्य स्फोटनाय। इमामेव पृष्ठभूमिमाश्रित्य तथाकथित-साम्प्रदायिकता-पिशाचिनी देशेऽस्मिन् पदमकरोत्।

कूटनीतिसञ्चालने नूनमेते वैदेशिका आंग्लशासका नितान्तं सफलाः। कथमन्यथा जिनामहोदयसदृशो मूलतः सर्वथा राष्ट्रवाद्यपि कठोरतमः सम्प्रदायनिष्ठो भूत्वा पाकिस्तानाख्यमपरं प्रतिस्पर्धि राष्ट्रं संस्थाप्य साम्प्रदायिकता-पिशाचिनीमिमां सुस्थिरीकर्तुं तेषां साधनतामुपगतः। वैदेशिकानामांग्लशासकानां कृपया (?) स्वीयधन-मानप्रतिष्ठावृद्धिं कुर्वतां स्वार्थसाधनैकव्रतानां कतिपयानां श्रीमतां यवनश्रेष्ठिनां भूमिपतीनां खानबहादुरेत्यादि-विरुदविभूषितानां सहयोगेन 'मुसलिम-लीगा'ख्यं सङ्घटनं तैर्निर्मापितम्। सङ्घटनमिदं पर्यायतो भारतीयस्वातन्त्र्यमहाभियानस्य परिपन्थिसङ्घटनरूपेण अवतारितं कूटनीतिज्ञैरिति कथने नातिशयोक्तिः स्यात्। यतो हि सङ्घटनस्य तस्य सर्वोऽपि कार्यक्रमः भारतीय - राष्ट्रिय - महासभायाः कांग्रेससंस्थायाः स्वातन्त्र्यमहाभियाने विघ्नरूपेणैव तदा तदा तटस्थैरवलोकितः। लीग-सङ्घटनेनानेन परिपीडितानां निर्बलानां साहाय्यपात्राणां यवनानां कियानुपकारः कृतः? दुःस्थितितस्तेषां वास्तवः समुद्धारस्तेन न कदापि विचारितो नापि कृतश्च। केवलं मृगमरीचिकां प्रदर्श्य हिन्दूसम्प्रदायविषये घृणिततमां द्वेषभावनां च संवर्ध्य तेषामावश्यका प्रश्नाः सदैव दूरे स्थापिताः, संख्याबलेन च तेषामात्मनो हितं राष्ट्रद्रोहिणां वैदेशिकं-शासकानां शासनसुस्थितिश्च तैर्नूनं साधिता। यवनसमाजस्य अशिक्षाबाहुल्येन तेऽत्र बहुशः सफलमनोरथा अप्यभवन्।

अत्रान्तरे भारतीयस्वातन्त्र्यलाभाय अतितरां समुत्सुकैः हिन्दू-मुसलिमादि-राष्ट्रियनेतृवरैः कृत्याया अस्याः शमनं तत्प्राथितवरपूरणेन समारब्धम्। परं काम इव किम्, ततोऽप्यधिकं कृत्येयं प्रार्थितवरपूरणेन क्रमशो वर्धमाना विकरालं रूपं धारयामास। स्वातन्त्र्यदानसमये देशस्य विभजनम् अस्या एव दुर्विलसितम्। आंग्लशासकैः भारतं तु स्वतन्त्रं कृतम्, परं सहैव नियतरूपेण साम्प्रदायिकता-पिशाचिनीयं देशस्यैकस्मिन् प्रदेशे द्विराष्ट्ररूपेण दृढं प्रतिष्ठापिता। तस्या इदं दुर्विलसितमस्माभिरद्यापि स्वातन्त्र्यप्राप्तेः द्वाविंशतिवर्षोत्तरमपि तथैव ससन्तापमनुभूयते।

स्वतन्त्रभारतराष्ट्रेण स्वदेशस्य अङ्गभङ्गेन पञ्चपञ्चाशत्कोटिमितया भूयस्या दक्षिणया च साम्प्रदायिकता-पिशाचिन्या अस्या बलिः कृतः। संविधानद्वारा धर्म-जाति-लिङ्गैरपेक्ष्येण प्रत्येकनागरिकस्य सर्वविधसमुन्नयनस्य लक्ष्यं संघुष्टम्। तदनुसारमेव केन्द्रीयमन्त्रिपदतः सर्वोच्च-राष्ट्रपुरुषपदेऽपि अल्पसंख्यक-सम्प्रदायानुयायी प्रतिष्ठापितः। समये समये सर्वविधा सुविधा अल्पसंख्यकेभ्यः प्रदत्ता राष्ट्रेणानेन, अद्यापि च दीयन्ते। सत्येवमपि देशेऽत्र अहरहः साम्प्रदायिकः कलहो वर्धते। सत्यमेतत्, कलहो हि पक्षद्वयेन जायते। अतोऽपरपक्षीयाणामपि अविवेकिनामत्र दोषभाक्त्वं नापलप्यते। परं सर्वविधसुविधाप्रदानेनापि अल्पसंख्यकानां कतिपयानामसन्तुष्टिः स्फुटमेव तेषां कृतघ्नतां परप्रभावावेशितां च व्यनक्ति। स्पष्टमेतत् भारतमेकं चिरन्तनं स्वतन्त्रं राष्ट्रम्। तदीया चैका सुनिर्धारिता अविशेषेण विश्वमाङ्गल्यसाधिका विश्वबन्धुत्वोपोद्बलिका संस्कृतिः। तां संस्कृतिं समादृत्य देशञ्चामुं स्वकीयत्वेन मत्वा

तद्धिताविरोधिहितसाधका एवात्र निवसितुमर्हन्ति । एतद्विपरीतः कोऽपि कियानपि श्रेष्ठतरः स्यान्नाम, नात्र देशे निवसितुं तदीयसुविधां वा समुपभोक्तुं न प्रभवति । राष्ट्रवादमन्तरा काल्पनिकमव्यावहारिकं वैश्विकत्वं तद्राष्ट्रस्य सार्वभौमत्वं तदुन्नयनप्रयास-निष्ठां वा सर्वथा विरुणद्धि । अन्ततः कार्यमात्रस्य क्षेत्रं परिसरवर्तिप्रदेश एव तस्य तस्य कृते भवति । आदर्शक्षेत्रं पुनरखिलं विश्वम् । भारतीया संस्कृति-रादर्शक्षेत्रे सर्वा वैश्विकीः संस्कृतीरतिशेते । जीवमात्रं परमपितुरमृतस्य पुत्रत्वं ख्यापयन्तीयं कथङ्कारं कया-ऽपि दृष्ट्या केनापि सङ्कुचिता वक्तुं शक्यते । अतस्तदनु-सरणं प्रत्येकस्य भारतीयस्य अनिवार्यं कर्तव्यं भवति ।

अन्यच्च, कोऽपि धर्मः स्यान्नाम, कथमपि परधर्मं घ्नन्तुं विघटनं वा कर्तुं नोपदिशति । तथाकर्तुः धर्मत्व-मेव सन्दिह्यते । धर्मः केवलं व्यक्तिगतोपास्तेर्विषयः । राष्ट्रं पुनरेकराष्ट्रियत्वेनैव प्राणीति । अतस्तत्परि-पन्थिनः कामं स्वात्मीयाः स्वदेशीयाः सन्तोऽपि पथ-भ्रान्ता एव । तेषां सेयं पथभ्रान्तिः राष्ट्रवादिना नूनं परिहरणीया, निर्भ्रान्तांश्च तान् विधाय स्वात्मसात्करणं तस्यानुपेक्षं कर्तव्यं नाम । प्रकाशेऽस्मिन् भारतराष्ट्रस्य विशुद्धराष्ट्रियत्वं सुस्पष्टम् । परोत्कर्षसहने दुराचारिता-बुद्धिमुपजनयन्तो मत्सरिणः कूटनीतिज्ञाः स्वार्थसाधवो हि एतत्तत्त्वं कदापि न मन्वते । अत एव तैः प्रत्येक-स्मिन् राष्ट्रे इदं सामञ्जस्याधायकं तत्त्वं विनाश्य अनुचितरूपेण तद्राष्ट्रगतं भौतिकं सौख्यं स्वात्मसात्कर्तुं प्रयत्यते । तादृश एव यत्नो राष्ट्रस्यास्य विषये आंग्लशासकानां पूर्वेषामभवत् । अत एवास्माकं देशे तथाकथिता साम्प्रदायिकता-पिशाचिनी उन्मुक्तं नग्न-ताण्डवमकरोत् ।

धार्मिकोन्मादेन राजनैतिकदृष्ट्या स्वार्थसाधि-कया निम्नतरोया अस्या दृष्टेः 'साम्प्रदायिकता'-पदेन व्याहारोऽपि अस्माकं चिरन्तनसंस्कृतेः मूर्तिमान-पमान एव ! उच्चतमस्य भारतीयश्रद्धाबिन्दोर्निःशेषं प्रोञ्छनं हि तत् । 'सम्प्रदाय'-शब्दः खलु अस्माकं वाङ्मयेऽभ्यर्हिततमः । अनादिकालतः प्रचलन्तीं शुभां कामपि परम्परामभिप्रैति । स हि वेदानामपौरुषेयत्व-साधने हि प्रामुख्येन प्रभवति । शास्त्रचिन्तका जानन्ति यद् 'वेदा अपौरुषेयाः सम्प्रदायाविच्छेदे सति अस्मर्यमाण-कर्तृकत्वात्' इत्यनुमानेन वेदानामपौरुषेयत्वं साधयन्ति शास्त्रकृतः । एतादृशस्य सर्वथा श्रद्धास्पदस्य 'सम्प्र-दाय'-शब्दस्य साम्प्रतिके निम्नतमे कृत्यविशेषे प्रयोगं कोऽपि शास्त्रविश्वासी कथं सोढुं प्रभवेत् ? अत एव 'साम्प्रदायिता'-शब्दात् पूर्वं वयं 'तथाकथिते'त्युपपदं प्रयुञ्जामहे । अस्माकं शासनं नेहारुच देशादस्मात् साम्प्रदायिकतां समूलकाषं कषितुमहरहः प्रयतन्ते । वयन्तु साम्प्रदायिता-शब्दमप्यमुं तादृशसङ्कुचितार्थतो वियोक्तुं दृढमुत्साहं बिभरामः । अघटितघटनापटीयान् भगवानस्मान् तथा बुद्ध्या संयुनक्तु यथा वयमचिरा-दस्य पावनतरस्य शब्दस्य घृणितेऽस्मिन्नर्थे प्रयोगेण सर्वथा विरताः स्याम ।

इत्थं विस्तरशो विचार्यमाणे राष्ट्रप्राणपदं दूषयन्ती तथाकथिता साम्प्रदायिकता-पिशाचिनीयं देशेऽस्मिन् सर्वथा शशविषाणायितैव कार्येत्यविप्रतिपन्नमेव । सत्ये-वम् अहमदाबादादि-भारतीयनगरेषु साम्प्रतमहरहः सा प्रोन्मत्ता भूत्वा भीषणं नग्नताण्डवं विदधती दरी-दृश्यते । कथमस्य निरोधः करणीय इति महान् यक्षप्रश्नः । भारतीयलोकसभायामत्र विषये यावान् विचारोऽजायत, प्रायः सोऽपूर्णः पल्लवग्राही एव वा वक्तव्यो भवति । विकारस्य वास्तविकं निदानं मूलं वा तेन न संस्पृष्टं यत्र तीव्रतरप्रहारेण रुगियं निश्शेषा क्रियेत, विषवृक्षो वाऽयं सर्वथा छिन्नमूलो जायेत ।

स्पष्टमेतत्, यदियं पिशाचिका वैदेशिकैः कूट-नीतिज्ञैरेव बुद्ध्या समुल्लासिता, वैयक्तिकस्वार्थ-साधकैश्च दृढं परिपोषिता । अद्य तु तेषां तादृशं

स्वतन्त्रमेव राष्ट्रं प्रकटीभूतं यस्य जीवनमेव वृत्तिरियं साम्प्रदायिकतायाः। द्वाविंशतिवर्षोत्तरमपि तद्-राष्ट्रं लोकतान्त्रिकं न संवृत्तम्, यस्य विशालकाये एकस्मिन् भागे ( वर्तमानभारते ) लोकतन्त्रं फलितं पुष्पितञ्च दृश्यते। तत्र शासनस्य सर्वे प्रग्रहाः वैयक्तिकमहत्त्वाकाङ्क्षावतामेव हस्तेषु निबद्धाः सन्ति। केवलं भारतराष्ट्रद्रोह एव तेषां चरममुद्दिष्टम्। भारतराष्ट्रस्य असीमक्षमतायां सुदृढामर्गलां स्थापयितुं कूटनीतिज्ञैरवतारितं राष्ट्रमिदं द्वारीकृत्य विश्वराजनीतौ सर्वथा तटस्थमस्माकं राष्ट्रं बलात् स्वनीत्यनुसारि विधातुं विश्वस्य प्रधाना राजशक्तयोऽद्य न सक्रिया इति को नाम साम्प्रतिक-राजनैतिक-गतिविधीनां गभीरविचारको वक्तमुत्सहेत? फलतः स्वार्थसाधनाय तैः साम्प्रदायिकतावतारस्यास्य राष्ट्रस्य पोषणमपि यद्विधीयते, तदपि पर्यायतः साम्प्रदायिकताया एव पोषणम्। तेषां बलेन बलवदिदं राष्ट्रं प्रत्यक्षतस्तु काश्मीर-कच्छरन-फरक्का-जलबन्धादीन् नैकान् असमाधेयान् विवादान् उपस्थापयत्येव। भारतराष्ट्रत आक्रमणस्य कूटभयं पुरस्कृत्य प्रमुख-वैश्विकशक्तिभ्यः स शस्त्रसामग्रीसङ्ग्रहमपि भूयसा करोति। नैतावदेव, प्रच्छन्नरूपेण भूयसा स्वकीयान् चारान् गुप्तरूपेणाऽत्र संप्रेष्य अत्रस्थं सर्वं राष्ट्रियं गुह्यमप्यवगन्तुं तेन प्रयत्यते। सामरिकमहत्त्वपूर्णानि मानचित्रादीन्यपि अपह्रियन्ते।

इतोऽन्यद् अत्रस्थाः समधर्मीया निर्धना अशिक्षिता अल्पविवेकिनो जना अपि प्रक्षोभ्यन्ते। तेषु किल ये धर्मान्धाः, अतीतवैमनस्येन कलुषितस्वान्ताः, विवशतोऽत्र निवसन्तोऽपि परराष्ट्रस्नेहेन प्रभावितास्ते नूनमेतेषां दुरभिसन्धेर्वाहनानि भवन्ति, कामं ते परिगणिता एव किं न स्युः। इत्थं सर्वं विस्फोटकमुपकरणजातमेकीकृत्य क्षुद्रतम-साधारणघटनामाश्रित्य तैर्विप्लवः प्रारभ्यते। अविवेकिनोऽशिक्षिताश्च उभयपक्षयोर्भवन्ति। अपरपक्षीया अपि तादृशाः साहजिकेन स्वभावेन राष्ट्रप्रेम्णा वा परकीयैरारब्धस्य विप्लवस्य यथातथा प्रतीकारं समाचरन्ति। इत्थं प्रारभ्यमाणस्तथाकथितः साम्प्रदायिकोपद्रवः क्रमशो भीषणतां याति, राष्ट्रस्यास्य विपुलां जन-धन हानिं च विदधाति।

समस्तेनापि सूक्ष्मेणानेन विमर्शेण स्फुटमिदं यदत्र स्वतन्त्रे भारते जायमानाः सर्वे भीषणतराः साम्प्रदायिकोपद्रवाः प्रतिवेशिनां परराष्ट्राणामेव साक्षात् परम्परया वा प्रेरणाप्रसूताः। प्रतिवेशि-पाकिस्तानराष्ट्रं पुनस्तदर्थं कृतसङ्कल्पमिव दृश्यते। अन्यथाऽत्र निवसतां हिन्दू-मुसलिम-ख्रिष्टादिधर्मीयाणां कृते शासनद्वारा समाजद्वारा च सर्वत्र क्षेत्रेषु समानसुविधावसरे सत्यपि किमिति सम्प्रदायविशेष उत्पाताय प्रसरेत्? स्वात्मनोऽपौविध्यमपि अविगणय्य परेभ्यः समानसुविधाप्रदातारो वा किमिति तान् क्षुब्धान् कर्तुं प्रवर्तेरन्? अहमदाबादस्य साम्प्रदायिकोपद्रवः पुनः स्पष्टतः पाकिस्तानराष्ट्रद्वारा चिरात् परिपीडितानां श्री सीमान्तगान्धि खान अब्दुल गफ्फार खां महाभागानां भारतागमनस्य तत्र स्थले-स्थले तेषां जायमानस्य हार्दिकभव्यस्वागतस्य च स्पष्टमीर्ष्यामत्सरात्मकप्रतिक्रियारूप एव। रबात-सम्मेलने भारतनिमन्त्रणप्रभवेर्ष्याया एव फलम्। अत एव तत्र सम्मेलने भारतस्य तथाविधः अभूतपूर्वोऽपमानः कृतस्तेन। स हि स्फुटं जानाति यद् धर्मनिरपेक्षं भारतं राष्ट्रं विश्वस्य पुरतो बहुसंख्यकस्य मुसलिमसमाजस्य निर्विवादं सफलः प्रतिनिधिः संसिद्ध्येत चेत्, कियता कालेन स्वयं तद्राष्ट्रस्य सत्ता तदीयैरेव धर्मावलम्बिभिः खण्ड्येत्। पुनश्च देशममुमखण्डं विधाय पूर्ववत् हिन्दवः, मुसलिमधर्मानुयायिनः, ख्रिष्टीयादयश्च सुखेन सौहार्देन सभ्रातृत्वेन चात्र निवसन्तोऽतीतस्वर्णिमयुगवद् भारतराष्ट्रं विश्वस्य चारित्रिकजगद्गुरुत्वपदे समभिषिञ्चेयुः।

अन्यदपि प्रतिवेशि-चीनराष्ट्रं चिराद् भारतद्रोहं समाचरन्नास्ते। तद्धि विश्वस्मिन् एकच्छत्रं स्वकीयं साम्यवाद-साम्राज्यं प्रसारयितुं प्रयतते। एशियाद्वीपे प्राकृतादिसर्वदृष्टिभिः सर्वथाऽऽत्मनिर्भरं चिरन्तन-संस्कृतिसंस्कृतं स्वतन्त्रं भारतराष्ट्रं तस्य तादृशं दुरुद्देश्यं सफलयितुं महत्तरमन्तरायायितमिति कृत्वा तमेव निगलितुं तन्नैकविधं कूटचक्रं परिचालयन्नास्ते। भारतद्वेषिणा पाकिस्तानेन सह तस्य मैत्री संवृत्ता। अत उभेऽपि राष्ट्रे भारतराष्ट्रस्य स्वत्वापहरणाय सक्रिये। एतस्य साम्यवादि-चीनराष्ट्रस्य हस्तका अस्माकं देशे साम्यवादिसङ्घटनरूपेण पूरायिताः, ये च पाकिस्तान-राष्ट्रहस्तकानां साम्प्रदायिकतोन्मादप्रसारे सर्वविधं साहाय्यं विदधति। केरलप्रदेशे मालापुराख्यस्य मुसलिमबहुल-नूत्नस्वतन्त्रमण्डलस्य निर्माणमेव जाज्वल-मानमस्य निदर्शनम्। साम्प्रदायिकता-प्रोत्साहनाति-रिक्तमेते स्वतन्त्ररूपेण 'नक्सलवादी, माओ जयतु' इत्यादीनि हिंसकाभियानान्यपि चालयन्त्येव यैरद्य अस्माकं देशः सर्वथा अरक्षित इव संवृत्तः। कांग्रेस-महासभायाः पारस्परिकविवादोत्तरं भारतशासनेन तत्सञ्चालकैश्च स्वपद-स्थैर्याय तैः सङ्गमय्य ते प्रोत्साह्यन्ते इति महच्चिन्तास्पदं वस्तु। प्रसङ्गागतं चीनराष्ट्रानुयायिनां साम्यवादिनां राष्ट्रविध्वंसकं रूपं निरूपयतामस्माकमयमेवाशयो यदत्र या तथाकथित-साम्प्रदायिकता उन्मुक्तं नृत्यति, तत्प्रेरकाणि नूनं परकीयराष्ट्राण्येव। अतस्तस्या उन्मूलनप्रसङ्गे अस्यापि चिकित्सा कथमप्युपेक्षितुं न शक्या।

तदेवं तथाकथित-साम्प्रदायिकतायाः सनिदान-प्रसारविषयकनिरूपणोत्तरं समासतस्तन्निवारणविष-येऽपि विचार्यते। सर्वप्रथमं साम्प्रदायिकतानिवारणाय बद्धपरिकरस्य शासनस्य सर्वप्रथमं कर्तव्यमिदं यद-चिरादेकामुपसमितिं संस्थाप्य देशे निभृतं प्रसृताः पाकिस्तानहस्तका अन्विष्य।न्विष्य निश्शेषं देशबाह्याः कार्याः। तेषां समर्थकाश्च सर्वे जनाः सङ्घटनानि वा प्रतिबद्ध्यानि। अत्र शासनेन मनागपि न प्रमदि-तव्यम्। ये साम्प्रदायिकतायाः प्रचारं कुर्वन्ति ते कठोरेण नियमेव नियम्याः। ततः परम् उभयसम्प्रदायानां लघूनि मण्डलानि सङ्घटय्य तानि च तत्तत्सम्प्रदायीयजनसाधार-णेषु संप्रेष्य तत्र एकराष्ट्रियत्वभावो जागरितव्यः। ते प्रबोध्याः—'धर्मो नाम वैयक्तिकसमुद्धारस्य साधनम्। कोऽपि धर्मोऽपरधर्मम् असहिष्णुतया न पश्यति। भारत-राष्ट्रे एव ते जाताः, अत्रैव तेषामभ्युदयो निःश्रेय-सश्च। उभावपि सम्प्रदायौ मिलितौ चेत्कापि शक्ती राष्ट्रमिदं पराभवितुं न प्रभवेत्। तेषां जनं जीवनं हितञ्च अनेनैव राष्ट्रेण निर्विशेषं सम्पाद्येत', इत्यादि।

वस्तुतस्तथाकथित साम्प्रदायिकता-निवारणस्य महत्तम उपायो नाम अविशेषेण निखिल भारतीयानां स्व-स्व-सम्प्रदायीय-धर्मविषयिणी दृढनिष्ठैव। धर्म-विषयक-दृढनिष्ठावतां जनानां परधर्मसमादरस्य आनुषङ्गिकत्वात्। अतः प्रत्येकेन भारतवासिना स्वस्वधर्मविषयेऽनिवार्यतो दृढनिष्ठवता भाव्यमेव।

अन्यच्च, रोगस्यास्य अमोघ उपायो नाम विभक्तस्य एकीकरणमेव। नूनं तद्धि दुष्करतरं कार्यम्; तथापि असम्भवं तु तत्कदापि नास्माभिर्मन्यते। यदा पाकिस्ताननिवासिनी निरागसा साधारणजनता सुस्पष्टमिदं पश्येद् यदस्मद्वर्तमानशासकानामपेक्षया भारतीयाशासकेभ्य एव अस्माकं धन-जन-मानप्रतिष्ठा-जीवनादीनां सुरक्षाधिक्यं तदा ते सहजत एवास्मभ्य आमिलिष्यन्ति। परमेतदर्थमस्माकं वर्तनेन सर्वथा स्नेहमयेन आदर्शमयेन च भाव्यम्। अत्रस्था अल्प-संख्यका एव यदा इत्थं विश्वसिता भविष्यन्ति तदैव तत्रस्था जनता आकृष्टा भवेत्। अस्मद्राष्ट्रियाः पाकिस्तानगताश्च भिन्नधर्मीयाः स्वभावत शुद्धाः। राजनैतिक-वैयक्तिकस्वार्थसाधकैरेव तेषां चेतांसि विकृतीकृतानि। तेषां सविधे अहिंसा-सत्यपरायणा-त्यागमूर्तयो यदा सङ्गच्छेयुः, सक्रियं प्रबोधयेयुश्चेदियं कृत्या सहजत एव विलयं गच्छेत्। शासनप्रयत्ना-पेक्षया सामाजिकानामयं प्रयास एवात्र अतिशेते। तदर्थं सर्वैः स्वयं धर्मनिष्ठैर्भूत्वा परधर्मादरः करणीयः। धर्मनिष्ठाया व्यापकप्रसारेण साम्प्रदायिता-पिशाचिनी तु विलयं गच्छेदेव, जडवादिनो हिंसारताः साम्यवादि-नोऽपि सहजतो निवारिताः स्युः, येषां प्रभावेण राष्ट्र-मिदमद्य सर्वथाऽरक्षितमिव संवृत्तम्। भगवन्तं प्रार्थयामो यत्सः अघटितघटनापटीयान् स्वीयं प्रेष्ठतमं भारतं साम्प्रदायिकता-पिशाचिनी-प्रभावविहृतं कुर्वन् पुनरप्यखण्डरूपेण संस्थाप्य विश्वशान्तिं साधयत्विति।

# रस-स्वरूप-विमर्शः, भक्तिरसश्च

## —श्री पूज्य करपात्रस्वामिनः—

तद्भुजाच्छादितः तदेकनिरुद्धपरस्परहृदयस्थ-भावरूप उभयोभयभावात्मा उभयरसात्मा च परस्पर-हृदयभावाब्धिचन्द्ररूपः। स च स्वामिनीसहित एव पूर्णरसात्मकः, तस्याऽऽलम्बनविभावद्वय-संयोग-निष्पन्नत्वात्।

एतादृशे तु पुलिने त्रिभङ्गललितं हरिम्।
बर्हिपिच्छशिरोभूषं सरोजसदृशाननम्॥
चञ्चलारक्तनयन - मलकावृतभालकम्।
श्रुतियुग्मलसच्छीमन् - मकराकृतिकुण्डलम्॥
दिव्याङ्गरागललितं सर्वाभरणभूषितम्।
पीताम्बरावृतं श्रीमद्वनमालाविराजितम्॥

पञ्चपर्वाया अविद्याया अपनोदनाय विद्याऽपि पञ्चपर्वैव अपेक्षिता। साऽपि निम्नलिखितश्लोके निरूपिता—

वैराग्य-साङ्ख्य-योगौ च तयोर्भक्तिश्च केशवे।
पञ्चपर्वेति विद्येयं यया विद्वान् हरिं विशेत्॥

शुद्धाद्वैतरीत्या तदर्थस्तु—भगवद्भिन्नेषु रागाभावो वैराग्यम्। रसात्मकत्वेन पुरुषोत्तमज्ञानं साङ्ख्यम्। चित्तस्य तदेकपरत्वं योगः। भगवद्विरहे परमक्लेशानुभवः तापः। भुक्त्यादिनैरपेक्ष्येण भगदासक्तिः भक्तिः। सरसः श्रृङ्गारात्मा भगवानेवात्र ध्येयः।

तत्र वेणुगानेन स्त्रिय उद्बोधिताः, गुणगानेन च भगवानुद्बोधितः। आधिदैविकः स्मरोऽपि लीलामध्यपातित्वात् मानापनोदनादिकार्यार्थं प्रबुद्धः। भगवांश्च नटवरवपुः विप्रयोग-संप्रयोगरक्षात्मकः। नृत्यन्मयूरानुकरणत्वात् धृतबर्हापीडत्वेन उद्बुद्धरसस्वरूपः। कर्णिकारस्थापनेन उच्छलितरसभावेन पीताम्बरेण च गुप्ततया सम्पादितरसताकः। वैजयन्तीवनमालोभयवैशिष्ट्येन श्रृङ्गारोपयोगियावद्रससम्बन्धि-यशोद्योतकः। अधरसुधया बोधितस्वीयभोग्यत्व-सूचितगूढस्त्रीभावः, तेनैव सूचितभक्तपरतन्त्राकः शुद्धानुग्रहमार्गीयरसस्वरूपः सुधामयेन वेणुरवेण तासां निरावरण-कर्ण-कुहरद्वारा देहेन्द्रियप्राणान्तः करणजीवेषु प्रादुर्बभूव।

तत्र भावनासंवर्धितसुधोद्रेकाद् गलनरूपं वर्णनमभूत्। यथा परिवेषणार्थं रसश्रषके भ्रियते, तथैव भावात्मकभगवद्रूपो गूढस्त्रीभावो रसदानार्थं धर्मरूपो रसः स्वेनैव भ्रियते। अत्र पात्रस्थानीयो धर्मिरूपस्तत्स्थ रसस्थानीयस्तासु स्थानीयो धर्मरूपः। धर्मिरूपस्य वपुःप्राकट्यमेव भरणम्। रसस्य सावरणत्वात् पीताम्बरधारणम्। पीताम्बरानुभवजन्यमदेन तदन्तःस्थितालम्बनाद्यस्फूर्तिः। सुधाऽपि देवभोग्या सरित्-सरोवर - वनराज्यादिसंसृष्टा। भगवद्भोग्या तु वर्णनव्याजेन तासामधरपल्लवस्था मुख्यलीलायां भगवतो भोग्या। सर्वैरपि या साक्षादभोग्या नादमार्गेणैव भोग्या, वैपरीत्ये मुख्ययैव वा भोग्या सर्वाभोग्या। यद्यपि साऽप्यधरे विद्यमाना; तथापि वर्णनात् पूर्वमयोग्यत्वात् वर्णनायां मुखे समागच्छति, गमनागमने तस्या एव प्राधान्यात्। मुखस्य उच्छिष्टत्वं तच्छेषत्वमेव, तेन नोच्छिष्टेन शेषभूतेन मुखेन साऽनुभवितुं शक्या।

विप्रलम्भरसरूपम् उत्तरदलात्मकं स्वरूपं श्रोत्रद्वारा प्रविष्टं सदनुभूतं भवति। तो वर्णनेन मुखद्वारा निर्गच्छति। श्रवणे मुखस्य परम्परयैव हेतुत्वम्। ततः श्रोत्रपेयैव सा। (क्रमशः)

# क्रिया-विशेषणविभक्तेः पाणिनीयता-विचारः

—श्री आचार्यः केदारनाथ ओझा—

३.

## २. द्वितीय-निष्कर्षः

क्रियाविशेषणे कर्मतामङ्गीकुर्वाणा अपि व्याख्यातार आचार्याः **कर्तुरीप्सिततमं कर्म** इति-सूत्रस्य फलस्य फलाश्रयस्य च कर्मसञ्ज्ञेति अर्थभेदं न कुर्वन्ति, सूत्रस्यार्थवर्णने फलाश्रयस्यैव कर्मसञ्ज्ञां ब्रुवते। तथा च सन्देह एव प्राचां कर्मसञ्ज्ञा-विधानप्रकारे। सप्तमनिष्कर्षरीत्या धात्वर्थभेदं फल-भेदञ्च विधाय फलाश्रयकर्मतावर्णनं प्राचामाचार्या-णां न संभवति। कल्पनास्वतन्त्राणां प्रयोगमात्रमनु-सरतामर्थदृष्टिविहीनानामेव अर्वाचां वर्तते। एत-द्विषये सप्तमनिष्कर्षे विवेचयिष्यामि। फलान्वयिनो विशेषणस्य कर्मसञ्ज्ञायै शब्दरत्न-शेखरयोर्या प्रक्रिया समाश्रिता, तस्यां किमपि भाष्यस्वारस्यं नोपलभ्यते। तेनासौ प्रामाणिकतां नाश्रयते। सकर्मक-स्थले फलान्वयिनो विशेषणस्य कर्मतया द्वितीया-न्तता, तथा व्यापारान्वयिनो विशेषणस्य प्रथमान्त-तेति नागोजीमते व्यवस्था फलति। अकर्मकस्थले च व्यवस्था संदिह्यते। वर्तति-शयत्योर्योगे प्रथमा-न्तम्, एधतेर्योगे च द्वितीयान्तं लिखति शेखरकारः। प्राय एक एवार्थोऽकर्मकधातूनां फलव्यापारस्थानीय-स्तस्य मते सिद्ध्यति। यत्राप्यर्थद्वयं तत्रापि फल-व्यापारयोरभेदं स मनुते। यथा लादेशार्थ-निरूपण-प्रसङ्गे परमलघुमञ्जूषायां वृद्ध्यभिन्ना क्रियेति एधतेरर्थ इति वर्णितमस्ति। तत्रैव व्यापारत्वेनान्वये प्रथमा, फलत्वेनान्वये द्वितीयेति कथमपि वक्तुं शक्यते। तथा च सर्वत्र क्रियाविशेषणकर्मत्वार्थं न पाणिनीयशास्त्रानुशासनम्। किन्तु व्युत्पत्तिवाद-रीत्या व्याकरणान्तरम्।

ये तु वैयाकरणाः कर्मसञ्ज्ञां नोल्लिखन्ति, द्वितीयामेव व्यवहरन्ति, तेषां कृते अन्याऽपि गतिः। ततोऽन्यत्रापि दृश्यत इति वार्तिक-खण्डः, पूर्ववर्णितं भूषण-सारदर्पणोक्तं ज्ञापकम्, शेखरदीपकवर्णितं कर्मत्वाभावेऽपि कर्मसञ्ज्ञावद् द्वितीयाविधानमादि समूह्यम्। श्रीनागोजीभट्टं विहाय अन्ये द्वितीया-वादिनोऽविशेषेण फलान्वये व्यापारान्वये च क्रियाविशेषणे द्वितीयामेवाङ्गीकुर्वन्ति इति दिक्।

## ३. तृतीय-निष्कर्षः

द्वितीयाकारके कर्मसञ्ज्ञाप्रसङ्गे फलस्यैव व्यप-देशिवद्भावेन फलाश्रयत्वं मत्वा कर्मसञ्ज्ञां विधत्ते नागोजीभट्टमहोदयो न तु व्यापारस्य। तेन स्फुटमेव तन्मते परिशेषाद् व्यापारान्वयिक्रियाविशेषणे प्रथ-मान्तता। **तत्प्रत्यनुपूर्वमीपलोमकूलम्** इतिसूत्रशेखरे वर्तति-योगे प्रथमान्तं लिखति। **सार्वधातुके यक्** सूत्रस्य प्रदीपोद्योते 'उष्टासिका आस्यन्त' इत्यादौ क्रियाविशेषणं प्रथमान्तं ब्रूते। **कर्मणा कर्मवत् तुल्य-क्रिय** इति सूत्रस्य प्रदीपोद्योते तत्र क्रियाविशेषणत्वात् स्तोकमेधत इत्यादाविव तपसः कर्मत्वमिति लिखति। तत्र फलान्वयो व्यापारान्वयो वा ?, प्रमादो वा ग्रन्थकृतोऽन्यस्य वा लेखकस्य वा ?, इत्यादिनिर्णय-स्त्यज्यते। अन्यच्च प्रथमनिष्कर्षदिशाऽवसेयम्।

### ४. चतुर्थ-निष्कर्षः

अस्यापि विवेचनं प्रथमनिष्कर्षेण गतार्थम्। **तत्प्रत्यनुपूर्वमीपलोमकूलम्** इतिसूत्रे द्वितीयान्तास्य तत्पदस्य ग्रहणे मानाभावात् प्रथमान्तत्वेनोपपत्तेश्च क्रियाविशेषणस्य द्वितीयान्ततायां ज्ञापकं न संभवति।

### ५. पञ्चम-निष्कर्षः

अकर्मकस्थले एक एव प्रायोऽर्थः फलं व्यापारो वाऽस्तु। परमलघुमञ्जूषाया वृद्ध्यभिन्ना क्रियेति समुद्धरणं प्रथमनिष्कर्षे उक्तम्। तत्रैव धात्वर्थ-निरूपणे अस्ति-भवति-वर्ततिप्रभृतीनां व्यापारमात्र-मर्थो न तु फलमिति। एकार्थत्वे फलेऽन्वयो व्यापारेऽन्वय इति विभेदो न संभवति। फलान्वयिनः कर्मत्वे फलस्यैव व्यापारत्वेन व्यापारान्वयात् कर्तृत्वं कथं न स्यात्?

यस्यापि अकर्मकस्य फलं व्यापारश्चार्थस्तत्रापि फलव्यापारयोर्न पृथगन्वयः। पृथगन्वये व्यधिकरणत्वात् सकर्मकत्वापत्तिः। **अस्त्यादावपि धर्म्यंशे** इत्यादि-भूषणकारिकोत्तरार्धेन 'फलसामानाधिकरण्यात् फलभावनयोर्न पृथक् प्रतीतिः' इति प्रतीयत एव। भूषणसारे तु स्पष्टम्। पृथगन्वये तु पृथक् प्रतीतिर्दुर्वारैव। तद्व्याख्यातरि भूषणसारदर्पणे 'अत्राश्रयताबोधस्य उभयमतसिद्धत्वेन सैव साध्यत्वेनाभिधीयमानत्वाद् व्यापारः' इति लिखितमस्ति। एवञ्च अकर्मकस्थले केवले फले कस्यचिदन्वयो व्याकरणशास्त्रविरुद्धः।

भाषाविज्ञानशास्त्रविरोधश्च—न प्रयोगरचनायै शब्दानामर्थाः कल्प्यन्ते, किन्तु शब्दार्था व्यवस्थिताः। शब्दार्थनिर्णये न केवलं मुनयस्त्रयः शाब्दिका वा प्रमाणम्। किन्तु तद्भाषाव्यवहारपटुः पांसुलपादो हालिकोऽपि। लाघवगौरवतर्कौ आवापोद्वापौ अनन्य-लब्धः शब्दार्थ इत्यादिरेव। अकर्मकस्थले फलव्यापारयोः पृथग्भानाभावे क्रियाविशेषणकर्मार्थं फलस्य पृथक् प्रतीतिः स्वीकर्तुं न शक्यते। प्रतीतिर्हि न प्रयोगाधीना, पुरुषाधीना कर्तुमकर्तुमन्यथाकर्तुं शक्या वा। श्रीशङ्करभगवत्पादैरनुभवानुसारमेव उपपादितत्वात्। **षष्ठी शेषे** सूत्रस्थेन 'नहि शब्दकृतेन नामार्थेन भवितव्यम्, अर्थकृतेन नामशब्देन भवितव्यम्' इति भाष्येण एतद्भाषाविज्ञानमेव उद्घोष्यत इति।

### ६. षष्ठ-निष्कर्षः

पादप्रक्षेपादौ तीव्रतां शिथिलताञ्च असमीक्ष्य 'द्रुतं गच्छति, मन्दं गच्छती'ति प्रयुज्यते। उत्तरदेश-संयोगादौ फले न द्रुतत्वमन्दत्वे अवगच्छन्ति व्यवहर्तारः। तथापि क्रियाविशेषणस्य कर्मसञ्ज्ञायै द्रुत-मन्दपदार्थयोः फलेऽन्वयो न समुचितः। ये क्रियाविशेषणमात्रस्य कर्मसञ्ज्ञां द्वितीयान्तताञ्च मन्वते, ते मन्यन्तां नाम पाणिनीयशास्त्रविरुद्धां द्वितीयान्तताम्। परं केषाञ्चित् फले द्रुतत्वमन्दत्वान्वयवादो भाषास्वभावानभिज्ञतामूलक एव। फलान्वयिनो विशेषणस्य कर्मसञ्ज्ञां व्यवस्थापयतो व्यापारान्वये च मौनस्य नागेशस्य मते व्यापारान्वयिक्रियाविशेषणात् प्रथमैव युक्ता। अर्थात् नागेशमते व्यापारान्वयिक्रियाविशेषणात् प्रथमायाः पाणिनीयता। मम मते तु क्रियाविशेषणमात्रात् प्रथमायाः पाणिनीयशास्त्रसिद्धतेति।

### ७. सप्तम-निष्कर्षः

विक्लित्यनुकूलो व्यापार इत्यादिरीत्या पचादिधात्वर्थो वर्ण्यते। तत्र अनुकूलत्वं जनकत्वं साधनत्वं प्रयोजकत्वं वा न व्यापारे विशेषणम्। विशेषणस्योपस्थित्याद्यपेक्षायां गौरवात्। किन्तु जन्यजनकभावः, साध्यसाधनभावः, प्रयोज्यप्रयोजकभावो वा फलव्यापारयोः संसर्गो भवति, लाघवात्। तद्घटकेषु जन्यत्व-साध्यत्व-प्रयोज्यत्वादिषु न फलत्वं संभवति,

व्यापारनिष्ठविशेष्यतानिरूपितप्रकारत्वाभावात्, तत्तज्जन्यत्वादिफलमादाय क्रियाविशेषणस्य केषाञ्चित् कर्मत्ववर्णनं प्रमाणशून्यमनुभवविरुद्धमनुचितञ्च ।

केचन विक्लित्युत्पत्त्यनुकूलो व्यापार इति रीत्या उत्पत्तिघटितं धात्वर्थं वर्णयन्ति जन्यत्वजनकत्वादिभावेन अन्यथासिद्धत्वाद् **अनन्यलभ्यो हि शब्दार्थ** इति न्यायविरोधाद् गौरवाद् अनुकूलत्वात् पृथगुत्पत्तिभानस्य अनुभवविरोधाच्च अनुचितम् । उत्पत्ति विक्लितिश्च फलमादाय द्विकर्मकत्वापत्तिश्च । तद्वारणप्रयासोऽप्रामाणिकः स्यात् ।

अपरे विक्लितिमिव विक्लितित्वमपि फलं वक्तुमुत्सहन्ते । तेषामहो पाण्डित्यं शरणम् जन्यत्वसाध्यत्वादिकं विक्लितित्वे नास्तीति ते न जानन्ति । विक्लितित्वस्य विशेष्यत्वप्रकारतयाभाने विक्लितित्वस्यापि भानापत्तिरित्यनुभवशरणा संकुचेयुः ।

### ८. अष्टम निष्कर्षः

**लः कर्मणि च भावे चाकर्मकेभ्यः, कर्तृकर्मणोः कृति** इति सूत्रे प्रणयन् पाणिनिः क्रियाविशेषणं कर्म न जानातीति सूत्रविरोधः । अन्यथा 'स्तोकस्तण्डुलं पच्यते, स्तोकस्य पाकः' इत्याद्यापत्तिः । फलाश्रयतण्डुलादिरिव क्रियाविशेषणस्तोकादिर्न **कर्तुरीप्सिततमं कर्म** इतिसूत्रेण कर्मतया परिभाषितः। अन्यथा समानया परिभाषया परिभाषयितुः पाणिनेः पूर्वोक्तसूत्राभ्यामेकस्य ग्रहणमपरस्य चाग्रहणं न सङ्घटते । कर्तृसाहचर्येण भेदान्वयिकर्मणो ग्रहणं सूत्रयति सूत्रकार इति चेत् कर्मसाहचर्येण फलाश्रयः कर्ता कर्मतयैव गृह्यते इति कथन्न सूत्रयति ? न तादृशाः प्रयोगा दृश्यन्त इति चेद्, एवमेव मार्गमनुसर । कीदृशेन चक्षुषा स्तोकं पचति इत्यत्र कर्मसञ्ज्ञा दृश्यते ?, कं वा पाणिनिः स्वप्ने स्तोकमित्यस्य कर्मसञ्ज्ञामाह ? बहूनां लेखात् स्तोकस्य कर्मसञ्ज्ञां प्रत्येमीति चेत्, यस्य लेखं पश्यसि स कर्मसञ्ज्ञा मनुत इति मन्यस्व, पाणिनिर्मनुते इति भ्रमं त्यज ।

वार्तिककारोऽपि क्रियाविशेषणस्य कर्मतां न जानाति, अन्यथा उभयोः सूत्रयोः 'न क्रियाविशेषणे इति वाच्यम्' इत्युपसंख्यायेत ।

किञ्च—कर्मणि द्वितीयार्थमेव क्रियाविशेषणस्य कर्मसञ्ज्ञा आचार्येभ्यो न रोचेत, अनेकस्थले समानव्यवहाराय हि संज्ञा क्रियते । ततो वरं फलविशेषणेभ्यो द्वितीयेति वचनं स्यात् ।

नापि भाष्यकारो जानाति, अन्यथा अपूर्ववचनेन कर्तृसाहचर्येण वा उक्तयोः सूत्रयोः क्रियाविशेषणकर्मणोः ग्रहणं पारयेत् । प्रचुरप्रयोगविषया हि क्रियाविशेषणानि । तत्र कर्मसञ्ज्ञां न जानाति त्रिमुनि-व्याकरणमिति मम विषयः । अपरे मन्वते न वेति त्यजामि । **समर्थः पदविधिः, कर्मवत्कर्मणा तुल्यक्रियः, सार्वधातुके यक्** इति सूत्रस्थभाष्यविरोधः प्रथमनिष्कर्षे प्रदर्शितोऽत्रानुसन्धेयः ।

अपरोऽपि **कालाध्वनोरत्यन्तसंयोगे** इति सूत्रस्थभाष्यविरोधो दृश्यताम्, देशकालभावादिकर्मणाम् अकर्मकाणामपि सत्त्वात् सर्वथा कर्मरहिता अकर्मका न भवन्तीति असम्भववारणाय 'न च केचित् कालभावादिभिरकर्मकाः; त एवं विज्ञास्यामः—क्वचिद् येऽकर्मका इति' इति भाष्यं व्यवस्थापयति । यदि क्रियाविशेषणं कर्म जानीयात्, तदपि पर्युदस्याद् भाष्यकार इति ।

### ९. नवम-निष्कर्षः

स्तोकं पचतीत्यत्र फलेन साकं स्तोकपदार्थस्याभेदसम्बन्धेनान्वय इति समेषामभिमतम् । अभेदे साध्यसाधनभावस्यासंभवात् क्रियाकारकभावेनान्वयो न संभवति । तेन फलं प्रति स्तोकस्य कर्मत्वासंभवः ! प्रथमनिष्कर्षे **कर्मवत्कर्मणा तुल्यक्रिय** इति सूत्रस्थ-

# मानस-भारती--देवगिरा गुम्फितं मानसम्

—श्री जनार्दन गङ्गाधर रटाटे, एम० ए०, साहित्याचार्यः—

कृपाम्बुधिः श्रीरघुनाथ एव-
मस्त्वित्युवाचर्षिमनुप्रपन्नम् ।
हर्षेण युक्तो बहु सोऽपि चित्ते
देवस्य पादौ शिरसा ननाम ॥ ४२ ॥ (ख)

ज्ञात्वा राममतिप्रीतं मुहुरूचे मुनिर्मृदु ।
प्रभो यदा प्रेर्य मायां मोहयामास मां भवान् ॥
विवाहेच्छुस्तदा केन हेतुनाऽहं निराकृतः ।
इति प्रश्नं समाकर्ण्य नारदास्याऽब्रवीत् प्रभुः ॥
मुने श्रृणु वदामि त्वां यदहं हर्षनिर्भरः ।
सर्वं विश्वासमुत्सृज्य ये भजन्तीह मां सदा ॥
रक्षामि बालं मातेव सर्वथा सततं च तान् ।
स्पृशन्तमग्नि सर्पं वा पाति माता स्वपाणिना ॥
माता तं स्निह्यति प्रौढं परं पूर्वं यथा तु न ।
बाला इवामानिदासाः प्रौढा मे ज्ञानिनः सुताः ॥
अहं बलं सेवकस्य ज्ञानिनस्तु निजं बलम् ।
कोपकामौ रिपू किन्तु द्वयोरेव प्रकीर्तितौ ॥
इत्थं विचार्य विद्वांसो मां भजन्ति निरन्तरम् ।
लब्ध्वाऽपि ज्ञानकोशं ते भक्तिं न जहति क्वचित् ॥

कामक्षुधालोभमदादिरूपा
मोहस्य सेनातिबलेन युक्ता ।
तत्रापि मायातनुधारिणीयं
तीव्रातिदुःखा वनिता मता मे ॥ ४३ ॥

मुने श्रृणु वदन्तीत्थं पुराणश्रुतिसज्जनाः ।
यन्मोहविपिने नारी वसन्ततुसमा मता ॥
जपस्तपांसि नियमो जलस्थानानि नारद ।
तेषां तु शोषणे नारी मता ग्रीष्मर्तुरूपिणी ॥
कामक्रोधमदेर्ष्यादिदोषा दर्दुररूपिणः ।
एतेभ्यो हर्षदा वर्षरूपिणी कामिनी स्थिता ॥
दुर्वासना कुमुदिनी नारी तस्य सुखा शरत् ।
सर्वे धर्माः पद्मवृन्दं हिमं स्त्री मन्दसौख्यदा ॥
ममतायवसं नार्यां शिशिरे हरितं भवेत् ।
पापोलूककुलाय स्त्री सुखदान्धा निशा घना ॥
धीशक्तिशीलसत्याद्या गुणा मीनाः प्रकीर्तिताः ।
बडिशेन समां नारीं वदन्ति निपुणा जनाः ॥

पीडाप्रदा दुःखखनिः समेषां
दोषाङ्कुराणां युवतिस्तु मूलम् ।
अहं मुने सर्वमिदं विचार्य
विवाहतस्ते कृतवान् निषेधम् ॥ ४४ ॥

[ क्रमशः ]

---

भाष्येण स्फुटमभेदे साध्यसाधनभावस्य विरोधः प्रदर्शितोऽस्ति । नेह पुनः प्रपञ्चः क्रियते । यद्यपि अनेकस्थले बुद्धिसिद्धपदार्थमादाय क्रियाकर्मभावः प्रतायते, परं बुद्धिसिद्धस्यापि साधनत्वस्य भानं युगपदभेदभानेन विरुद्ध्यत एवेति ।

### १०. दशम-निष्कर्षः

'सुपां कर्मादयोऽर्थाः' इति भाष्यानुसारम् 'आश्रयोऽवधिरुद्देश्य' इति भूषणकारिकया कर्मकारकद्वितीयाया आश्रयत्वम् आश्रयो वाऽर्थो व्यवस्थापितः । तथा च अभेदार्थिका क्रियाविशेषण-कर्मद्वितीया व्याकरणसिद्धान्तविरुद्धा । एवञ्च क्रियाविशेषणं कर्म अप्रामाणिकमिति शम् ।

श्रीपाणिनेश्चरणयोः प्रणिपातपूर्वं
कात्यायनस्य वचनं हृदये निधाय ।
पातञ्जलाब्धिपरिमग्नमनाः प्रकुर्वे
पाठार्पणं स्वगुरवे प्रभदे कृतार्थः ॥

# श्रीसिद्धमहारहस्यम्

—पूज्य श्री अमृतवाग्भवाचार्याः—

सिद्धं समिद्धममितं हृदयेऽस्मदीये
वाक्कामशक्तिजननीवरिवस्ययाऽऽप्तम् ।
नोद्घाटनीयमपि सम्प्रति योगिनीना-
मादेशतो विवृतमस्ति महारहस्यम् ॥ १ ॥

तस्मात् सदैव समुपासितदैशिकेन्द्राः
श्रीमण्डले विधिवदर्जितसन्निवेशाः ।
शास्त्रं यथावदवगम्य समस्तमेतत्
सच्छिष्यवृन्दहृदयेषु निवेशयन्तु ॥ २ ॥

रक्तशक्तिममितौजसीं कलां
लालितीममृतवर्षिणीं पराम् ।
सारसेऽहमि सहस्रपत्रके
हंसगां शिअसि गौरवीं भजे ॥ ३ ॥

दिव्यान् सिद्धान् मानवाँश्च गुरुन् गुरुपरम्पराः ।
सर्वेषां पादुकाश्चाहं वन्दे वाक्कायमानसैः ॥ ४ ॥

पूर्वमङ्गं समस्तानां प्रारम्भाणां प्रधानतः ।
स्मरणं वारणास्यस्य सर्वविघ्नौघवारणम् ॥ ५ ॥

प्रकाशानां विमर्शानां गणानां स्वमहं पतिम् ।
महाशाकसुतं वन्दे प्रारम्भप्रणवं गवाम् ॥ ६ ॥

क्षीरोदधेरिवोमाया उद्यन्नानन्दयञ्जगत् ।
ग्लौरिव श्रीगणाधीशो विघ्नस्तोमं निहन्तु नः ॥७॥

कपाली कुण्डली दण्डी सिन्दूरारुणविग्रहः ।
श्रीमान् बटुकनाथः स्तादापदुद्धारणाय नः ॥ ८ ॥

ऐन्दवीं कलिकां शीर्ष शौक्लीं भूतिं च वर्ष्मणि ।
चान्द्रीं सौरीं तथाग्नेयीं दृष्टिं बिभ्रच्छिवोऽवतात् ॥९

फुल्लालापाः प्रतिपदं पर्यन्ते तीर्थयात्रिणः ।
मुण्ड्यन्ते यत्र पाण्डेयैस्तानि तीर्थानि पान्तु नः ॥१०

श्रीराधारुक्मिणीकान्तं श्रीश्रीकृष्णं महागुरुम् ।
वरया कलया युक्तं वन्दे शङ्कररूपिणम् ॥ ११ ॥

स्वयं सिद्धे भगवति शिवे शेषे मनोहरे ।
वाचामगोचरे वन्दे नित्यं पदमनामयम् ॥१२॥

त्यागं त्यागाय मुखजो भोगं त्यागाय बाहुजः ।
भोगाय चोरुजस्त्यागं भोगं भोगाय पादजः ॥१३॥

वृणोमि मनसा वाचा विवृणोम्याचराम्यपि ।
चर्यया जीवतामात्तस्तत्तद्वर्णगतः शिवः ॥१४॥

भावाभावोल्लासिकलो बिन्दुगो निजमन्दिरे ।
दीव्यामि स्वावबोधोऽहं महो वैसर्गिकं सदा ॥१५॥

शक्नोमि काशे स्वाकाशे स्वातन्त्र्यात् पारिपूर्ण्यतः ।
युगपत् सामरस्येन नित्यं सोऽहमहम्महः ॥१६॥

समस्मि सुकृती स्वस्यामिष्टौ ज्ञातौ कृतावलम् ।
विमर्शे च प्रकाशे च विश्राम्यामि स्फुरन् समम् ॥१७॥

आत्मना कलये वेद्मि नदामि स्वसमर्थितः ।
हृष्टः पुष्टश्च तुष्टश्च विवृणोम्यावृणोमि च ॥१८॥

योगिनीनां चतुःषष्टिं कलानां षोडशीं तथा ।
चतुष्टयीमवस्थानां प्रकाशे विमृशाम्यहम् ॥१९॥

शाकः काशश्च काशश्च शाको भवति सर्वथा ।
यः काशते स शक्नोति यः शक्नोति स काशते ॥२०

शाकोऽहं स्पन्दमानः सन् स्वस्मिन्नेमि प्रकाशताम् ।
विमृन् स्पन्दमानत्वं स्वस्मिन्नेमि विमर्शताम् ॥२१॥

अन्तर्बहिः शाक एव काशं स्वं विमृशन्नहम् ।
प्रभुर्विलासतामेमि लौहितीं लालितीं वहन् ॥२२॥

विभक्तीनां सप्तकेन वाग्रूपं स्वं गृणामि च ।
सम्बोधनेन स्वस्यैव स्वात्मानं विमृशाम्यहो ॥२३॥

उत्तमः पुरुषः स्वस्मिन् भामि यामि रमे सदा ।
वमामि स्वं प्रामि पामि संहरामि स्वयं प्रभुः ॥२४॥

समालम्ब्य समेधन्ते यत्पदं स्फुरिताधराः ।
स्फुरणेन क्रियास्तास्ताः कलावत्यो निरन्तरम् ॥२५

सोऽहं शाकोऽभिनन्दामि स्वं क्रियापदमुत्तमम् ।
मामालम्ब्यैव सर्वत्र कारकत्वं प्रतिष्ठितम् ॥२६॥
धातुभावेन सन्धातुं धातुन् सर्वानपि स्फुरन् ।
शाकोऽहमेव शक्नोमि वाचयन् सकलाः क्रियाः ॥
भासमानः प्रतिपदं प्रोत ओतः स्ववैभवात् ।
स्वतन्त्रं प्रातिपदिकं शाक एव भवाम्यहम् ॥२८॥
शब्दाश्चार्थाश्च सर्वेऽपि शाकेनैकेन पूरिताः ।
तस्मात् सर्वं शाक एव महोऽहमिति निश्चितम् ॥२९
पदे पदे शाक एव काशं स्वं विमृशन् मुहुः ।
अनन्तनामरूपाणि दधामि निजलीलया ॥३०॥
उपसर्गो निपातो वा नाम वाऽऽख्यातमेव वा ।
अन्तरा शाकभरणं कदाचिदपि न स्फुरेत् ॥३१॥
शक्नोमि शाक एवैकः शाब्दीमार्थीं च भावनाम् ।
कर्तुं ज्ञातुं तथा चेष्टुं बिभ्रत् सर्वं स्वशाकतः ॥३२॥
सृष्टिः स्थितिः संहृतिश्च निग्रहोऽनुग्रहोऽपि वा ।
यमन्तरा जीवति नो स शाकः केन वर्ण्यताम् ॥३३॥
अमृतं सर्वजीवातुरतीतस्तुर्यतां मुहुः ।
गाहते त्रिपुटीं स्वस्मिन् शाक उल्लासयन् शिवः ॥३४
यः पश्यन्त्या मध्यमया वैखर्या वक्ति चोच्यते ।
परया च परो वाचां सोऽहं शाको महाशिवः ॥३५॥
जाग्रत् स्वप्नः सुषुप्तं च लभते यत्र पूर्णताम् ।
तत्तुर्यं तदतीतं च शाक एव न संशयः ॥३६॥
महाकामेश्वरः शाकः परिपूर्णो महत्तया ।
गाहते सर्वभावेन सर्वत्र समदर्शनः ॥३७॥
करोति क्रियते नित्यं जानाति ज्ञायतेऽपि च ।
शाक एको महादेवो महादेवीच्छतीष्यते ॥३८॥
निगृह्यते निगृह्णात्यनुगृह्णात्यनुगृह्यते ।
एक एव परं तत्त्वं महाकामेश्वरी महः ॥३९॥
शब्देऽनुमाने प्रत्यक्षे प्रामाण्यं यदपीष्यते ।
तत् सर्वं शाकमाहात्म्यं तस्माच्छाको महेश्वरः ॥४०
मेये माने मातरि च य ओतप्रोतभावतः ।
कांशते स महान् काशः शाक एक महेश्वरी ॥४१॥

पृथिव्यां वर्तमानेषु पुरग्रामगृहादिषु ।
पृथिवीव व्याप्य विश्वं शाकोऽहं सुप्रतिष्ठितः ॥४२॥
शाकेन भरितं सर्वं शाकरूपमहम्महः ।
शाकम्भरीति विख्यातं शिवं विजयते परम् ॥४३॥
यत्प्रसादादिदं लब्धं रहस्यं पावनं परम् ।
कोपभट्टारकं वन्दे तमनुग्रहविग्रहम् ॥४४॥
स्वनिर्मितस्तोत्रपाठसन्तुष्टहृदयो मुनिः ।
पूर्णषोडशवर्षं मामकस्मात् करुणार्णवः ॥४५॥
प्रत्यक्षं दर्शनं दत्त्वाऽन्वगृह्णाद्दीनवत्सलः ।
उपादिशत् पूर्णयोगं साधनाहृदयं महत् ॥४६॥
वाक्कामशक्तिमहितं कोटिबालार्कसन्निभम् ।
पापकालानलं बालमिष्टं दैवतमाश्रये ॥४७॥
कोटिविद्युत्प्रतीकाशं फुल्लकल्हारबिन्दुगम् ।
पुस्तमालाभयवरकरं दैवतमाश्रये ॥४८॥
समस्तकल्पनामूलमरुणं करुणाघनम् ।
ललितं कामवरदमिष्टं दैवतमाश्रये ॥४९॥
क्रियायोगो ज्ञानयोग इच्छायोगोऽपि पूर्णताम् ।
यत्र गच्छति योगः स वास्तवो योगपुङ्गवः ॥५०॥
न किञ्चित् क्रियते यत्र किमपि ज्ञायते न च ।
इष्यतेऽपि च नो किञ्चित् स योगः परमोऽस्ति नः
आस्वाद्य स्वरसां पूर्णां मेलनामिदमहमोः ।
जयाम्यसुलभं शाकममृतं पदमव्ययम् ॥५२॥
धर्मार्थकाममोक्षाणां चिन्ता यत्र न विद्यते ।
अस्माकं पुरुषार्थः स महान् शाकः परः शिवः ॥५३॥
सिद्धानां योगिनीनां च पूर्णतामेति मेलनम् ।
यत्र शाकः स भवताद् विजयाय महान् हि नः ॥५४॥
ब्राह्मादिशैवान्तवेदा यद्वर्णयितुमक्षमाः ।
रहस्यं मूकतां यान्ति शाके तत् पूर्णमस्ति नः ॥५५॥
उपेतार उपाया अप्युपेयानि च सर्वशः ।
अम्भोधौ वीचय इव शाके सर्वं प्रतिष्ठितम् ॥५६॥
उपाया आणवाः शाक्ताः शाम्भवा अपि जीवनम् ।
लभन्ते यं समालम्ब्य स शाकः सर्वजीवनम् ॥५७॥

## तालतरुर्ब्रवीति

वृक्षः कदाचिद् वदतीति लोके, केनाऽपि नाकर्णितमीक्षितं वा।
अतो न विद्वद्वर साधु पूर्वं, वाच्यं त्वया तालतरुर्ब्रवीति ॥ १ ।

स्यान्मा फलाघात इतो न तिष्ठ,
च्छायातले पान्थ शृणुष्व तावत्।
समीर-सञ्चालितपत्र-शब्दै-
र्मन्ये पुरस्तालतरुर्ब्रवीति ॥ २ ॥

छाया न मेऽस्ति रुचिरा न च सौकुमार्य-
मन्ये गुणा अपि सखे नहि विद्यमानाः।
लम्बत्वदोष- गुरुपङ्क - कलङ्कितोऽहं
धात्रा कृतः किमिति तालतरुर्ब्रवीति ॥३॥

लसन्ति मे केऽपि गुणा न जाने
तथापि लम्बाकृतिरेव भामि।
सर्वाधिकेनैकगुणेन युक्तो
गर्वेण किं तालतरुर्ब्रवीति ॥ ४ ॥

यथा रसालादिमहीरुहेभ्यः
पृथक् तपःसाधनतत्परोऽहम्।
तथा परित्यज्य जनान् विमूढान्
तपस्व किं तालतरुर्ब्रवीति ॥ ५ ॥

अतीवलम्बत्वगुणेन धीमन्
सर्वान् द्रुमांश्चातिशये यथाऽहम्।
तथा भवानुन्नतिमेतु लोके
जिह्वां विना तालतरुर्ब्रवीति ॥ ६ ॥

पत्रैर्निदाघतपनं परिमर्दयन्तः
खादन्ति मेऽतिसरसानि फलानि लोकाः।
प्रायो हसन्ति मयि तर्जनिकाग्रहस्ता
मूढास्तथापि किमु तालतरुर्ब्रवीति ॥७॥

नानाविकारविकलैरपि भक्षिता या
नित्यं सखे मम सितोपकरोति सर्वान्।
ज्ञात्वाऽपि यत् स्मरति तां नहि मां कदाचि-
ल्लोकः कृतघ्न इति तालतरुर्ब्रवीति ॥ ८ ॥

चिन्वन्ति केचिदरुणं तरुणं वृषं वा
केचित् प्रदीपमथवा मतदानकाले।
स्वप्नेऽपि जातुचिदिमे न च मां भजन्ते
नेतार इत्यहह तालतरुर्ब्रवीति ॥ ९ ॥

—श्री जगन्नारायण पाण्डेयः, साहित्याचार्यः—

---

हेतौ फलं फले हेतुर्द्वयमेकत्र यद्बलात्।
प्रतीयते तत् समस्तं बलं शाके प्रतिष्ठितम् ॥५८॥
सतोऽसज्जायते विश्वमसतो जायते च सत्।
यद्बलेन समस्तं तद् बलं शाके प्रतिष्ठितम् ॥५९॥
अदृष्टं दृष्टवत् सर्वमश्रुतं श्रुतवद् भवेत्।
बलेन येन तत् सर्वं बलं शाके प्रतिष्ठितम् ॥६०॥
सङ्कोचो वा विकासो वा यद्बलात् परिभाष्यते।
प्रतीयते वा तत् सर्वं बलं शाके प्रतिष्ठितम् ॥६१॥
व्यञ्जनायां लक्षणाग्रामभिधायां च यद् यलम्।
प्रतीयते स्थाप्यते वा तद् बलं शाकमूलकम् ॥६२॥

विस्मृत्या जाग्रति स्वप्ने स्मृत्या सुप्तेऽनुभूतितः।
तुर्यायां भूतितश्चैकः शाक एव विराजते ॥६३॥
यमैश्च नियमैर्नित्यं चासनैः प्राणसंयमैः।
प्रत्याहारैर्धारणाभिर्ध्यानेन च समाधिना ॥६४॥
यस्य लाभाय मुनय ऋषयः संशितव्रताः।
प्रयतन्ते महान् देवः स्वभावः शाक एव सः ॥६५॥
यदुपादेयतां नैव गाहते नैव हेयताम्।
स्वयंसिद्धं परं तत्त्वं स्वभावः शाक एव सः ॥६६॥
प्रशस्ताः करणेश्वर्यो देवतां पूजयन्ति याम्।
ऐकायनेन निश्श्रेष्ठाः शाको नः साऽस्ति देवता ॥६७॥

अष्टौ वाग्देवता अष्टौ सिद्धयो निधयो नव ।
यमालस्यैव जीवन्ति स शाको विजयाय नः ॥६८॥
आदित्या द्वादश तथा रुद्रा एकादशापि च ।
वसवोऽष्टावपि सदा शाकमेवाश्रयन्त्यहो ॥६९॥
शिवादिक्षितिपर्यन्तषट्त्रिंशत्तत्त्वदेवताः ।
यजन्ते पूर्णयोगेन मुनयः शाकमेव नः ॥७०॥
विधाय भूतशुद्ध्यादि षोढान्यासपवित्रिताः ।
यजन्ते मन्त्रयोगेन मुनयः शाकमेव नः ॥७१॥
पिधाय कर्णकुहरे तर्जनीभ्यां गुहादिषु ।
नादयोगेन सेवन्ते मुनयः शाकमेव नः ॥७२॥
दीपज्योतिषि निर्वाते बिन्दौ वा भित्तिलाञ्छिते ।
केचित् त्राटकयोगेन शाकं प्रत्यभिजानते ॥७३॥
पद्मासनमधिष्ठाय मुद्रामालम्ब्य षण्मुखीम् ।
केचित् प्राणनिरोधेन भजन्ते शाकमेव नः ॥७४॥
केचित् कपालकुहरं खेचर्यापूर्य जिह्वया ।
सोमपीयूषपानेन यजन्ते शाकमेव नः ॥७५॥
आपाद्य पञ्चतां केचित् प्रपञ्चं लययोगतः ।
कारणात् कारणे लीनाः शाकमेवाश्रयन्ति नः ॥७६॥
योषिता मिथुनीभूता विरलाः साधकाः पुनः ।
वज्रोल्या वज्रसाराङ्गा भजन्ते शाकमेव नः ॥७७॥
ये पञ्चभिर्महायज्ञैर्यजन्ते विश्वदेवताः ।
पर्यन्ते तेऽपि लीयन्ते शाक एव न संशयः ॥७८॥
विस्मृतावाणवः स्मृत्यां शाक्तः शाम्भव इष्यते ।
अनुभूत्यां शाक एवोपायरूपः परः शिवः ॥७९॥
उपायमन्तरेणैव भूतौ साक्षाद्भवाम्यहम् ।
अभिनन्दन् बलं स्वस्य महान् शाकः परः शिवः ॥८०॥
पञ्चम्यां प्रत्यभिज्ञानं शाकस्य सुदृढं महत् ।
भवतीति यजन्ते ते पञ्चम्यां पञ्चमीप्रियाः ॥८१॥
पञ्चानामपि कोशानां काशतेऽन्तर्बहिश्च यः ।
शाकं ब्रह्मेति तं केचिद् बृहत्त्वात् समुपासते ॥८२॥
चतुर्विधाऽपि वाग्वक्तुं यमालस्यैव शक्नुते ।
अतीतमपि वाग्रूपं शाकं वाग्भिरुपासते ॥८३॥

वहन्तं सहजं प्राणमपानग्रासपेशलम् ।
युञ्जन्ति केचित् स्वरसात् शाके भूतिदिदृक्षया ॥८४॥
हंसवागीश्वरीं केचित् सन्ततं स्वैरचारिणीम् ।
सेवन्ते मध्यमार्गस्था युक्त्या शाकपरीप्सया ॥८५॥
पश्यन्ति युक्त्या प्रणवमुद्गतं प्राणमूलतः ।
दीर्घदीर्घतमं केचित् शाकदर्शनलालसाः ॥८६॥
सकलां निष्कलां कामकलां केचित् कपालिनीम् ।
कलयन्ते कुलाचारयुक्त्या शाकरिरंसया ॥८७॥
कुलीनाः केऽपि कल्पन्ते कुलवागीश्वरीं कुले ।
कुमारीं भावयन्तोऽपि शाकभूतिनिदर्शने ॥८८॥
तत्त्वत्रयं शाकवह्नावात्मविद्याशिवाभिधम् ।
हुत्वा सतुर्यं चातुर्यात्संपिबामि महामृतम् ॥८९॥
भवाऽभवे चातिभवं विमृश्य स्वप्रकाशतः ।
स्वात्मानमभिनन्दामि महाशाको महाबलः ॥९०॥
पद्मासनमधिष्ठाय समसर्वाङ्गविग्रहम् ।
परस्परोपरिधृतौ करौ कृत्वाऽङ्कगावुभौ ॥९१॥
निर्वातदीपवत्तिष्ठन् क्रियाज्ञानैषणाः समाः ।
अगृह्णन्नत्यजन् नित्यं स्वात्मानं शम्भुमीक्षते ॥९२॥
महाराजाधिराजोऽयं योगानामुत्तमोत्तमः ।
स्वशाकप्रत्यभिज्ञाने महाशाको न संशयः ॥९३॥
लालितोऽनेन योगेन पूर्णोऽहम्भावमाश्रितः ।
दृष्टानि दिव्यदृश्यानि कानिचिद्वर्णयाम्यहम् ॥९४॥
तिस्रः स्त्रियो दात्रहस्ताः पुरुषो वेणुवादनः ।
हिमालयोपत्यकायां वने विस्मृतमार्गकम् ॥९५॥
मां मार्गं सम्प्रदर्श्यैव शम्पेव क्वाप्यलक्ष्यताम् ।
गता नमामि ताः स्मृत्वा करुणाकरदेवताः ॥९६॥
महाधिपमिते वर्षे मार्गे पूर्णगिरेर्वने ।
वृत्तं वृत्तं तपोदर्शे विस्मयोत्पादकं महत् ॥९७॥
दिव्यरम्भागर्भकान्ति रम्भास्तम्भोपमं महत् ।
आपादकटिपर्यन्तमाश्लिष्टं यत् परस्परम् ॥९८॥
अलक्ष्योत्तुङ्गतं लम्बकुन्तलाग्रलसत्कटि ।
धरित्र्याकाशयोर्मध्ये मिथुनीभूय संस्थितम् ॥९९॥

अप्रतर्क्यपरीणाहं दृश्यजानुपदाम्बुजम् ।
ज्योतिर्लिङ्गमिदं दिव्यं कट्यूर्ध्वं दृगगोचरम् ॥१००॥ (क्रमशः)

# तर्कस्य असमाधानतायाः मीमांसा

मुख्यलेखकः—
**श्री सदाशिव कृष्ण फड़के**

—अनुवादकः
**श्री 'अङ्गारः'**



तर्ककुमारः सद्गुरोः शरणमादाय गुरुपुत्रो बभूव, तेषां निदेशेन च भगवद्गीतापाठं समुपदिष्ट-मन्त्र-जपादिकञ्च वाङ्मयोपासनं प्रारभत। तथापि तदीये जीवने संक्रान्तेयं क्रान्तिः बाह्यप्रदर्शनमात्ररूपाऽऽसीत्। नैतावदेव, पिञ्जराबद्धसिंह इव अकाण्डे साम्प्रदायिक-विवादे समापतितं तन्मनोऽसन्तुष्टम् उद्विग्नञ्चा-ऽभवत्। मुहुर्मुहुस्तन्मनसि अयमेवाऽश्रेयस्करो विचारः स्फुरन्नासीद् यन्मुधैवाहं गुरूपदेशस्य सनातने पाशे आबद्धोऽभवमिति। 'योगानन्दपादा न मे हितकराः, शत्रव एवे'ति तस्मै प्रतीयते स्म। तथापि स विचार-शील आसीत्, योगानन्दपादान् दोषिणो निर्धारयितुं नापारयत्। तैस्तु प्रथममेव स पृष्टो यद् 'अपि ते ध्येयं सुनिश्चितम्? ब्रह्मात्मज्ञान-विषयिणी ते जिज्ञासा अनन्यगतिकतां गता न वा? मयि ते द्रढीयान् विश्वासो न वा?' इति। तस्यैवायं प्रमादो यत्तदा प्रश्नानामेतेषां तेन मनागपि महत्त्वं नाकलितमिति विवशतः स्वीकरणीयमभवत्।

स्वल्पेनैव आत्मनिरीक्षणेन इदमप्यवगतं तेन यद् योगानन्दपादेषु तेषामुपदेशेषु च समपेक्षितो विश्वास-स्तस्मिन्न वर्तत इति। नैतावदेव, वस्तुतः किं मे ध्येयमित्यपि नात्मना तेन निर्धारितम्। एवंस्थितौ योगानन्दपादानां सविधे आवां गतवन्तौ इत्येवाऽस्ति महानपराधः। कयाचन कर्तव्यभावनयाऽभिभूतेन मया पूर्वम् अन्धश्रद्धया विवाहस्य प्रमादः कृतः, तथैवा-यमपरः प्रमादः। यथा विवाहः सङ्घट्यते न विघट्यते, तथैव साम्प्रदायिकसम्बन्धोऽप्यविघटनीयः। सम्बन्धयोजने योऽविचारोऽभवत्, तन्निर्वहणे पुनरपि स कथमपि न भाव्य इत्येव स विचारयन्नासीत्। नीहारमग्ना नौकेव तन्मनः उद्विग्नं सर्वथा दिङ्मूढञ्चा-भवत्। बलात् स नित्यं स्नात्वा भगवद्गीताया पाठं मन्त्रञ्च जपन्नासीत्। तथापि तन्मनस्तदा अतितरां चञ्चलं साशङ्कं मलिनञ्च वर्तते स्म। एवंस्थितौ उपासनाया अमुं मिथ्याचारं दर्शंदर्शं स परं निर्विण्णो लज्जितश्चाभवत्।

भूगतस्य अज्ञातद्रव्यनिधेरिव तर्ककुमारस्य कृते गूढरहस्यमिदं सर्वथाऽज्ञेयमेव प्रतीयते स्म यत् 'कुत्र वास्तविकं समाधानं नाम, कथञ्च तदधिगन्तव्य-मि'ति। प्रश्नोऽयं तत्पुरः समुपस्थितो यद् ध्येयनिश्चय-मन्तरैव जगदीवेन सह मनसोऽपि प्रवाहोन्मुखीकरणम् आत्मवञ्चनादन्यत् किं नामेति? इत्थं नैकेषां तर्काणां प्रश्नानाञ्च परम्पराः तन्मनसि प्रस्फुरन्त्य आसन्, तेषां समाधानकर्तुरभावात् तस्य उदासीनता दिने दिने वर्धमानाऽऽसीत्। तस्य वाचन-मनोरञ्जनं तु निरुद्धमेवाऽऽसीत्। निर्हेतुकमावागमनमपि रुद्धमभवत्।

तर्ककुमारस्येमाम् उदासीनां मनःस्थितिम् अन्ध-श्रद्धा नाकलितुं शशाक। तस्य चिन्तितं मुखकमलं तु तस्या दृष्टेः सर्वथा पारमेवासीत्। औदासीन्येन तदीयं भाषणमपि अतितरां सीमितमेवाभवत्। तया विचारितम्—कदाचिद् योगानन्दपादानां कथनानुसारं मौनं समाचरन्तः स्युरिति। विशेषतः सा स्वीयाया-मन्तर्मुखवृत्तावेव मग्नाऽऽसीत्।

× × ×

एकदा तर्ककुमारः खिन्नमनाः स्वकीये अध्ययनागारे पीठे विश्रामं कुर्वन्नासीत्। अत्रान्तरे तस्य पत्न्या अन्धश्रद्धाया अत्तिका प्रज्ञा कनिष्ठभगिन्या मिलितुं समागता। प्रज्ञाया मुखमण्डले, विशेषतो नेत्रयोः असाधारणबुद्धेस्तेजः प्रसरदासीत्। विदुषी किल सा। तर्ककुमारस्य खिन्नता तन्मुखमण्डले स्पष्टं परिलक्ष्यते स्म। प्रज्ञयाप्येतदवगतम्। तथापि तेन सह प्रायो विशेषसंभाषणस्यानवसरात् खिन्नताकारणमपृष्ट्वैव सा अन्धश्रद्धया सह मिलितुमन्तः प्रविवेश। गत्वा च प्रोवाच—'भगिनि श्रद्धे ! किं करोषि ?'

अत्तिकाया शब्देन परिचिता अन्धश्रद्धा परं मुमुदे। तया उक्तम्—'अत्ति ! कियता दीर्घकालेन त्वमद्य समागता। आगच्छ, तं कटमास्तीर्य उपविश। अहं गत्वा स्वल्पं दुग्धमानयामि।'

प्रज्ञया उक्तम्—नाहं दुग्धमन्यद् वा किमपि कामये। पूर्वं मदन्तिकं समागत्य उपविश। श्रद्धे ! ते पतिदेवा एतावन्तः खिन्नाः किमिति लक्ष्यन्ते ? अपि युवयोः कश्चिद् विवादः सम्पन्नः ?'

अन्धश्रद्धाऽब्रवीत्—'अत्ति ! कथं ते मनसा ध्यातं यदहं तेभ्यो विवदिष्यामीति ?'

प्रज्ञाऽवदत्—'नैवम्, तथाप्यद्य ते एतावन्तः खिन्नाः किमिति दृश्यन्ते ? त एव प्रष्टव्या आसन्, परं विचारितं यत्पूर्वं त्वमेव प्रष्टव्येति।'

अन्धश्रद्धा प्राह—'नेदं मयाऽऽकलितं यत् त्वं वदसि। कथं वा आकलितं स्यात् ? अन्धा यदस्मि। परश्वः आवां भगवतां योगानन्दपादानां दर्शनाय गतवन्तौ। ततः प्रत्यवर्तनेन सहैव तेषां वृत्तौ परिवर्तनमिदं दृश्यते। किन्त्वेतद् इष्टमनिष्टं वेति सम्भाषणमन्तरा कथमवगम्येत ?'

प्रज्ञाया जिज्ञासामनुसृत्य प्रसङ्गानुरूपं तस्मै योगानन्दपादानां सविधे गमनस्य कारणम्, तत्र संवृत्तः संवादः, तत्पूर्वतनञ्च तर्क-श्रद्धयोर्भाषणम्, सर्वमेतत् एकपदे एव अत्तिकायै श्रावितं कनिष्ठभगिन्या अन्धश्रद्धया। सर्वमेतद् श्रुत्वा प्रज्ञया पृष्टम्—'भगिनि ! यदा ते भगवद्गीतां पठन्ति, तदा किं त्वं शृणोषि ?'

इङ्गितज्ञया अन्धश्रद्धया समुत्तरितम्—'तेषां तद्वाचनं प्रेम-श्रद्धायुतं भवतीति नाहं भावये।'

'किं ते दीर्घकालं यावत् जपन्ति ?'—प्रज्ञया जिज्ञासितम्।

'असम्भवमेतत्। महता प्रयासेन मालैका जप्यते नाम !'—अन्धश्रद्धया समुत्तरितम्।

प्रज्ञया उक्तम्—'आम्, अवगतं मया तेषामौदासीन्यस्य कारणम्। श्रद्धे ! योगानन्दपादेभ्य उपासनाधिगमस्य हठस्त्वयैव तैः सह कृतः स्यात्। त्वं स्वीयां रुचिं बलात्तेषामुपरि आरोपयितुं वाञ्छसि। महत्तरं मौग्ध्यमेतत् ! किं तातपादानां मुखाम्भोजतो निस्सरन्त्यः **अश्रद्दधानाः पुरुषाः** इति गीताश्लोकस्य ज्ञानेश्वरमहाराजानां कविता विस्मृताः ? ज्ञानदेवास्तु स्पष्टमेव उपदिशन्ति—

**पाहें पां दूध पवित्र आणि गोड।**
**पासीं त्वचेचिया पदरा आड॥**
**परि तें अव्हेरूनि गोचिड।**
**अशुद्धचि सेवी॥**
**कां कमलकंदा आणि दर्दुरी।**
**नांदणूक एकेचि घरीं॥**
**परि पराग सेविजे भ्रमरीं।**
**येरां चिखलचि उरे॥**
**ना तरी निदैवाच्या परिवरीं।**
**लोह्या रुतलिया आहाति सहस्रवरी॥**
**परि तेथ बसोनि उपवास करी।**
**कां दरिद्रें जिये॥**
**तैसा हृदयामध्ये मी राम।**
**असतां सर्वसुखाचा आराम॥**

कीं 'भ्रांतासी काम।
विषयांवरी ॥
बहु मृगजळ देखोनि डोळां।
थुंकिजे अमृताचा गिळितां गळाळा॥
तोडिला परिस बांधिला गळां।
शुक्तिकालाभे ॥
तैसी अहंममतेचिये लवडसवडी।
मातें न पवतीचि बापुडीं॥
म्हणोनि जन्ममरणाचिये दुथडीं।
डहुळितें ठेलीं ॥

( ज्ञानेश्वरी, अध्याय ९. ओवी ५७–६२ )

( अर्थात् 'गोदुग्धं पवित्रं सदपि मधुरम्। किन्तु एकत्वगन्तरितं तद्दुग्धं विहाय कीटाणवो गोस्तनतो रक्तमेव पिबन्ति। मण्डूकाः कमलकन्दमभितस्तिष्ठन्तोऽपि पङ्कमेव अदन्ति, परं दूरस्थाः भ्रमरास्तत्र समागत्य परागं सेवन्ते। भूमिगतद्रव्यनिधौ निवसन्नपि हतभाग् दरिद्रो बुभुक्षित एव तिष्ठति। सर्वसुखानां निधाने आत्मरामे हृदि स्थितेऽपि भ्रान्ताः सुखार्थं विषयेषु धावन्ति। किमधिकम्, दूरस्थं मृगजलं दृष्ट्वा मुखस्थममृतकवलमपि भ्रान्ताः वमन्ति। तथैव शुक्तिकारजतमोहेन गले बद्धमपि स्पर्शमणिं परित्यजन्ति। तात्पर्यमेतद् यत्प्राकृतिकस्वभावानुसारं निर्मितयोः अहन्ताममतयोः पृष्ठलग्ना एते ईश्वररूपमप्राप्य जन्ममरणनद्या एव प्रवाहे निरन्तरं प्रवहन्ति' इति।

श्री ज्ञानेश्वरस्य वचनमिदं समुद्धृत्य प्रज्ञया उक्तं यत् 'त्वं सहजा-विज्ञानेश्वरयोः प्रेष्ठा कन्या मूर्तिमती श्रद्धैयाऽसि। परम् आधुनिकांग्लभाषाशिक्षितस्य ते पतिराजस्य जन्मजा स्वाभाविकी आनुवंशिको च श्रद्धा सर्वथा विभिन्नजातीया वर्तते। **यो यच्छ्रद्धः स एव सः** इति कथं विस्मृताऽसि ? मन्ये, योगानन्दपादेभ्य उपदेशग्रहणे ते पतिदेवेन अनपेक्षिता क्षिप्रतैव कृता।'

अन्धश्रद्धया उक्तम्—'मया तेभ्य एतदर्थं कथमपि नोक्तम्। किमेवं विश्वसिसि यत्ते मदुक्तं सहजत एव स्वीकरिष्यन्तीति। सर्वाऽपीयं भगवन्मायाया एव क्रीडा। अत्ति ! किमेवमेव नास्ति ?'

प्रज्ञा प्रावोचत्—युक्तमेतत्। तथापि परमार्थसाधने जीवस्य कृते कार्याकार्यविचारस्य मनाक् स्वातन्त्र्यं प्रदत्तमास्ते। तथैव पारमार्थिकेऽस्मिन् मार्गे कियानधिकारभेदोऽपि विचार्यते। किं तर्ककुमारस्य पूर्वसंस्कारात्मिकां प्रवृत्तिं वृत्तिं च न जानासि ? किं तेषां निन्दाप्रचुरां कठोरां वादविवादपद्धतिं तेषां वचनस्य कठोरता न प्रत्याययति ? तेषां काव्योपाख्यानवाचनस्य व्यसनम्, सामाजिक-राजनैतिक-वाङ्मयपठनस्य अभिरुचिः, वादविवादस्य तीव्रेच्छा—किमेतत्सर्वं न सूचयति यत्ते रजोगुणप्रधाना वर्तन्त इति ? किञ्चैवं येषां भावना तमोगुणेन दूषिता, राजसिकवाङ्मयत्रिपुट्या येषां पुण्यसञ्चयानां निधी रिक्ततां गतस्ते त्रिगुणातीतस्वरूपाणाम् अध्यात्म-ग्रन्थानां पठने जपे च कथमविकृताः स्युः ? निष्कामकर्मणा चित्तशुद्धेः सात्त्विकवृत्तेर्वा परमेव उपासना फलतीति नैतावदेव किम् ?'

अन्धश्रद्धया जिज्ञासितम्—'किन्तु अत्ति ! अपि नाम अनधिकारिणः अधिकारित्वापादनं योगानन्दपादसदृशानां महात्मनां कृते कठिनम् ?'

प्रज्ञा समुत्तरितवती—'त्वदुक्तं सर्वं यथार्थमेव। नूनमेतत् तादृशानां कृते न कठिनम्। तथापि गुरुपादाः अपात्राय स्वीयसामर्थ्यं किमर्थं दास्यन्ति ? ते पतिदेवविषये स्पष्टतया यदहं ब्रवीमि, तस्य दुःखं क्रोधो वा मा कुरु। **पिण्डे पिण्डे मतिर्भिन्ना तु**. चलत्येव।

अन्धश्रद्धाऽवोचत्—नहि, नहि। तत्र क्रोधस्य अवसर एव कुतः ? किमहं तान् न जानामि ? तथापि किं कुर्याम् ? तेषां बोधनयोग्यं युक्तिवादं कर्तुं न जानामि।'

प्रज्ञा प्रावोचत्—युक्तिवादानामासेतान् पाठान् तेभ्य एवावगच्छ। स्वयमेव यथेच्छम् आमोद-प्रमोदं करोषि, पतिदेवञ्च बुभुक्षितमेव स्थापयसि, नैतत् ते शोभते। श्रद्धे ! युक्तिवादस्य योगस्त्वयाऽधिगतो भवेत्, एतदर्थमेव तु तर्ककुमारेण सह ते पाणिग्रहणं कारितम्। गुरोः केवलं ब्रह्मनिष्ठत्वमेव नालम्, तेषु श्रोत्रियत्वं युक्तिवादकौशलं चाप्यावश्यकम्। तत्तु स्यान्नाम। इदं तु त्वमपि स्वीकरिष्यसि यत्साम्प्रतिकीं तर्ककुमारस्य इच्छाऽनिच्छां दृष्ट्वा स्फुटमेतद् यत्तेषां-ध्येयं मोक्ष आत्मज्ञानं वा न प्रभवेत्। तर्ककुमारस्य स्वभावानुरूपा आधुनिका विद्वांसः स्वेच्छया यत्पठन्ति, तेन ध्येयमिदं कदापि न सेत्स्यति। नैतावदेव, किमपि ध्येयमेतादृशेन वाचनेन सकारणं सयुक्तिकञ्च न सिद्ध्येत्। सुनिश्चितमेतद् यत् यो हि चतुरः साधक आस्थापूर्वकम् अस्माकं भारतीय-संस्कृतेश्चतुर्विध-शाखानां सूक्ष्मविचारं करिष्यति, स एव स्वीयं ध्येयं सर्वथा शीघ्रं सुपुष्टं कर्तुं प्रभवति। संस्कृतेश्चतुर्विधाः शाखास्तु त्वं जानास्येव। यथा—चत्वारो वर्णाः, चत्वार आश्रमाः, चत्वारः पुरुषार्थाः, एषणाचतुष्टयम्, ऋणचतुष्टयम्, मुक्तिचतुष्टयम्, चतुर्विधा भक्ताः, कर्म-योग-भक्ति-ज्ञानरूपा चतुर्विधा मार्गाः, चत्वारो देहाः, साधनचतुष्टयम्, अवस्थाचतुष्टयं प्रभृतयः।

श्रद्धे ! अहं तु यथार्थमेवावगच्छामि यत्केवलं ध्येयस्याऽनिश्चय एव ते पतिदेवानामौदासीन्यस्य निमित्तम्। ते स्वभावतोऽश्रद्धधानाः, औदासीन्यस्य अपरमिदं निमित्तम्। किन्तु ध्येयस्य निश्चयेन सम-कालमेव तत्सम्बद्धा श्रद्धा स्वयमेवाविर्भवेत् ! सर्वतो महत्त्वस्य वस्तु इदं यत् त्वं तु मूर्तिमती श्रद्धादेवी तेषां पुरतः श्रद्धारूपेण समुपस्थिताऽसी'ति।

अन्धश्रद्धया प्रोक्तम्—'अस्ति ! ध्येयं तु विचारेणैव निश्चीयते, अस्याद्यावधि मह्यं स्मृतिरेव नागता। मज्जीवरूपेण पतत्त्रिणा स्वीयध्येयरूपस्य कुलायस्य अन्वेषणावसर एव नासादितः। कल्पना-पक्षाणां स्फुटनात् प्रागेव स आनन्दमयकोषस्य अन्तर्मुखतः महता प्रमोदेन नृत्यति। आस्तां तावत्, इदं तु कथय यदिदानीम् आवां किं कुर्वः ?'

प्रज्ञा प्रावोचत्—'त्वं तु ईश्वरस्य प्रेष्ठतमाऽसि। न च तादृशी अहम् ! तर्ककुमारस्य पन्थास्तु अस्मभ्यं कष्टप्रद एव प्रतीयते। यद् वृत्तम्, तद्वृत्तमेव। कदा-चिदयमपि 'ईशसङ्केत' एव स्यात्। किमप्यस्तु, अहं तु जाने यत् तर्ककुमारो रजस्तमसी निरुद्ध्य सत्त्ववृद्धये सत्त्वसंशुद्ध्यै सविशेषं प्रयतेत' इति।

सत्त्व-संशुद्धिरेव श्रद्धाया मूलम्। तदनुसारमेव ते स्वध्येयनिर्धारणाय तदनुसारिणः सद्गुरोरादेशेन समधिगतायाम् उपासनायां दृढनिष्ठामुत्पाद्य तस्या दृढीकरणाय, सनातनप्रथानुसारिणः सत्सङ्गस्य लाभोऽवश्यमेव प्राप्तव्यः। अन्यथा योगानन्दपादानां मुहुर्मुहुः दर्शनेन समाधानमासादनीयम्।

श्रद्धादेवि ! श्रद्धैव साधकस्य दिव्यशक्तिः। मूर्ति-मत्या श्रद्धया तर्ककुमारः श्रद्धावान् भवेत्, एतदर्थमेव योगानन्दपादैः युवयोर्विवाहः कारितः। यतो हि भगवता प्रोक्तम्—

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाऽधिगच्छति॥**
**अज्ञश्चाऽश्रद्दधानश्च संशयात्मा विनश्यति।**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः॥**

प्रज्ञा प्रोक्तवती—'श्रद्धे ! भगवत एतयोर्वचनयोः भाष्यरूपेण सन्तशिरोमणिभिः श्रीज्ञानेश्वर-महाराजैर्यत्

( शेषांशः आवरणतृतीयपृष्ठे )

श्री भारतधर्म-महामण्डलस्य मुखपत्रम्

# सूर्योदयः

भारतीय-संस्कृतेः प्रातिनिधिकं संस्कृतं मासिक-पत्रम्

•

सम्पादकः
श्री गोविन्द नरहरि वैजापुरकरः
एम० ए०, न्याय-वेदान्त-साहित्याचार्यः

•

## पञ्चचत्वारिंशद्वर्षीया लेख-सूची : १९६९

•

प्रकाशकः
श्री भारतधर्म-महामण्डलम्,
जगतगंज, वाराणसी

वार्षिकं मूल्यम्
रूप्यकपञ्चकम्

प्रत्यङ्कमूल्यम्
पञ्चाशत् पणाः

[ अत्र प्रथमं ससङ्केतं लेखकनाम, तदनु लेखनाम पृष्ठसंख्या चेति क्रमोऽवसेयः—सम्पादकः ]

[ तर्कस्य असमाधानतायाः मीमांसा—२८४ पृष्ठस्य शेषांशः

काव्यमयं व्याख्यानं कृतं तत्र श्रद्धाया शुद्धं सकलञ्च रूपं परिस्फुरति। क्षणं तत्काव्यमवधेहि। ते वदन्ति—

आत्मसुखाचिया गोडिया।
विटे जो कां सकळ विषयां।
जयाच्या ठायीं इंद्रियां।
मान नाहीं ॥
जो मनासि घाड न सांगे।
जो प्रकृतीचे केले नेघे॥
जो श्रद्धेचेनि संभोगे।
सुखिया जाहला ॥
या तेंचि गिवसित तें ज्ञान पावे।
निश्चित जयामाजी अचुंबित शांति असे॥
पेकें जया प्राणियाच्या ठायीं।
इया ज्ञानाची आवडी नाहीं॥
तयाचे जियालें म्हणों काई।
वरी मरण चांग ॥
शून्य जैसें गृह। कां चैतन्यें वीण देह।
तैसें जीवित ते सम्मोह। ज्ञानहीन॥
( ज्ञानेश्वरी, अ० ४. ओवी ८७-८९; ९३-९४ )

( अर्थात् यो हि आत्मसुखस्याभिरुच्या विषयान् परित्यजति, इन्द्रियाणां मनागपि आदरं न करोति, स्वात्मन इच्छां चञ्चलमनसे नावेदयति, प्रकृतेः स्वाभाविकीः वासनाः समुपेक्षते, स एव निर्विकल्पस्य शुद्धस्फुरणस्य सम्भोगे एव सुखीभवति। ज्ञान शान्तिश्च तमन्विष्य प्रयातः। एतद्विपरीतम् आत्म-ज्ञानविषयिणीमभिरुचिं यो नादधाति चेतसि, तज्जीवनं व्यर्थमेव। तदपेक्षया तन्मरणमेव श्रेयः। शून्यगृहमिव, जीवविरहितशव इव ज्ञानहीनस्य सम्मुग्धचित्तस्य जीवनं तिरस्करणीयमेव भवति।' )

सौभाग्यात् तर्ककुमार एतयोः भगिन्योरिमं संवादं शृण्वन्नासीत्। तदीये अनुतप्ते अन्तःकरणे तेन शीतल-जलायितम्। प्रज्ञाया ओजस्विन्या स्वानुभवसम्पन्नया च वाण्या अभिषिञ्चितं बोधामृतं तर्ककुमारस्य चेतःक्षेत्रं प्रविवेश। स दृष्ट्वेदं लज्जावनतोऽभवद् यदेतयोः अबलयोर्यादृशं श्रद्धा-सामर्थ्यं वर्तते, तस्य शतांशोऽपि मयि नास्ति। परमोत्साहितो भूत्वा स पीठादुदतिष्ठत्, प्रज्ञादेव्या मुखात् श्रुतस्य प्रत्येकशब्दस्य आस्थापूर्वकं चिन्तनं कारं कारं स्वीयस्य अध्ययन-कक्षस्य प्रदक्षिणां कर्तुं प्रारेभे।

पञ्जीकृत-संख्या—एल० १२७

# सूर्योदयस्य नियमाः

पत्र-संहिता

१. 'सूर्योदय'-मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते। धनादेश ( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अङ्कतः ) एव स्वीक्रियते। माध्यमिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत।

३. आंग्लमासस्य २६ दिनाङ्के 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या। प्रकाशनीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय-चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५. सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम्। तेन उत्तरलाभे मुधा विलम्बो न भवेत्।

विज्ञापन-शुल्कम्

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति। सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष-सौविध्याय पत्र-व्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठस्य | १००) रु० | साधारणस्य प्रत्यर्धपृष्ठस्य | ६०) रु० |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) रु० | आवरण-चतुर्थपृष्ठस्य | २००) रु० |
| आवरण-द्वितीय-तृतीयपृष्ठयोः | १५०) रु० | प्रथमावरणपृष्ठ विज्ञापनं न स्वीक्रियेत। | |

—सङ्केतः—

'सूर्योदय'-कार्यालयः, भारतधर्म-महामण्डलम्, जगतगंज, वाराणसी।

सम्पादकः, प्रकाशकः, मुद्रकश्च—गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी कैण्ट।
मुद्रण-स्थलम्—आनन्दकानन प्रेस, सी० के० ३६/२० वाराणसी।

